भास्करायं विद्महें महद्युतिकरायं धीमहि । तन्नों आदित्यः प्रचोदयाँत् । वैश्वानरायं विद्महें लालीलायं धीमहि । तन्नों अग्निः प्रचोदयाँत् । कात्यायनायं विद्महें कन्यकुमारिं धीमहि । तन्नों दुर्गिः प्रचोदयाँत् ॥

## दूर्वासूक्तम्

सहस्रपरंमा देवी शतमूंला शताङ्कुंरा । सर्वगं हरतु मे पापं दूर्वा दुंस्स्वप्ननाशंनी । काण्डाँत्काण्डात् प्ररोहंन्ती परुंषः परुषः परिं ।

एवानों दूर्वे प्रतंनु सहस्रेंण शतेनं च । या शतेनं प्रतनोषिं सहस्रेंण विरोहंसि । तस्याँस्ते देवीष्टके विधेमं हविषां वयम् । अश्वंक्रान्ते रंथक्रान्ते विष्णुक्राँन्ते वसुन्धंरा । शिरसां धारंयिष्यामि रक्षस्व माँं पदेपदे ॥

## मृत्तिकासूक्तम्

भूमि-र्धेनुर्धरणी लोंकधारिणी । उद्धृतांऽसि वंराहेण कृष्णेन शंत-बाहुना । मृत्तिकें हनं मे पापं यन्मया दुंष्कृतं कृतम् । मृत्तिकेँ ब्रह्मंदत्ताऽसि काश्यपेंनाभिमन्त्रिंता । मृत्तिकें देहिं मे पुष्टिं त्वयि संर्वं प्रतिष्ठिंतम् ॥

मृत्तिकेँ प्रतिष्ठिंते सर्वं तन्मे निंर्णुद मृत्तिंके । तयां हतेनं पापेन गच्छामि पंरमां गतिम् ॥

## शत्रुजयमन्त्राः

यतं इन्द्र भयांमहे ततों नो अभंयं कृधि । मघंवञ्छग्धि तव तन्नं ऊतये विद्विषो विमृधों जहि । स्वस्तिदा विशस्पतिं-र्वृत्रहा विमृधोंवशी । वृषेन्द्रंः पुर एंतु न-स्स्वस्तिदा अंभयङ्करः । स्वस्ति न इन्द्रों वृद्धश्रंवा-स्स्वस्ति नंः पूषा विश्ववेंदाः । स्वस्ति नस्ताक्ष्यो अरिंष्टनेमि-स्स्वस्ति नो बृहस्पतिं-र्दधातु । आपाँन्तमन्यु-स्तृपलंप्रभर्मा धुनि-श्शिमींवा-ञ्छरुंमाग्ं ऋजीषी । सोमो विश्वाँन्यतसावनांनि नार्वागिन्द्रं प्रतिमानांनिदेभुः ॥

ब्रह्मंजज्ञानं प्रंथमं पुरस्ता-द्विसींमत-स्सुरुचों वेन आंवः । सबुध्नियां उपमा अंस्य विष्ठा-स्सतश्च योनि-मसंतश्च विवंः । स्योना पृंथिवि भवां नृक्षरा निवेशंनी । यच्छां नश्शर्म सप्रथाः । गन्धद्वारां दुराधर्षां नित्यपुंष्टां करीषिणीँम् । ईश्वरीग्ं सर्व-भूतानां तामिहोपंह्वये श्रियम् । श्रीर्मे भजतु । अलक्ष्मीर्मे नश्यतु । विष्णुं-मुखा वै देवाश्छन्दोंभिरिमाल्लोका-नंनपजय्य-मभ्यंजयन् । महाग्ं इन्द्रो वज्रंबाहुष्षोडशी शर्म यच्छतु ॥

स्वस्ति नों मघवां करोतु हन्तुं पाप्मानं योंऽस्मान्द्वेष्टिं । सोमानग्ं स्वरंणं कृणुहि ब्रंह्मणस्पते । कक्षीवंन्तं य औंशिजम् । शरींरं यज्ञशमलं कुसींदं तस्मिन्थ्सीदतु योंऽस्मान्द्वेष्टिं । चरंणं पवित्रं वितंतं पुराणं येनं पूत स्तरंति दुष्कृतानिं । तेनं पवित्रेंण

शुद्धेन पूता अति पाप्मान-मराति तरेम । सजोषा इन्द्र सगणो मरुद्भिस्सोमं पिब वृत्रहञ्छूर विद्वान् । जहि शत्रूग्ं रप मृधो नुदस्वाथाभयं कृणुहि विश्वतोनः । सुमित्रान आप ओषधय-स्सन्तु दुर्मित्रास्तस्मै भूयासु-र्योस्मान् द्वेष्टि यं च वयं द्विष्मः । आपोहिष्ठा मयोभुवस्तान ऊर्जे दधातन ॥

महेरणाय चक्षसे । योव-श्शिवतमो रस-स्तस्य भाजयतेहनः । उशती-रिव मातरः । तस्मा अरंगमामवो यस्यक्षयाय जिन्वथ । आपो जनयथा च नः ॥

## अघमर्षणसूक्तम्

हिरण्यशृङ्गं वरुणं प्रपद्ये तीर्थं मे देहि याचितः । यन्मया भुक्त-मसाधूनां पापेभ्यश्च प्रतिग्रहः । यन्मे मनसा वाचा कर्मणा वा दुष्कृतं कृतम् । तन्न इन्द्रो वरुणो बृहस्पति-स्सविता च पुनन्तु पुनः पुनः । नमोऽग्नयेऽप्सुमते नम इन्द्राय नमो वरुणाय नमो वारुण्यै नमोऽद्भ्यः ॥

यदपां क्रूरं यदमेध्यं यदशान्तं तदपगच्छतात् । अत्याशना-दतीपाना-द्यच्च उग्रात् प्रतिग्रहात् । तन्नो वरुणो राजा पाणिनाह्यवमर्शतु । सोऽहमपापो विरजो निर्मुक्तो मुक्तकिल्बिषः । नाकस्य पृष्ठ-मारुह्य गच्छेद्ब्रह्मसलोकताम् । यश्चाप्सु वरुणस्स पुनात्वघमर्षणः । इमं मे गङ्गे यमुने सरस्वति शुतुद्रि-स्तोमग्ं

सचता परुष्णिया । असिक्निया मरुद्वृधे वितस्तयाऽऽर्जीकीये शृणुह्या सुषोमया । ऋतं च सत्यं चाभीद्धा-त्तपसोऽध्यजायत । ततो रात्रिरजायत तत-स्समुद्रो अर्णवः ॥

समुद्रादर्णवा दधि संवथ्सरो अजायत । अहोरात्राणि विदध-द्विश्वस्य मिषतो वशी । सूर्याचन्द्रमसौ धाता यथापूर्व-मकल्पयत् । दिवं च पृथिवीं चान्तरिक्ष-मथो सुवः । यत्पृथिव्याग् रजस्स्व-मान्तरिक्षे विरोदसी । इमाग् स्तदापो वरुणः पुनात्वघमर्षणः । पुनन्तु वसवः पुनातु वरुणः पुनात्वघमर्षणः । एष भूतस्य मध्ये भुवनस्य गोप्ता । एष पुण्यकृतां लोकानेष मृत्योर् हिरण्मयम् । द्यावापृथिव्योर्हिरण्मयग् सग्ग् श्रितग् सुवः ॥

सन-स्सुव-स्सग्ंशिशाधि । आर्द्रं ज्वलति ज्योति-रहमस्मि । ज्योतिर्ज्वलति ब्रह्माह-मस्मि । योऽह-मस्मि ब्रह्माहमस्मि । अहमस्मि ब्रह्माह-मस्मि । अहमेवाहं मां जुहोमि स्वाहा । अकार्यकार्यवकीर्णी स्तेनो भ्रूणहा गुरुतल्पगः । वरुणो ऽपामघमर्षण-स्तस्मात् पापात्प्रमुच्यते । रजोभूमि-स्त्वमाग् रोदयस्व प्रवदन्ति धीराः । आक्रान्थ्समुद्रः प्रथमे विधर्मञ्जनयन्प्रजा भुवनस्य राजा । वृषा पवित्रे अधिसानो अव्ये बृहथ्सोमो वावृधे सुवान इन्दुः ॥

## दुर्गासूक्तम् [2]

जातवेदसे सुनवाम सोम मरातीयतो निदहाति वेदः । स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरिताऽत्यग्निः । तामग्निवर्णां तपसा ज्वलन्तीं वैरोचनीं कर्मफलेषु जुष्टाम् । दुर्गां देवीग्ं शरणमहं प्रपद्ये सुतरसि तरसे नमः । अग्ने त्वं पारया नव्यो अस्मान्थ्स्वस्ति-भिरति दुर्गाणि विश्वा । पूश्च पृथ्वी बहुला न उर्वी भवा तोकाय तनयाय शंयोः । विश्वानि नो दुर्गहा जातवेद-स्सिन्धुं न नावा दुरिताऽतिपर्षि । अग्ने अत्रिवन्मनसा गृणानोऽस्माकं बोध्यविता तनूनाम् । पृतनाजितग्ं सहमानमुग्रमग्निग्ं हुवेम परमाथ्सधस्थात् । स नः पर्षदति दुर्गाणि विश्वा क्षामद्देवो अति दुरिताऽत्यग्निः । प्रत्नोषि कमीड्यो अध्वरेषु सनाच्च होता नव्यश्च सत्सि । स्वाञ्चाऽग्ने तनुवं पिप्रयस्वास्मभ्यं च सौभगमायजस्व । गोभिर्जुष्टमयुजो निषिक्तं तवेन्द्र विष्णो-रनुसंचरेम । नाकस्य पृष्ठमभि संवसानो वैष्णवीं लोक इह मादयन्ताम् ॥

[ ॐ कात्यायनाय विद्महे कन्यकुमारि धीमहि । तन्नो दुर्गिः प्रचोदयात् ॥ ]

## व्याहृति-होममन्त्राः [3-5]

भू-रन्न-मग्नये पृथिव्यै स्वाहा भुवोऽन्नं वायवेऽन्तरिक्षाय

स्वाहा सुवरन्नं-मादित्याय दिवे स्वाहा भू-र्भुवस्सुव-रन्नं चन्द्रमंसे दिग्भ्य-स्स्वाहा नमों देवेभ्यं-स्स्वधा पितृभ्यो भू-र्भुवस्सुव-रन्नमोम् ॥

भू-रग्नयें पृथिव्यै स्वाहा भुवों वायवेऽन्तरिंक्षाय स्वाहा सुवंरादित्याय दिवे स्वाहा भू-र्भुवस्सुवं-श्चन्द्रमंसे दिग्भ्य-स्स्वाहा नमों देवेभ्यं-स्स्वधा पितृभ्यो भू-र्भुवस्सुव-रग्न ओम् ॥

भू-रग्नयें च पृथिव्यै चं महते च स्वाहा भुवों वायवें चान्तरिंक्षाय च महते च स्वाहा सुवंरादित्याय च दिवे चं महते च स्वाहा भू-र्भुवस्सुवं-श्चन्द्रमंसे च नक्षंत्रेभ्यश्च दिग्भ्यश्चं महते च स्वाहा नमों देवेभ्यं-स्स्वधा पितृभ्यो भू-र्भुवस्सुव-र्महरोम् ॥

## ज्ञानप्राप्त्यर्था-होममन्त्राः [6-7]

पाहि नो अग्न एनंसे स्वाहा । पाहि नो विश्ववेदंसे स्वाहा । यज्ञं पाहि विभावंसो स्वाहा । सर्वं पाहि शतक्रंतो स्वाहा ॥

पाहि नों अग्न एकंया । पाह्युत द्वितीयंया । पाह्यूर्जं तृतीयंया । पाहि गीर्भिश्चं तसृभिं-र्वसो स्वाहाँ ॥

## वेदाविस्मरणाय जपमन्त्राः [8-9]

यश्छन्दंसा-मृषभो विश्वरूंप-श्छन्दोंभ्य-श्छन्दाग्ं-स्याविवेशं । सचाग्ं शिक्यः पुरो वाचोंपनिष-दिन्द्रों ज्येष्ठ इंन्द्रियाय ऋषिंभ्यो नमों देवेभ्यं-स्स्वधा पितृभ्यो भू-र्भुवस्सुव-श्छन्द ओम् ॥

नमो ब्रह्मणे धारणं मे अस्त्वनिराकरणं धारयिता भूयासं कर्णयो-श्श्रुतं मा च्योढ्वं ममामुष्य ओम् ॥

**तपः प्रशंसा** [10]

ऋतं तप-स्सत्यं तप-श्श्रुतं तप-श्शान्तं तपो दम-स्तप-श्शम-स्तपो दानं तपो यज्ञं तपो भू-र्भुवस्सुव-र्ब्रह्मैतदुपास्स्यैतत्तपः ॥

**विहिताचरणप्रशंसा निषिद्धाचरणनिन्दा च** [11]

यथा वृक्षस्य संपुष्पितस्य दूरा-द्गन्धो वात्येवं पुण्यस्य कर्मणो दूरा-द्गन्धो वाति यथाऽसिधारां कर्तेऽवहिता-मवक्रामे यद्युवे युवे हवा विह्वयिष्यामि कर्तं पतिष्यामीत्येव-ममृता-दात्मानं जुगुप्सेत् ॥

**दहरविद्या** [12]

अणो-रणीयान्महतो महीया-नात्मा गुहायां निहितोऽस्य जन्तोः। तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशम्। सप्त प्राणाः प्रभवन्ति तस्मा-थ्सप्तार्चिषस्समिधः-स्सप्त जिह्वाः। सप्त इमे लोका येषु चरन्ति प्राणा गुहाशयान्निहिता-स्सप्त सप्त। अतस्समुद्रा गिरयश्च सर्वेऽस्माथ्स्यन्दन्ते सिन्धव-स्सर्वरूपाः। अतश्च विश्वा ओषधयो रसाच्च येनैष भूत-स्तिष्ठत्यन्तरात्मा। ब्रह्मा देवानां पदवीः कवीना-मृषि-र्विप्राणां महिषो मृगाणाम्। श्येनो गृध्राणाग् स्वधिति-र्वनानाग् सोमः पवित्रमत्येति रेभन्न्।

अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीगं सरूपाम्। अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः ॥

हगंस-श्शुचिष-द्वसु-रन्तरिक्षस-द्धोता वेदिषदतिथिर्दुरोणसत्। नृष-द्वरस-दृतस-द्व्योमस-दब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत् । घृतं मिमिक्षिरे घृतमस्य योनि-र्घृते श्रितो घृत-मुवस्य धाम । अनुष्वधमावह मादयस्व स्वाहाकृतं वृषभ वक्षि हव्यम् । समुद्रा-दूर्मिर्मधुमागं उदार-दुपागंशुना सममृतत्व-मानट्। घृतस्य नाम गुह्यं यदस्ति जिह्वा देवाना-ममृतस्य-नाभिः । वयं नाम प्रब्रवामा घृतेनास्मिन् यज्ञे धारयामा नमोभिः । उप ब्रह्मा शृणवच्छस्यमानं चतुश्शृङ्गोऽवमीद्गौर एतत्। चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य। त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यागं आविवेश ॥

त्रिधा हितं पणिभि-र्गुह्यमानं गवि देवासो घृतमन्वविन्दन्। इन्द्र एकगं सूर्य एकं जजान वेना-देकगं स्वधया निष्टतक्षुः। यो देवानां प्रथमं पुरस्ताद्विश्वाधियो रुद्रो महर्षिः। हिरण्यगर्भं पश्यत जायमानगं सनो देव-श्शुभया स्मृत्या संयुनक्तु । यस्मात्परं नापरमस्ति किंचि-द्यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित् । वृक्ष इव स्तब्धो दिवि तिष्ठ-त्येकस्तेनेदं पूर्णं पुरुषेण सर्वम्। न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्व-मानशुः । परेण

नाकं निहितं गुहायां विभ्राजदेतद्यतयो विशन्ति । वेदान्तविज्ञान-सुनिश्चितार्था-स्संन्यास योगाद्यतयश्शुद्धसत्त्वाः । ते ब्रह्मलोकेतु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे । दहं विपापं परमेऽश्मभूतं यत्पुण्डरीकं पुरमध्यसग्गंस्थम् । तत्रापि दहं गगनं विशोक-स्तस्मिन् यदन्तरस्त-दुपासितव्यम् । यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः । तस्य प्रकृति-लीनस्य यः परस्स महेश्वरः ॥

## नारायणसूक्तम् [13]

सहस्रशीर्षं देवं विश्वाक्षं विश्वशंम्भुवम् । विश्वं नारायणं देवमक्षरं परमं पदम् । विश्वतः परमान्नित्यं विश्वं नारायणग्ं हरिम् । विश्वमेवेदं पुरुष-स्तद्विश्व-मुपजीवति । पतिं विश्वस्यात्मेश्वरग्ं शाश्वतग्ं शिव-मच्युतम् । नारायणं महाज्ञेयं विश्वात्मानं परायणम् । नारायण परो ज्योतिरात्मा नारायणः परः । नारायण परं ब्रह्म तत्त्वं नारायणः परः । नारायणपरो ध्याता ध्यानं नारायणः परः । यच्च किञ्चिज्जगथ्सर्वं दृश्यते श्रूयतेऽपि वा ॥

अन्तर्बहिश्च तत्सर्वं व्याप्य नारायण-स्स्थितः । अनन्तमव्ययं कविग्ं समुद्रेऽन्तं विश्वशम्भुवम् । पद्मकोश-प्रतीकाशग्ं हृदयं चाप्यधोमुखम् । अधो निष्ट्या वितस्त्यान्ते नाभ्यामुपरि तिष्ठति । ज्वालमालाकुलं भाती विश्वस्यायतनं महत् । सन्ततग्ं शिलाभिस्तु

लम्बत्याकोशसन्निभम् । तस्यान्ते सुषिरग्ं सूक्ष्मं तस्मिन्थ्सर्वं प्रतिष्ठितम् । तस्य मध्ये महानग्नि-र्विश्वार्चि-र्विश्वतोमुखः । सोऽग्रभुग्विभजन्तिष्ठ-न्नाहारमजरः कविः । तिर्यगूर्ध्व-मधश्शायी रश्मयस्तस्य सन्तता । सन्तापयति स्वं देहमापादतलमस्तकः । तस्य मध्ये वह्निशिखा अणीयोर्ध्वा व्यवस्थितः । नीलतो-यदमध्यस्था-द्विद्युल्लेखेव भास्वरा । नीवारशूकवत्तन्वी पीता भास्वत्यणूपमा । तस्याः-श्शिखाया मध्ये परमात्मा व्यवस्थितः । स ब्रह्म स शिव-स्स हरि-स्सेन्द्र-स्सोऽक्षरः परम-स्स्वराट् ॥

## आदित्यमण्डले परब्रह्मोपासनम् [14]

आदित्यो वा एष एतन्मण्डलं तपति तत्रता ऋचस्तदृचा मण्डलग्ं स ऋचां लोकोऽथ य एष एतस्मिन्मण्डलेऽर्चिर्दीप्यते तानि सामानि स साम्नां लोकोऽथ य एष एतस्मिन्मण्डलेऽर्चिषि पुरुष-स्तानि यजूग्ंषि स यजुषा मण्डलग्ं स यजुषां लोक-स्सैषा त्रय्येव विद्या तपति य एषोऽन्तरादित्ये हिरण्मयः पुरुषः ॥

## आदित्यपुरुषस्य सर्वात्मकत्वप्रदर्शनम् [15]

आदित्यो वै तेज ओजो बलं यश-श्चक्षु-श्श्रोत्रमात्मा मनो मन्यु-र्मनुर्मृत्यु-स्सत्यो मित्रो वायु राकाशः प्राणो लोकपालः कः किं कं तथ्सत्यमन्न-ममृतो जीवो विश्वः कतम-स्स्वयम्भु ब्रह्मैत-

दमृत एष पुरुष एष भूताना-मधिपति-र्ब्रह्मण-स्सायुज्यगं सलोकता-माप्नोत्येतासामेव देवतानागं सायुज्यगं सार्ष्टितागं समानलोकता-माप्नोति य एवं वेदे-त्युपनिषत् ॥

**शिवोपासन-मन्त्राः** [16]

निधनपतये नमः । निधनपतान्तिकाय नमः । ऊर्ध्वाय नमः । ऊर्ध्वलिङ्गाय नमः । हिरण्याय नमः । हिरण्यलिङ्गाय नमः । सुवर्णाय नमः । सुवर्णलिङ्गाय नमः । दिव्याय नमः । दिव्यलिङ्गाय नमः । भवाय नमः । भवलिङ्गाय नमः । शर्वाय नमः । शर्वलिङ्गाय नमः । शिवाय नमः । शिवलिङ्गाय नमः । ज्वलाय नमः । ज्वललिङ्गाय नमः । आत्माय नमः । आत्मलिङ्गाय नमः । परमाय नमः । परमलिङ्गाय नमः । एतथ्सोमस्य सूर्यस्य सर्व-लिङ्गगं स्थापयति पाणिमन्त्रं पवित्रम् ॥

**पश्चिमवक्त्र-प्रतिपादकमन्त्रः** [17]

सद्योजातं प्रपद्यामि सद्योजाताय वै नमो नमः । भवे भवे नातिभवे भवस्व माम् । भवोद्भवाय नमः ॥

**उत्तरवक्त्र-प्रतिपादकमन्त्रः** [18]

वामदेवाय नमो ज्येष्ठाय नम-श्श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय नम-स्सर्व-भूतदमनाय नमो मनोन्मनाय नमः ॥

## दक्षिणवक्त्र-प्रतिपादकमन्त्रः [19]

अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः। सर्वेभ्य-स्सर्वशर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः ॥

## प्राग्वक्त्र-प्रतिपादकमन्त्रः [20]

तत्पुरुषाय विद्महे महादेवाय धीमहि। तन्नो रुद्रः प्रचोदयात् ॥

## ऊर्ध्ववक्त्र-प्रतिपादकमन्त्रः [21]

ईशान-स्सर्व-विद्याना-मीश्वर-स्सर्व-भूतानां ब्रह्माऽधिपति-र्ब्रह्मणोऽधिपति-र्ब्रह्मा शिवो मे अस्तु सदाशिवोम् ॥

## नमस्कारार्थ-मन्त्राः [22-25]

नमो हिरण्यबाहवे हिरण्यवर्णाय हिरण्यरूपाय हिरण्यपतये ऽम्बिकापतय उमापतये पशुपतये नमो नमः ॥

ऋतग् सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् । ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमो नमः ॥

सर्वो वै रुद्र-स्तस्मै रुद्राय नमो अस्तु। पुरुषो वै रुद्र-स्सन्महो नमो नमः। विश्वं भूतं भुवनं चित्रं बहुधा जातं जायमानं च यत्। सर्वो ह्येष रुद्र-स्तस्मै रुद्राय नमो अस्तु ॥

कद्रुद्राय प्रचेतसे मीढुष्टमाय तव्यसे। वो चेम शन्तमग् हृदे। सर्वो ह्येष रुद्र-स्तस्मै रुद्राय नमो अस्तु ॥

**अग्निहोत्रहवण्याः उपयुक्तस्य वृक्षविशेषस्याभिधानम्** [26-27]

यस्य वै कंङ्कत्यग्निहोत्रहवंणी भवति प्रत्येवा-स्याहुंतय-स्तिष्ठन्त्यथो प्रतिंष्ठित्यै ॥ कृणुष्व पाज इति पञ्चं ॥

**भूदेवताकमन्त्रः** [28]

अदिंति-र्देवा गंन्धर्वा मंनुष्याः पितरोऽसुंरा-स्तेषागं सर्वभूतानां माता मेदिनीं महता मही सांवित्री गांयत्री जगंत्युर्वी पृथ्वी बंहुला विश्वां भूता कंतमा काया सा सत्येत्यमृतेतिं वसिष्ठः ॥

**सर्वादेवता आपः** [29]

आपो वा इदगं सर्वं विश्वां भूतान्यापंः प्राणा वा आपंः पशव आपोऽन्न-मापोऽमृंत-मापं-स्सम्राडापों विराडापं-स्स्वराडाप-श्छन्दागंस्यापो ज्योतीगं-ष्यापो यजूगं-ष्यापं-स्सत्यमाप-स्सर्वा देवता आपो भूर्भुव-स्सुव-राप ओम् ॥

**सन्ध्यावन्दनमन्त्राः** [30-32]

आपंः पुनन्तु पृथिवीं पृंथिवी पूता पुंनातु माम् । पुनन्तु ब्रह्मंणस्पति-र्ब्रह्मंपूता पुंनातु माम् । यदुच्छिंष्ट-मभोंज्यं यद्वां दुश्चरिंतं मम । सर्वं पुनन्तु मामापोंऽसतां चं प्रतिग्रहगं स्वाहां ॥

अग्निश्च मा मन्युश्च मन्युपतयश्च मन्युंकृतेभ्यः । पापेभ्यों रक्षन्ताम् । यदह्ना पापंमकार्षम् । मनसा वाचां हस्ताभ्याम् ।

पद्भ्यामुदरेण शिश्ना । अहस्त-दवलुम्पतु । यत्किञ्च दुरितं मयि । इदमहं माममृतयोनौ । सत्ये ज्योतिषि जुहोमि स्वाहा ॥

सूर्यश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः । पापेभ्यो रक्षन्ताम् । यद्रात्रिया पापमकार्षम् । मनसा वाचा हस्ताभ्याम् । पद्भ्यामुदरेण शिश्ना । रात्रि-स्तदवलुम्पतु । यत्किञ्च दुरितं मयि । इदमहं माममृतयोनौ । सूर्ये ज्योतिषि जुहोमि स्वाहा ॥

**प्रणवस्य ऋष्यादिविवरणम्** [33]

ओमित्येकाक्षरं ब्रह्म । अग्निर्देवता ब्रह्म इत्यार्षम् । गायत्रं छन्दं परमात्मं सरूपम् । सायुज्यं विनियोगम् ॥

**गायत्र्यावाहनमन्त्राः** [34-35]

आयातु वरदा देवी अक्षरं ब्रह्मसंमितम् । गायत्री छन्दसां मातेदं ब्रह्म जुषस्व मे । यदह्नात्कुरुते पापं तदह्नात्प्रतिमुच्यते । यद्रात्रियात्कुरुते पापं तद्रात्रियात्प्रतिमुच्यते । सर्व वर्णे महादेवि सन्ध्याविद्ये सरस्वति ॥

ओजोऽसि सहोऽसि बलमसि भ्राजोऽसि देवानां धामनामासि विश्वमसि विश्वायु-स्सर्वमसि सर्वायु-रभिभूरों गायत्री-मावाहयामि सावित्री-मावाहयामि सरस्वती-मावाहयामि छन्दर्षी-नावाहयामि श्रिय-मावाहयामि गायत्रिया गायत्रीच्छन्दो विश्वामित्रऋषिस्सविता देवताऽग्निर्मुखं ब्रह्मा शिरो विष्णुर्-हृदयग् रुद्र-श्शिखा

पृथिवीयोनिः प्राणापानव्यानोदानसमाना सप्राणा श्वेतवर्णा साङ्ख्यायनसगोत्रा गायत्री चतुर्विंगंशत्यक्षरा त्रिपदा षट्कुक्षिः पञ्च-शीर्षोपनयने विनियोग ओं भूः। ओं भुवः। ओगं सुवः। ओं महः। ओं जनः। ओं तपः। ओगं सत्यम्। ओं तथ्सवितु-र्वरेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात्। ओमापो ज्योती रसोऽमृतं ब्रह्म भू-र्भुव-स्सुव-रोम् ॥

**गायत्री-उपस्थानमन्त्राः** [36]

उत्तमे शिखरे जाते भूम्यां पर्वतमूर्धनि। ब्राह्मणेभ्योऽभ्यनु ज्ञाता गच्छदेवि यथासुखम्। स्तुतो मया वरदा वेदमाता प्रचोदयन्ती पवने द्विजाता। आयुः पृथिव्यां द्रविणं ब्रह्मवर्चसं मह्यं दत्वा प्रजातुं ब्रह्मलोकम् ॥

**आदित्यदेवतामन्त्रः** [37]

घृणि-स्सूर्य आदित्यो न प्रभा वात्यक्षरम्। मधुक्षरन्ति तद्रसम्। सत्यं वै तद्रस-मापो ज्योती रसोऽमृतं ब्रह्म भू-र्भुव-स्सुव-रोम् ॥

**त्रिसुपर्णमन्त्राः** [38-40]

ब्रह्म-मेतु माम्। मधु-मेतु माम्। ब्रह्म-मेव मधु-मेतु माम्। यास्ते सोम प्रजावथ्सोऽभिसो अहम्। दुष्वप्नहन् दुरुष्षह। यास्ते सोम प्राणाग् स्ताञ्जुहोमि। त्रिसुपर्ण-मयाचितं ब्राह्मणाय दद्यात्। ब्रह्महत्यां वा एते घ्नन्ति। ये ब्राह्मणा-स्त्रिसुपर्णं पठन्ति। ते सोमं प्राप्नुवन्ति। आसहस्रात् पङ्क्तिं पुनन्ति। ओम् ॥

ब्रह्म मेधयाँ। मधु मेधयाँ। ब्रह्ममेव मधु मेधयाँ। अद्या नो देव सवितः प्रजावथ्सावी-स्सौभगम्। परा दुष्वप्नियगं सुव। विश्वानि देव सवित-र्दुरितानि परासुव। यद्भद्रं तन्म आसुव। मधुवाता ऋतायते मधुक्षरन्ति सिन्धवः। माध्वीँर्न-स्सन्त्वोषधीः। मधु नक्तमुतोषसि मधुमत्पार्थिवगं रजः। मधुद्यौरस्तु नः पिता। मधुमान्नो वनस्पति-र्मधुमागं अस्तु सूर्यः। माध्वीर्गावो भवन्तु नः॥ य इमं त्रिसुपर्ण-मयाचितं ब्राह्मणाय दद्यात्। भ्रूणहत्यां वा एते घ्नन्ति। ये ब्राँह्मणा-स्त्रिसुपर्णं पठन्ति। ते सोमं प्राप्नुवन्ति। आसहस्रात् पङ्क्तिं पुनन्ति। ओम्॥

ब्रह्म मेधवाँ। मधु मेधवाँ। ब्रह्म-मेव मधु मेधवाँ। ब्रह्मा देवानाँ पदवीः कवीना-मृषि-र्विप्राणां महिषो मृगाणाँम्। श्येनो गृद्ध्राणाग् स्वधिति-र्वनानागं सोमः पवित्रमत्येति रेभन्न्। हगंस-श्शुचिष-द्वसु-रन्तरिक्षस-द्धोता वेदिष-दतिथिर्दुरोणसत्। नृष-द्वरस-दृतस-द्व्योमस-दब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत्। ऋचे त्वा रुचे त्वा समि-थ्स्रवन्ति सरितो न धेनाँः। अन्तर्हृदा मनसा पूयमानाः। घृतस्य धारा अभिचाकशीमि। हिरण्ययो वेतसो मध्य आसाम्। तस्मिन्थ्सुपर्णो मधुकृत् कुलायी भज-न्नास्ते मधु-देवताँभ्यः। तस्यासते हरय-स्सप्ततीरँ स्वधां दुहाना अमृतस्य धाराँम्। य इदं त्रिसुपर्ण-मयाचितं ब्राह्मणाय दद्यात्। वीरहत्यां

वा एते घ्नन्ति । ये ब्राह्मणा-स्त्रिसुपर्णं पठन्ति । ते सोमं प्राप्नुवन्ति । आसहस्रात् पङ्क्तिं पुनन्ति । ओम् ॥

## मेधासूक्तम् [41-44]

मेधादेवी जुषमाणा न आगा-द्विश्वाची भद्रा सुमनस्यमाना । त्वया जुष्टा नुदमाना दुरुक्तान् बृहद्वदेम विदथे सुवीराः । त्वया जुष्ट ऋषि-र्भवति देवि त्वया ब्रह्माऽऽगतश्री-रुत त्वया । त्वया जुष्ट-श्चित्रं विन्दते वसु सानो जुषस्व द्रविणो न मेधे ॥

मेधां म इन्द्रो ददातु मेधां देवी सरस्वती । मेधां मे अश्विनावुभा-वाधत्तां पुष्करस्रजा । अप्सरासु च या मेधा गन्धर्वेषु च यन्मनः । दैवीं मेधा सरस्वती सा मां मेधा सुरभि-र्जुषताग् स्वाहा ॥

आमां मेधा सुरभि-र्विश्वरूपा हिरण्यवर्णा जगती जगम्या । ऊर्जस्वती पयसा पिन्वमाना सा मां मेधा सुप्रतीका जुषन्ताम् ॥

मयि मेधां मयि प्रजां मय्यग्निस्तेजो दधातु मयि मेधां मयि प्रजां मयीन्द्र इन्द्रियं दधातु मयि मेधां मयि प्रजां मयि सूर्यो भ्राजो दधातु ॥

## मृत्युनिवारणमन्त्राः [45-53]

अपैतु मृत्यु-रमृतं न आगन्वैवस्वतो नो अभयं कृणोतु । पर्णं वनस्पते-रिवाभिनः-श्शीयताग् रयि-स्सचता-न्न-श्शचीपतिः ॥

परं मृत्यो अनुपरेहि पन्थां यस्ते स्व इतरो देवयानात्। चक्षुष्मते शृण्वते ते ब्रवीमि मा नः प्रजागं रीरिषो मोत वीरान् ॥

वातं प्राणं मनसाऽन्वारभामहे प्रजापतिं यो भुवनस्य गोपाः। स नो मृत्योस्त्रायतां पात्वगंहसो ज्योग्जीवा जरा-मशीमहि ॥

अमुत्र भूया-दध यद्यमस्य बृहस्पते अभिशस्तेरमुञ्चः। प्रत्यौहतामश्विना मृत्यु-मस्मा-द्देवानां-मग्ने भिषजा शचीभिः ॥

हरिगं हरन्त-मनुयन्ति देवा विश्वस्येशानं वृषभं मतीनाम् । ब्रह्म सरूप-मनुमेद-मागा-दयनं मा विवधी-र्विक्रमस्व ॥

शल्कैरग्नि-मिन्धान उभौ लोकौ सनेमहम् । उभयोर्लोकयोर् ऋध्वाऽति मृत्युं तराम्यहम् ॥

मा छिदो मृत्यो मा वधीर्मा मे बलं विवृहो मा प्रमोषीः । प्रजां मा मे रीरिष आयु-रुग्र नृचक्षसं त्वा हविषा विधेम ॥

मा नो महान्तमुत मा नो अर्भकं मा न उक्षन्तमुत मा न उक्षितम् । मा नो वधीः पितरं मोत मातरं प्रिया मा नस्तनुवो रुद्र रीरिषः ॥

मा नस्तोके तनये मा न आयुषि मा नो गोषु मा नो अश्वेषु रीरिषः । वीरान्मा नो रुद्र भामितो वधीर्-हविष्मन्तो नमसा विधेम ते ॥

### प्रजापतिप्रार्थनामन्त्रः [54]

प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परिता बभूव । यत्कामास्ते जुहुमस्तन्नो अस्तु वयग् स्याम पतयो रयीणाम् ॥

### इन्द्रप्रार्थनामन्त्रः [55]

स्वस्तिदा विशस्पतिं-र्वृत्रहा विमृधो वशी । वृषेन्द्रः पुर एतु नस्स्वस्तिदा अभयङ्करः ॥

### मृत्युञ्जयमन्त्राः [56-58]

त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृतात् ॥

ये ते सहस्र-मयुतं पाशा मृत्यो मर्त्याय हन्तवे । तान् यज्ञस्य मायया सर्वा-नवयजामहे ॥ मृत्यवे स्वाहा मृत्यवे स्वाहा ॥

### पापनिवारका मन्त्राः [59]

देवकृतस्यैनसोऽवयजन-मसि स्वाहा । मनुष्य-कृतस्यैनसो ऽवयजन-मसि स्वाहा । पितृकृतस्यैनसोऽवयजन-मसि स्वाहा । आत्मकृतस्यैनसोऽवयजन-मसि स्वाहा । अन्यकृतस्यैनसो ऽवयजन-मसि स्वाहा । अस्मत्कृतस्यैनसोऽवयजन-मसि स्वाहा । यद्दिवा च नक्तं चैनश्चकृम तस्यावयजन-मसि स्वाहा । यथ्स्वपन्तश्च जाग्रतश्चैनश्चकृम तस्यावयजन-मसि स्वाहा ।

यथ्सुषुप्तश्च जाग्रतश्चैनश्चकृम तस्यावयजन-मसि स्वाहा ।
यद्विद्वाग्ंस-श्चाविद्वाग्ंस-श्चैनश्चकृम तस्यावयजन-मसि स्वाहा ।
एनस एनसोऽवयजन-मसि स्वाहा ॥

**वसुप्रार्थनामन्त्रः** [60]

यद्वो देवाश्चकृम जिह्वया गुरुमनसो वा प्रयुती देव हेडनम् ।
अरावा यो नो अभिदुच्छुनायते तस्मिन्तदेनो वसवो निधेतन
स्वाहा ॥

**कामोऽकार्षीत्-मन्युरकार्षीत् मन्त्रः** [61-62]

कामोऽकार्षीन्नमो नमः । कामोऽकार्षीत्कामः करोति नाहं
करोमि कामः कर्ता नाहं कर्ता कामः कारयिता नाहं कारयिता एष
ते काम कामाय स्वाहा ॥

मन्यु-रकार्षीन्नमो नमः । मन्यु-रकार्षीन्मन्युः करोति नाहं
करोमि मन्युः कर्ता नाहं कर्ता मन्युः कारयिता नाहं कारयिता एष
ते मन्यो मन्यवे स्वाहा ॥

**विरजाहोममन्त्राः** [63-66]

तिलाञ्जुहोमि सरसाग्ं सपिष्टान् गन्धार मम चित्ते रमन्तु स्वाहा ।
गावो हिरण्यं धन-मन्नपानग्ं सर्वेषाग् श्रियै स्वाहा । श्रियं च
लक्ष्मिं च पुष्टिं च कीर्तिं चानृण्यताम् । ब्रह्मण्यं बहुपुत्रताम् ।
श्रद्धामेधे प्रजा-स्सन्ददातु स्वाहा ॥

तिलाः कृष्णा-स्तिला-श्श्वेता-स्तिला-स्सौम्या वशानुगाः ।

तिलाः पुनन्तु मे पापं यत्किञ्चिद्दुरितं मयि स्वाहा । चोरस्यान्नं नवश्राद्धं ब्रह्महा गुरुतल्पगः । गोस्तेयग्ं सुरापानं भ्रूणहत्या तिला शान्तिग्ं शमयन्तु स्वाहा । श्रीश्च लक्ष्मीश्च पुष्टीश्च कीर्तिं चानृण्यताम् । ब्रह्मण्यं बहुपुत्रताम् । श्रद्धामेधे प्रज्ञातु जातवेद-स्सन्ददातु स्वाहा ॥

प्राणापान-व्यानोदान-समाना मे शुध्यन्तां ज्योति-रहं विरजा विपाप्मा भूयासग्ं स्वाहा । वाङ्मन-श्चक्षुश्श्रोत्र-जिह्वाघ्राण-रेतो-बुद्ध्याकूति-स्संकल्पा मे शुध्यन्तां ज्योति-रहं विरजा विपाप्मा भूयासग्ं स्वाहा । त्वक्चर्म-मांस-रुधिर-मेदो-मज्जा-स्नायवो ऽस्थीनि मे शुध्यन्तां ज्योति-रहं विरजा विपाप्मा भूयासग्ं स्वाहा । शिरःपाणि-पाद-पार्श्व-पृष्ठोरूदर-जङ्घ-शिश्नोपस्थ-पायवो मे शुध्यन्तां ज्योति-रहं विरजा विपाप्मा भूयासग्ं स्वाहा । उत्तिष्ठ पुरुष हरितपिङ्गल लोहिताक्षि देहि देहि ददापयिता मे शुध्यन्तां ज्योति-रहं विरजा विपाप्मा भूयासग्ं स्वाहा ॥

पृथिव्याप-स्तेजो-वायु-राकाशा मे शुध्यन्तां ज्योति-रहं विरजा विपाप्मा भूयासग्ं स्वाहा । शब्द-स्पर्श-रूप-रस-गन्धा मे शुध्यन्तां ज्योति-रहं विरजा विपाप्मा भूयासग्ं स्वाहा । मनो-वाक्काय-कर्माणि मे शुध्यन्तां ज्योति-रहं विरजा विपाप्मा भूयासग्ं स्वाहा । अव्यक्तभावै-रहंकारै-र्ज्योति-रहं विरजा

विपाप्मा भूयासग्ग् स्वाहा । आत्मा मे शुध्यन्तां ज्योति-रहं विरजा विपाप्मा भूयासग्ग् स्वाहा । अन्तरात्मा मे शुध्यन्तां ज्योति-रहं विरजा विपाप्मा भूयासग्ग् स्वाहा । परमात्मा मे शुध्यन्तां ज्योति-रहं विरजा विपाप्मा भूयासग्ग् स्वाहा । क्षुधे स्वाहा । क्षुत्पिपासाय स्वाहा । विविट्ट्यै स्वाहा । ऋग्विधानाय स्वाहा । कषोत्काय स्वाहा । क्षुत्पिपासामलं ज्येष्ठा-मलक्ष्मी-र्नाशयाम्यहम् । अभूति-मसमृद्धिं च सर्वा-न्निर्णुद मे पाप्मानग्ग् स्वाहा । अन्नमय-प्राणमय-मनोमय-विज्ञानमय-मानन्दमय-मात्मा मे शुध्यन्तां ज्योति-रहं विरजा विपाप्मा भूयासग्ग् स्वाहा ॥

**वैश्वदेवमन्त्राः** [67-68]

अग्नये स्वाहा । विश्वेभ्यो देवेभ्य-स्स्वाहा । ध्रुवाय भूमाय स्वाहा । ध्रुवक्षितये स्वाहा । अच्युतक्षितये स्वाहा । अग्नये स्विष्टकृते स्वाहा । धर्माय स्वाहा । अधर्माय स्वाहा । अद्भ्य-स्स्वाहा । ओषधिवनस्पतिभ्य-स्स्वाहा ॥

रक्षोदेवजनेभ्य-स्स्वाहा । गृह्याभ्य-स्स्वाहा । अवसानेभ्य-स्स्वाहा । अवसानपतिभ्य-स्स्वाहा । सर्व-भूतेभ्य-स्स्वाहा । कामाय स्वाहा । अन्तरिक्षाय स्वाहा । यदेजति जगति यच्च चेष्टति नाम्नो भागोऽयं नाम्ने स्वाहा । पृथिव्यै स्वाहा । अन्तरिक्षाय

स्वाहा ॥

दिवे स्वाहा । सूर्याय स्वाहा । चन्द्रमसे स्वाहा । नक्षत्रेभ्य-स्स्वाहा । इन्द्राय स्वाहा । बृहस्पतये स्वाहा । प्रजापतये स्वाहा । ब्रह्मणे स्वाहा । स्वधा पितृभ्य-स्स्वाहा । नमो रुद्राय पशुपतये स्वाहा ॥

देवेभ्य-स्स्वाहा । पितृभ्य-स्स्वधाऽस्तु । भूतेभ्यो नमः । मनुष्येभ्यो हन्ता । प्रजापतये स्वाहा । परमेष्ठिने स्वाहा । यथा कूप-श्शतधार-स्सहस्रधारो अक्षितः । एवा मे अस्तु धान्यगं सहस्रधारमक्षितम् । धनधान्यै स्वाहा । ये भूताः प्रचरन्ति दिवानक्तं बलि-मिच्छन्तो वितुदस्य प्रेष्याः । तेभ्यो बलिं पुष्टिकामो हरामि मयि पुष्टिं पुष्टिपति-र्दधातु स्वाहा ॥

ओं तद्ब्रह्म । ओं तद्वायुः । ओं तदात्मा । ओं तथ्सत्यम् । ओं तथ्सर्वम् । ओं तत्पुरो-र्नमः । अन्तश्चरति भूतेषु गुहायां विश्व मूर्तिषु । त्वं यज्ञस्त्वं वषट्कार-स्त्वमिन्द्र-स्त्वगं रुद्र-स्त्वं विष्णु-स्त्वं ब्रह्म त्वं प्रजापतिः । त्वं तदाप आपो ज्योती रसोऽमृतं ब्रह्म भू-र्भुव-स्सुव-रोम् ॥

### प्राणाहुतिमन्त्राः [69]

श्रद्धायां प्राणे निविंष्टोऽमृतं जुहोमि । श्रद्धायामपाने निविंष्टोऽमृतं जुहोमि । श्रद्धायां व्याने निविंष्टोऽमृतं जुहोमि । श्रद्धायामुदाने

निविंष्टोऽमृतं जुहोमि । श्रद्धायागं् समाने निविंष्टोऽमृतं जुहोमि । ब्रह्मणि म आत्माऽमृतत्वायं । अमृतोपस्तरंणमसि । श्रद्धायाँं प्राणे निविंष्टोऽमृतं जुहोमि । शिवो मां विशाप्रंदाहाय । प्राणाय स्वाहाँ ॥

श्रद्धायांमपाने निविंष्टोऽमृतं जुहोमि । शिवो मां विशाप्रंदाहाय । अपानाय स्वाहाँ । श्रद्धायाँं व्याने निविंष्टोऽमृतं जुहोमि । शिवो मां विशाप्रंदाहाय । व्यानाय स्वाहाँ । श्रद्धायां-मुदाने निविंष्टोऽमृतं जुहोमि । शिवो मां विशाप्रंदाहाय । उदानाय स्वाहाँ । श्रद्धायागं् समाने निविंष्टोऽमृतं जुहोमि । शिवो मां विशाप्रंदाहाय । समानाय स्वाहाँ । ब्रह्मणि म आत्माऽमृतत्वायं । अमृतापिधानमंसि ॥

## भुक्तान्नाभिमन्त्रणमन्त्राः [70]

श्रद्धायाँं प्राणे निविंश्यामृतगं् हुतम् । प्राणमन्नेंनाप्यायस्व । श्रद्धायांमपाने निविंश्यामृतगं् हुतम् । अपान-मन्नेंनाप्यायस्व । श्रद्धायाँं व्याने निविंश्यामृतगं् हुतम् । व्यान-मन्नेंनाप्यायस्व । श्रद्धायां-मुदाने निविंश्यामृतगं् हुतम् । उदान-मन्नेंनाप्यायस्व । श्रद्धायागं् समाने निविंश्यामृतगं् हुतम् । समान-मन्नेंनाप्यायस्व ॥

## भोजनान्ते आत्मानुसन्धानमन्त्राः [71]

अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठं चं समाश्रितः । ईशास्सर्वस्य जगतः प्रभुः प्रीणातिं विश्वभुक् ॥

**अवयवस्वस्थता-प्रार्थनामन्त्रः** [72]

वाङ्म आसन् । नसोः प्राणः । अक्ष्यो-श्चक्षुः । कर्णयोश्श्रोत्रम् । बाहुवो-र्बलम् । ऊरुवो-रोजः । अरिष्टा विश्वान्यङ्गानि तनूः । तनुवा मे सह नमस्ते अस्तु मा मा हिग्ंसीः ॥

**इन्द्रसप्तर्षि-संवादमन्त्रः** [73]

वयं-स्सुपर्णा उपसेदु-रिन्द्रं प्रियमेधा ऋषयो नाधमानाः । अपध्वान्तमूर्णुहि पूर्धि चक्षु-र्मुमुग्ध्यस्मान्निधयेऽव बद्धान् ॥

**हृदयालंभनमन्त्रः** [74]

प्राणानां ग्रन्थिरसि रुद्रो मा विशान्तकः । तेनान्नेनाप्यायस्व ॥

**देवताप्राणनिरूपणमन्त्रः** [75]

नमो रुद्राय विष्णवे मृत्युर्मे पाहि ॥

**अग्निस्तुतिमन्त्रः** [76]

त्वमग्ने द्युभि-स्त्व-माशुशुक्षणि-स्त्व-मद्भ्य-स्त्व-मश्मनस्परि । त्वं वनेभ्य-स्त्वमोषधीभ्य-स्त्वं नृणां नृपते जायसे शुचिः ॥

**अभीष्टयाचनामन्त्रः** [77]

शिवेन मे संतिष्ठस्व स्योनेन मे संतिष्ठस्व सुभूतेन मे संतिष्ठस्व ब्रह्मवर्चसेन मे संतिष्ठस्व यज्ञस्यर्धि-मनु संतिष्ठस्वोप ते यज्ञ नम उप ते नम उप ते नमः ॥

## परतत्त्व-निरूपणम् [78]

सत्यं परं परग्ं सत्यग्ं सत्येन न सुवर्गा-ल्लोकाच्च्यवन्ते कदाचन सताग्ं हि सत्यं तस्माँत् सत्ये रमन्ते तप इति तपो नानशनात्परं यद्धि परं तप-स्तद्दुर्धर्षं तद्दुराधर्षं तस्मा-त्तपसि रमन्ते दम इति नियतं ब्रह्मचारिण-स्तस्मा-द्दमे रमन्ते शम इत्यरण्ये मुनय-स्तस्माच्छमे रमन्ते

दान-मिति सर्वाणि भूतानि प्रशग्ंसन्ति दाना-न्नाति दुश्चरं तस्माँ-द्दाने रमन्ते धर्म इति धर्मेण सर्व-मिदं परिगृहीतं धर्मान्नातिदुष्करं तस्माँ-द्धर्मे रमन्ते

प्रजन इति भूयाग्ंस-स्तस्माद्भूयिष्ठाः प्रजायन्ते तस्माद्भूयिष्ठाः प्रजनने रमन्तेऽग्नय इत्याह तस्मा-दग्नय आधातव्या

अग्निहोत्र-मित्याह तस्मा-दग्निहोत्रे रमन्ते यज्ञ इति यज्ञो हि देवा-स्तस्माँद्यज्ञे रमन्ते मानस-मिति विद्वाग्ंस-स्तस्माँ-द्विद्वाग्ंस एव मानसे रमन्ते

न्यास इति ब्रह्मा ब्रह्मा हि परः परो हि ब्रह्मा तानि वा एतान्यवराणि पराग्ंसि न्यास एवात्यरेचयद्य एवं वेदे-त्युपनिषत् ॥

## ज्ञानसाधन-निरूपणम् [79]

प्राजापत्यो हारुणि-स्सुपर्णेयः प्रजापतिं पितर-मुपससार किं

भगवन्तः परमं वदन्तीति तस्मै प्रोवाच

सत्येन वायु-रावाति सत्येनादित्यो रोचते दिवि सत्यं वाचः प्रतिष्ठा सत्ये सर्वं प्रतिष्ठितं तस्मात् सत्यं परमं वदन्ति तपसा

देवा देवता-मग्रं आयन् तपसर्षयस्सुवरन्वविन्दन् तपसा सपत्नान् प्रणुदामाराती-स्तपसि सर्वं प्रतिष्ठितं तस्मात्तपः परमं वदन्ति दमेन दान्ताः किल्बिषं-मवधून्वन्ति दमेन ब्रह्मचारिण-स्सुवरगच्छन् दमो भूतानाँ दुराधर्षं दमे सर्वं प्रतिष्ठितं तस्माद्दमः परमं वदन्ति शमेन शान्ता-श्शिव-माचरन्ति शमेन नाकं मुनयोऽन्ववविन्दञ्छमो भूतानाँ दुराधर्षञ्छमे सर्वं प्रतिष्ठितं तस्माच्छमः परमं वदन्ति

दानं यज्ञानां वरूथं दक्षिणा लोके दातारग्ं सर्वभूतान्युपजीवन्ति दानेनाराती-रपानुदन्त दानेन द्विषन्तो मित्रा भवन्ति दाने सर्वं प्रतिष्ठितं तस्माँ-द्दानं परमं वदन्ति

धर्मो विश्वस्य जगतः प्रतिष्ठा लोके धर्मिष्ठं प्रजा उपसर्पन्ति धर्मेण पाप-मपनुदति धर्मे सर्वं प्रतिष्ठितं तस्माँ-द्धर्मं परमं वदन्ति

प्रजननं वै प्रतिष्ठा लोके साधुप्रजायाँ-स्तन्तुं तन्वानः पितृणा-मनृणो भवति तदेव तस्या अनृणं तस्मात् प्रजननं परमं वदन्त्यग्नयो वै त्रयी विद्या

देवयानः पन्था गार्हपत्य ऋक्पृथिवी रथन्तर-मन्वाहार्यपचनं

यजुं-रन्तरिंक्षं वामदेव्य-मांहवनीयस्सामं सुवर्गो लोको बृहत्तस्मां-दग्नीन् पंरमं वदंन्त्यग्निहोत्रग्ं सांयं प्रातर्गृहाणां निष्कृंति-स्स्विंष्टग्ं सुहुतं यंज्ञक्रतूनां प्रायंणग्ं सुवर्गस्यं लोकस्य ज्योति-स्तस्मां-दग्निहोत्रं पंरमं वदंन्ति

यज्ञ इतिं यज्ञेन हि देवा दिवं गता यज्ञेनासुंरा-नपांनुदन्त यज्ञेनं द्विषन्तो मित्रा भंवन्ति यज्ञे सर्वं प्रतिंष्ठितं तस्माँद्यज्ञं पंरमं वदंन्ति मानसं वै प्रांजापत्यं पवित्रं मानसेन मनंसा साधु पंश्यति मानसा ऋषंयः प्रजा अंसृजन्त मानसे सर्वं प्रतिंष्ठितं तस्माँन्मानसं पंरमं वदंन्ति

न्यास इत्याहुंर्मनीषिणों" ब्रह्माणं ब्रह्मा विश्वः कतम-स्स्वंयम्भु प्रजापंति-स्संवथ्सर इतिं संवथ्सरोंऽसावांदित्यो य एष आंदित्ये पुरुंष-स्स पंरमेष्ठी ब्रह्मात्मा

याभिंरादित्य-स्तपंति रश्मिभिस्ताभिंः पर्जन्यों वर्षति पर्जन्येंनौषधि-वनस्पतयः प्रजांयन्त ओषधिवनस्पतिभि-रन्नं भवत्यन्नेंन प्राणाः प्राणै-र्बलं बलेंन तप-स्तपंसा श्रद्धा श्रद्धयां मेधा मेधयां मनीषा मंनीषया मनो मनंसा शान्ति-श्शान्त्यां चित्तं चित्तेन स्मृतिग्ग् स्मृत्या स्मारग्ग् स्मारेंण विज्ञानं विज्ञानेंनात्मानं वेदयति तस्मां-दन्नं ददन्थ्सर्वांण्येतानिं ददात्यन्नाँत् प्राणा भंवन्ति

भूतानाँं प्राणै-र्मनो मनंसश्च विज्ञानं विज्ञानां-दानन्दो

ब्रह्मयोनि-स्स वा एष पुरुषः पञ्चधा पञ्चात्मा येन सर्व-मिदं प्रोतं पृथिवी चान्तरिक्षं च द्यौश्च दिशश्चावान्तरदिशाश्च स वै सर्व-मिदं जगथ्स सभूतग्ं स भव्यं जिज्ञासक्लृप्त ऋतजा-रयिष्ठा

श्रद्धा सत्यो महस्वान् तपसो परिष्ठाद् ज्ञात्वा तमेवं मनसा हृदा च भूयो न मृत्यु-मुपयाहि विद्वान् तस्मान्न्यास-मेषां तपसा-मतिरिक्तमाहु-र्वसुरण्वो विभूरसि प्राणे त्वमसि सन्धाता

ब्रह्मन् त्वमसि विश्वधृत्तेजोदा-स्त्वमस्यग्नि-रसि वर्चोदा-स्त्वमसि सूर्यस्य द्युम्नोदा-स्त्वमसि चन्द्रमस उपयामगृहीतोऽसि ब्रह्मणे त्वा

महस ओमित्यात्मानं युञ्जीतैतद्वै महोपनिषदं देवानां गुह्यं य एवं वेद ब्रह्मणो महिमान-माप्नोति तस्माद्ब्रह्मणो महिमान-मित्युपनिषत् ॥

## ज्ञानयज्ञः　　[80]

तस्यैवं विदुषो यज्ञस्यात्मा यजमान-श्श्रद्धापत्नी शरीर-मिध्ममुरो वेदि-र्लोमानि बर्हि-र्वेद-श्शिखा हृदयं यूपः काम आज्यं मन्युः पशु-स्तपोऽग्नि-र्दम-श्शमयिता दक्षिणा-वाग्घोता प्राण उद्गाता

चक्षुरध्वर्यु-र्मनो ब्रह्मा श्रोत्रमग्नी-द्यावद्ध्रियते सा दीक्षा यदश्नाति तद्धवि-र्यत्पिबति तदस्य सोमपानं यद्रमते तदुपसदो

यथ्संच-रंत्युपविशंत्युत्तिष्ठंते च सप्रंवर्ग्यो यन्मुखं तदांहवनीयो या व्याहृंति-राहुति-र्यदंस्य

विज्ञानं तज्जुहोति यथ्सायं प्रातरंत्ति तथ्समिधं यत्प्रातर्मध्यन्दिंनगं सायं च तानि सवंनानि ये अंहोरात्रे ते दंर्शपूर्णमासौ येंऽर्धमासाश्च मासांश्च ते चांतुर्मास्यानि य ऋतवस्ते पंशुबन्धा ये संवथ्सराश्च परिवथ्सराश्च तेऽहंर्गणास्सर्ववेदसं वा

एतथ्सत्रं यन्मरंणं तदंवभृथं एतद्वै जंरामर्यमग्निहोत्रगं सत्रं य एवं विद्वा-नुंदगयंने प्रमीयंते देवानांमेव मंहिमानं गत्वाऽऽदित्यस्य सायुंज्यं

गच्छत्यथ यो दंक्षिणे प्रमीयंते पितृणा-मेव मंहिमानं गत्वा चन्द्रमंसस्सायुंज्यगं सलोकतां-माप्नोत्येतौ वै सूंर्याचन्द्रमसों-र्महिमानौं ब्राह्मणो विद्वा-नभिजंयति तस्मांद्ब्रह्मणों महिमानं माप्नोति तस्मांद्ब्रह्मणों महिमानम् ॥

ॐ सह नांववतु । सह नौं भुनक्तु । सह वीर्यं करवावहै । तेजस्विनावधींतमस्तु मा विंद्विषावहैं ।

ॐ शान्ति-श्शान्ति-श्शान्तिंः ॥



# ॥ बृहदारण्यकोपनिषत् ॥

## प्रथमोऽध्यायः

ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते। पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥ ॐ शान्तिः शान्तिः शान्तिः ॥

ॐ। उषा वा अश्वस्य मेध्यस्य शिरः सूर्यश्चक्षुर्वातः प्राणो व्यात्तमग्निर्वैश्वानरः संवत्सर आत्माऽश्वस्य मेध्यस्य द्यौः पृष्ठमन्तरिक्षमुदरं पृथिवी पाजस्यं दिशः पार्श्वे अवान्तरदिशः पर्शव ऋतवोऽङ्गानि मासाश्चार्धमासाश्च पर्वाण्यहोरात्राणि प्रतिष्ठा नक्षत्राण्यस्थीनि नभो मागंसान्यूवध्यगं सिकताः सिन्धवो गुदा यकृच्च क्लोमानश्च पर्वता ओषधयश्च वनस्पतयश्च लोमान्युद्यन्पूर्वार्धो निम्लोचञ्जघनार्धो यद्विजृम्भते तद्विद्योतते यद्विधूनुते तत्स्तनयति यन्मेहति तद्वर्षति वागेवास्य वाक् ॥ १ ॥

अहर्वा अश्वं पुरस्तान्महिमाऽन्वजायत तस्य पूर्वे समुद्रे योनी रात्रिरेनं पश्चान्महिमाऽन्वजायत तस्यापरे समुद्रे योनिरेतौ वा अश्वं महिमानावभितः संबभूवतु-र्हयो भूत्वा देवानवहद्वाजी गन्धर्वानर्वा ऽसुरानश्वो मनुष्यान्समुद्र एवास्य बन्धुः समुद्रो योनिः ॥ २ ॥

**इति प्रथमं ब्राह्मणम् ॥**

नैवेह किंचनाग्र आसीन्मृत्यु-नैवेदमावृतमासी-दशनायया ऽशनाया हि मृत्युस्तन्मनोऽकुरुताऽऽत्मन्वी स्यामिति सोऽर्चन्न-

चरत्तस्यार्चत आपोऽजायन्तार्चते वै मे कमभूदिति तदेवार्कस्यार्कत्वं कगं ह वा अस्मै भवति य एवमेतदर्कस्यार्कत्वं वेद ॥ १ ॥

आपो वा अर्कस्तद्यदपागं शर आसीत्तत्समहन्यत सा पृथिव्यभवत्तस्यामश्राम्यत्तस्य श्रान्तस्य तप्तस्य तेजो रसो निरवर्तताग्निः ॥ २ ॥

स त्रेधाऽऽत्मानं व्यकुरुताऽऽदित्यं तृतीयं वायुं तृतीयगं स एष प्राणस्त्रेधा विहितस्तस्य प्राची दिक्शिरोऽसौ चासौ चेर्मावथास्य प्रतीची दिक्पुच्छमसौ चासौ च सक्थ्यौ दक्षिणा चोदीची च पार्श्वे द्यौः पृष्ठमन्तरिक्षमुदरमियमुरः स एषोऽप्सुप्रतिष्ठितो यत्र क्व चैति तदेव प्रतितिष्ठत्येवं विद्वान् ॥ ३ ॥

सोऽकामयत द्वितीयो म आत्मा जायेतेति स मनसा वाचं मिथुनगं समभवदशनाया मृत्युस्तद्यद्रेत आसीत्स संवत्सरोऽभवन्नह पुरा ततः संवत्सर आस तमेतावन्तं कालमबिभर्यावान्संवत्सरस्तमेतावतः कालस्य परस्तादसृजत तं जातमभिव्याददात्स भाणकरोत्सैव वागभवत् ॥ ४ ॥

स ऐक्षत यदि वा इममभिमगंस्ये कनीयोऽन्नं करिष्य इति स तया वाचा तेनाऽऽत्मनेदगं सर्वमसृजत यदिदं किंचर्चो यजूगंषि सामानिच्छन्दागंसि यज्ञान्प्रजाः पशून्स यद्यदेवासृजत तत्तद-

त्तुमध्रियत सर्वं वा अत्तीति तददितेरदितित्वग्ं सर्वस्यैतस्यात्ता भवति सर्वमस्यान्नं भवति य एवमेतददितेरदितित्वं वेद ॥ ५ ॥

सोऽकामयत भूयसा यज्ञेन भूयो यजेयेति सोऽश्राम्यत्स तपोऽतप्यत तस्य श्रान्तस्य तप्तस्य यशो वीर्यमुदक्रामत्प्राणा वै यशो वीर्यं तत्प्राणेषूत्क्रान्तेषु शरीरग्ं श्वयितुमध्रियत तस्य शरीर एव मन आसीत् ॥ ६ ॥

सोऽकामयत मेध्यं म इदग्ं स्यादात्मन्व्यनेन स्यामिति ततोऽश्वः समभवद्यदश्वत्तन्मेध्यमभूदिति तदेवाश्वमेधस्याश्वमेधत्वमेष ह वा अश्वमेधं वेद य एनमेवं वेद तमनवरुध्यैवामन्यत तग्ं संवत्सरस्य परस्तादात्मन आलभत पशून्देवताभ्यः प्रत्यौहत्तस्मात्सर्वदेवत्यं प्रोक्षितं प्राजापत्यमालभन्त एष ह वा अश्वमेधो य एष तपति तस्य संवत्सर आत्माऽयमग्निरर्कस्तस्येमे लोका आत्मानस्तावेतावर्काश्वमेधौ सो पुनरेकैव देवता भवति मृत्युरेवाप पुनर्मृत्युं जयति नैनं मृत्युराप्नोति मृत्युरस्याऽऽत्मा भवत्येतासां देवतानामेको भवति ॥ ७ ॥ **इति द्वितीयं ब्राह्मणम् ॥**

द्वया ह प्राजापत्या देवाश्चासुराश्च ततः कानीयसा एव देवा ज्यायसा असुरास्त एषु लोकेष्वस्पर्धन्त ते ह देवा ऊचुर्हन्तासुरान्यज्ञ उद्गीथेनात्ययामेति ॥ १ ॥

ते ह वाचमूचुस्त्वं न उद्गायेति तथेति तेभ्यो वागुदगायद्यो

वाचि भोगस्तं देवेभ्य आगायद्यत्कल्याणं वदति तदात्मने ते विदुरनेन वै न उद्गात्राऽत्येष्यन्तीति तमभिद्रुत्य पाप्मनाऽविध्यन्स यः स पाप्मा यदेवेदमप्रतिरूपं वदति स एव स पाप्मा ॥ २ ॥

अथ ह प्राणमूचुस्त्वं न उद्गायेति तथेति तेभ्यः प्राण उदगायद्यः प्राणे भोगस्तं देवेभ्य आगायद्यत्कल्याणं जिघ्रति तदात्मने ते विदुरनेन वै न उद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाऽविध्यन्स यः स पाप्मा यदेवेदमप्रतिरूपं जिघ्रति स एव स पाप्मा ॥ ३ ॥

अथ ह चक्षुरूचुस्त्वं न उद्गायेति तथेति तेभ्यश्चक्षुरुदगायद्यश्चक्षुषि भोगस्तं देवेभ्य आगायद्यत्कल्याणं पश्यति तदात्मने ते विदुरनेन वै न उद्गात्राऽत्येष्यन्तीति तमभिद्रुत्य पाप्मनाऽविध्यन्स यः स पाप्मा यदेवेदमप्रतिरूपं पश्यति स एव स पाप्मा ॥ ४ ॥

अथ ह श्रोत्रमूचुस्त्वं न उद्गायेति तथेति तेभ्यः श्रोत्रमुदगायद्यः श्रोत्रे भोगस्तं देवेभ्य आगायद्यत्कल्याणग्ं शृणोति तदात्मने ते विदुरनेन वै न उद्गात्राऽत्येष्यन्तीति तमभिद्रुत्य पाप्मनाऽविध्यन्स यः स पाप्मा यदेवेदमप्रतिरूपग्ं शृणोति स एव स पाप्मा ॥ ५ ॥

अथ ह मन ऊचुस्त्वं न उद्गायेति तथेति तेभ्यो मन उदगायद्यो मनसि भोगस्तं देवेभ्य आगायद्यत्कल्याणग्ं संकल्पयति तदात्मने ते विदुरनेन वै न उद्गात्राऽत्येष्यन्तीति तमभिद्रुत्य पाप्मना

ऽविध्यन्स यः स पाप्मा यदेवेदमप्रतिरूपगं् संकल्पयति स एव स पाप्मैवमु खल्वेता देवताः पाप्मभिरुपासृजन्नेवमेनाः पाप्मना ऽविध्यन् ॥ ६ ॥

अथ हेममासन्यं प्राणमूचुस्त्वं न उद्गायेति तथेति तेभ्य एष प्राण उदगायत्ते विदुरनेन वै न उद्गात्राऽत्येष्यन्तीति तमभिद्रुत्य पाप्मनाऽविव्यत्सन्स यथाऽश्मानमृत्वा लोष्टो विध्वगं्सेतैवगं् हैव विध्वगं्समाना विष्वञ्चो विनेशुस्ततो देवा अभवन्पराऽसुरा भवत्यात्मना पराऽस्य द्विषन्भ्रातृव्यो भवति य एवं वेद ॥ ७ ॥

ते होचुः क्व नु सोऽभूद्यो न इत्थमसक्तेत्ययमास्येऽन्तरिति सोऽयास्य आङ्गिरसोऽङ्गानागं् हि रसः ॥ ८ ॥

सा वा एषा देवता दूर्नाम दूरगं् ह्यस्या मृत्युर्दूरगं् ह वा अस्मान्मृत्यु-र्भवति य एवं वेद ॥ ९ ॥

सा वा एषा देवतैतासां देवतानां पाप्मानं मृत्युमपहत्य यत्रा ऽऽसां दिशामन्तस्तद्गमयांचकार तदासां पाप्मनो विन्यदधात्तस्मान्न जनमियान्नान्तमियान्नेत्पाप्मानं मृत्युमन्ववायानीति ॥ १० ॥

सा वा एषा देवतैतासां देवतानां पाप्मानं मृत्युमपहत्याथैना मृत्युमत्यवहत् ॥ ११ ॥

स वै वाचमेव प्रथमामत्यवहत्सा यदा मृत्युमत्यमुच्यत सोऽग्निरभवत्सोऽयमग्निः परेण मृत्युमतिक्रान्तो दीप्यते ॥ १२ ॥

अथ प्राणमत्यवहत्स यदा मृत्युमत्यमुच्यत स वायुरभवत्सोऽयं वायुः परेण मृत्युमतिक्रान्तः पवते ॥ १३ ॥

अथ चक्षुरत्यवहत्तद्यदा मृत्युमत्यमुच्यत स आदित्यो ऽभवत्सोऽसा वादित्यः परेण मृत्युमतिक्रान्तस्तपति ॥ १४ ॥

अथ श्रोत्रमत्यवहत्तद्यदा मृत्युमत्यमुच्यत ता दिशोऽभवग्ंस्ता इमा दिशः परेण मृत्युमतिक्रान्ताः ॥ १५ ॥

अथ मनोऽत्यवहत्तद्यदा मृत्युमत्यमुच्यत स चन्द्रमा अभवत्सोऽसौ चन्द्रः परेण मृत्युमतिक्रान्तो भात्येवग्ं ह वा एनमेषा देवता मृत्युमतिवहति य एवं वेद ॥ १६ ॥

अथाऽऽत्मनेऽन्नाद्यमागायद्यद्धि किंचान्नमद्यतेऽनेनैव तदद्यत इह प्रतितिष्ठति ॥ १७ ॥

ते देवा अब्रुवन्नेतावद्वा इदग्ं सर्वं यदन्नं तदात्मन आगासीरनु नोऽस्मिन्नन्न आभजस्वेति ते वै माऽभिसंविशतेति तथेति तग्ं समन्तं परिण्यविशन्त तस्माद्यदनेनान्नमत्ति तेनैतास्तृप्यन्त्येवग्ं ह वा एनग्ं स्वा अभिसंविशन्ति भर्ता स्वानाग्ं श्रेष्ठः पुर एता भवत्यन्नादोऽधिपतिर्य एवं वेद य उ हैवंविदग्ं स्वेषु प्रति प्रतिर्बुभूषति न हैवालं भार्येभ्यो भवत्यथ य एवैतमनुभवति यो वैतमनु भार्यान्बुभूर्षति स हैवालं भार्येभ्यो भवति ॥ १८ ॥

सोऽयास्य आङ्गिरसोऽङ्गानाग्ं हि रसः प्राणो वा अङ्गानाग्ं

रसः प्राणो हि वा अङ्गानाग्ं रसस्तस्माद्यस्मात्कस्माच्चाङ्गात्प्राण उत्क्रामति तदेव तच्छुष्यत्येष हि वा अङ्गानाग्ं रसः ॥ १९ ॥

एष उ एव बृहस्पतिर्वाग्वै बृहती तस्या एष पतिस्तस्मादु बृहस्पतिः ॥ २० ॥

एष उ एव ब्रह्मणस्पतिर्वाग्वै ब्रह्म तस्या एष पतिस्तस्मादु ब्रह्मणस्पतिः ॥ २१ ॥

एष उ एव सामवाग्वै सामैष सा चामश्चेति तत्साम्नः सामत्वम् यद्वेव समः प्लुषिणा समो मशकेन समो नागेन सम एभिस्त्रिभिर्लोकैः समोऽनेन सर्वेण तस्माद्वेव सामाश्नुते साम्नः सायुज्यग्ं सलोकतां य एवमेतत्साम वेद ॥ २२ ॥

एष उ वा उद्गीथः प्राणो वा उत्प्राणेन हीदग्ं सर्वमुत्तब्धं वागेव गीथोच्च गीथा चेति स उद्गीथः ॥ २३ ॥

तद्धापि ब्रह्मदत्तश्चैकितानेयो राजानं भक्षयन्नुवाचायं त्यस्य राजा मूर्धानं विपातयताद्यदितोऽयास्य आङ्गिरसोऽन्येनोदगाय-दिति वाचा च ह्येव स प्राणेन चोदगायदिति ॥ २४ ॥

तस्य हैतस्य साम्नो यः स्वं वेद भवति हास्य स्वं तस्य वै स्वर एव स्वं तस्मादार्त्विज्यं करिष्यन्वाचि स्वरमिच्छेत तया वाचा स्वरसंपन्नयाऽऽर्त्विज्यं कुर्यात्तस्माद्यज्ञे स्वरवन्तं दिदृक्षन्त एवाथो

यस्य स्वं भवति भवति हास्य स्वं य एवमेतत्साम्नः स्वं वेद ॥ २५ ॥

तस्य हैतस्य साम्नो यः सुवर्णं वेद भवति हास्य सुवर्णं तस्य वै स्वर एव सुवर्णं भवति हास्य सुवर्णं य एवमेतत्साम्नः सुवर्णं वेद ॥ २६ ॥

तस्य हैतस्य साम्नो यः प्रतिष्ठां वेद प्रति ह तिष्ठति तस्य वै वागेव प्रतिष्ठा वाचि हि खल्वेष एतत्प्राणः प्रतिष्ठितो गीयतेऽन्न इत्यु हैक आहुः ॥ २७ ॥

अथातः पवमानानामेवाभ्यारोहः स वै खलु प्रस्तोता साम प्रस्तौति स यत्र प्रस्तुयात्तदेतानि जपेदसतो मा सद्गमय तमसो मा ज्योतिर्गमय मृत्योर्माऽमृतं गमयेति स यदाहासतो मा सद्गमयेति मृत्युर्वा असत्सदमृतं मृत्योर्माऽमृतं गमयामृतं मा कुर्वित्येवैतदाह तमसो मा ज्योतिर्गमयेति मृत्युर्वै तमो ज्योतिरमृतं मृत्योर्माऽमृतं गमयामृतं मा कुर्वित्येवैतदाह मृत्योर्माऽमृतं गमयेति नात्र तिरोहितमिवास्त्यथ यानीतराणि स्तोत्राणि तेष्वात्मनेऽन्नाद्यमागायेत्तस्मादु तेषु वरं वृणीत यं कामं कामयेत तग्ं स एष एवंविदुद्गाताऽऽत्मने वा यजमानाय वा यं कामं कामयते तमागायति तद्धैतल्लोकजिदेव न हैवालोक्यताया आशाऽस्ति य एवमेतत्साम वेद ॥ २८ ॥ **इति तृतीयं ब्राह्मणम् ॥**

आत्मैवेदमग्र आसीत्पुरुषविधः सोऽनुवीक्ष्य नान्यदात्मनोऽपश्यत्सोऽहमस्मीत्यग्रे व्याहरत्ततोऽहंनामाभवत्तस्मादप्येतर्ह्यामन्त्रितोऽहमयमित्येवाग्र उक्त्वाऽथान्यन्नाम प्रब्रूते यदस्य भवति स यत्पूर्वोऽस्मात्सर्वस्मात्सर्वान्पाप्मन औषत्तस्मात्पुरुष ओषति ह वै स तं योऽस्मात्पूर्वो बुभूषति य एवं वेद ॥ १ ॥

सोऽबिभेत्तस्मादेकाकी बिभेति स हायमीक्षां चक्रे यन्मदन्यन्नास्ति कस्मान्नु बिभेमीति तत एवास्य भयं वीयाय कस्माद्ध्यभेष्यद्-द्वितीयाद्वै भयं भवति ॥ २ ॥

स वै नैव रेमे तस्मादेकाकी न रमते स द्वितीयमैच्छत्स हैतावानास यथा स्त्रीपुमाग्ंसौ संपरिष्वक्तौ स इममेवाऽऽत्मानं द्वेधाऽपातयत्ततः पतिश्च पत्नी चाभवतां तस्मादिदमर्धबृगलमिव स्व इति ह स्माऽऽह याज्ञवल्क्यस्तस्मादयमाकाशः स्त्रिया पूर्यत एव ताग्ं समभवत्ततो मनुष्या अजायन्त ॥ ३ ॥

सो हेयमीक्षां चक्रे कथं नु माऽऽत्मन एव जनयित्वा संभवति हन्त तिरोऽसानीति सा गौरभवदृषभ इतरस्ताग्ं समेवाभवत्ततो गावोऽजायन्त वडवेतराऽभवदश्ववृष इतरो गर्दभीतरा गर्दभइ तरस्ताग्ं समेवाभवत्तत एकशफमजायताजेतराऽभवद्बस्त इतरोऽविरितरा मेष इतरस्ताग्ं समेवाभवत्ततोऽजावयोऽजायन्तैवमेव यदिदं किंच मिथुनमा पिपीलिकाभ्यस्तत्सर्वमसृजत ॥ ४ ॥

सोऽवेदहं वाव सृष्टिरस्म्यहगं् हीदगं् सर्वमसृक्षीति ततः सृष्टिरभवत्सृष्ट्यागं् हास्यैतस्यां भवति य एवं वेद ॥ ५ ॥

अथेत्यभ्यमन्थत्स मुखाच्च योनेर्हस्ताभ्यां चाग्निमसृजत तस्मादेतदुभय-मलोमक-मन्तरतोऽलोमका हि योनिरन्त-रतस्तद्यदिद-माहुरमुं यजामुं यजेत्येकैकं देवमेतस्यैव सा विसृष्टिरेष उ ह्येव सर्वे देवा अथ यत्किंचेदमार्द्रं तद्रेतसोऽसृजत तदु सोम एतावद्वा इदगं् सर्वमन्नं चैवान्नादश्च सोम एवान्नमग्निरन्नादः सैषा ब्रह्मणोऽतिसृष्टिर्य च्छ्रेयसो देवानसृजताथ यन्मर्त्यः सन्नमृतानसृजत तस्मादतिसृष्टि-रतिसृष्ट्यागं् हास्यैतस्यां भवति य एवं वेद ॥ ६ ॥

तद्धेदं तर्ह्य-व्याकृतमासीत्तन्नाम-रूपाभ्यामेव व्याक्रियतासौ-नामाऽयमिदगं्रूप इति तदिदमप्येतर्हि नामरूपाभ्यामेव व्याक्रियते ऽसौनामाऽयमिदगं्रूप इति स एष इह प्रविष्ट आ नखाग्रेभ्यो यथा क्षुरः क्षुरधानेऽवहितः स्याद्विश्वंभरो वा विश्वंभरकुलाये तं न पश्यन्त्यकृत्स्नो हि स प्राणन्नेव प्राणो नाम भवति वदन्वाक्पश्यगं्श्चक्षुः शृण्वञ्श्रोत्रं मन्वानो मनस्तान्यस्यैतानि कर्मनामान्येव स योऽतएकैकमुपास्ते न स वेदाकृत्स्नो ह्येषोऽत एकैकेन भवत्यात्मेत्येवोपासीतात्र ह्येते सर्व एकं भवन्ति तदेतत्पदनीयमस्य सर्वस्य यदयमात्माऽनेन ह्येतत्सर्वं वेद यथा ह

वै पदेनानुविन्देदेवं कीर्तिगं श्लोकं विन्दते य एवं वेद ॥ ७ ॥

तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्वस्मादन्तरतरं यदयमात्मा स योऽन्यमात्मनः प्रियं ब्रुवाणं ब्रूयात्प्रियगं रोत्स्यतीतीश्वरो ह तथैव स्यादात्मानमेव प्रियमुपासीत स य आत्मानमेव प्रियमुपास्ते न हास्य प्रियं प्रमायुकं भवति ॥ ८ ॥

तदाहुर्यद्ब्रह्मविद्यया सर्वं भविष्यन्तो मनुष्या मन्यन्ते किमु तद्ब्रह्मावेद्यस्मात्तत्सर्वमभवदिति ॥ ९ ॥

ब्रह्म वा इदमग्र आसीत्तदात्मानमेवावेदहं ब्रह्मास्मीति तस्मात् तत्सर्वमभवत्तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणांतद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहंमनुरभवगं सूर्यश्चेति तदिदमप्येतर्हि य एवं वेदाहं ब्रह्मास्मीति स इदगं सर्वं भवति तस्य ह न देवाश्च नाभूत्या ईशत आत्मा ह्येषागं स भवत्यथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेवगं स देवानाम् यथा ह वै बहवः पशवो मनुष्यं भुञ्ज्युरेवमेकैकः पुरुषो देवान्भुनक्त्येकस्मिन्नेव पशावादीयमानेऽप्रियं भवति किमु बहुषु तस्मादेषां तन्न प्रियं यदेतन्मनुष्या विद्युः ॥ १० ॥

ब्रह्म वा इदमग्र आसीदेकमेव तदेकगं सन्न व्यभवत् तच्छ्रेयोरूपमत्यसृजत क्षत्रं यान्येतानि देवत्रा क्षत्राणीन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशान इति तस्मात्क्षत्रात्परं नास्ति

तस्माद्ब्राह्मणः क्षत्रियमधस्तादुपास्ते राजसूये क्षत्र एव तद्यशो दधाति सैषा क्षत्रस्य योनिर्यद्ब्रह्म तस्माद्यद्यपि राजा परमतां गच्छति ब्रह्मैवान्तत उपनिश्रयति स्वां योनिं य उ एनगं् हिनस्ति स्वागं् स योनिमृच्छति स पापीयान्भवति यथा श्रेयागं्सगं् हिगं्सित्वा ॥ ११ ॥

स नैव व्यभवत्स विशमसृजत यान्येतानि देवजातानि गणश आख्यायन्ते वसवो रुद्रा आदित्या विश्वे देवा मरुत इति ॥ १२ ॥

स नैव व्यभवत्स शौद्रं वर्णमसृजत पूषणमियं वै पूषेयगं् हीदगं् सर्वं पुष्यति यदिदं किंच ॥ १३ ॥

स नैव व्यभवत्तच्छ्रेयोरूपमत्यसृजत धर्मं तदेतत्क्षत्रस्य क्षत्रं यद्धर्मस्तस्माद्धर्मात्परं नास्त्यथो अबलीयान्बलीयागं्समाशगं्सते धर्मेण यथा राज्ञैवं यो वै स धर्मः सत्यं वै तत्तस्मात्सत्यं वदन्तमाहुर्धर्मं वदतीति धर्मं वा वदन्तगं् सत्यं वदतीत्येतद्ध्येवैतदुभयं भवति ॥ १४ ॥

तदेतद्ब्रह्म क्षत्रं विट्शूद्रस्तदग्निनैव देवेषु ब्रह्माभवद्ब्राह्मणो मनुष्येषु क्षत्रियेण क्षत्रियो वैश्येन वैश्यः शूद्रेण शूद्रस्तस्मादग्नावेव देवेषु लोकमिच्छन्ते ब्राह्मणे मनुष्येष्वेताभ्यागं् हि रूपाभ्यां ब्रह्माभवदथयो ह वा अस्माल्लोकात्स्वं लोकमदृष्ट्वा प्रैति स एनमविदितो न भुनक्ति यथा वेदो वाऽननूक्तोऽन्यद्वा कर्माकृतं

यदिह वा अप्यनेवंविन्महत्पुण्यं कर्म करोति तद्धास्यान्ततः क्षीयत एवाऽऽत्मानमेव लोकमुपासीत स य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयतेऽस्माद्ध्येवाऽऽत्मनो यद्यत्कामयते तत्तत्सृजते ॥ १५ ॥

अथो अयं वा आत्मा सर्वेषां भूतानां लोकः सयज्जुहोति यद्यजते तेन देवानां लोकोऽथ यदनुब्रूते तेन ऋषीणामथ यत्पितृभ्यो निपृणाति यत्प्रजामिच्छते तेन पितॄणामथ यन्मनुष्यान्वासयते यदेभ्योऽशनं ददाति तेन मनुष्याणामथ यत्पशुभ्यस्तृणोदकं विन्दति तेन पशूनां यदस्य गृहेषु श्वापदा वयागंस्यापिपीलिकाभ्य उपजीवन्ति तेन तेषां लोको यथा ह वै स्वाय लोकायारिष्टिमिच्छेदेवगं हैवंविदे सर्वाणि भूतान्यरिष्टि-मिच्छन्ति तद्वा एतद्विदितं मीमागंसितम् ॥ १६ ॥

आत्मैवेदमग्र आसीदेक एव सोऽकामयत जाया मे स्यादथ प्रजायेयाथ वित्तं मे स्यादथ कर्म कुर्वीयेत्येतावान्वै कामो नेच्छगंश्चनातो भूयो विन्देत्तस्मादप्येतर्ह्येकाकी कामयते जाया मे स्यादथ प्रजायेयाथ वित्तं मे स्यादथ कर्म कुर्वीयेति स यावदप्येतेषामेकैकं न प्राप्नोत्यकृत्स्न एव तावन्मन्यते तस्यो कृत्स्नता मन एवास्याऽऽत्मा वाग्जाया प्राणः प्रजा चक्षुर्मानुषं वित्तं चक्षुषाहि तद्विन्दते श्रोत्रं दैवगं श्रोत्रेण हि

तच्छृणोत्यात्मैवास्य कर्माऽऽत्मना हि कर्म करोति स एष पाङ्क्तो यज्ञः पाङ्क्तः पशुः पाङ्क्तः पुरुषः पाङ्क्तमिदगं् सर्वं यदिदं किंच तदिदगं् सर्वमाप्नोति य एवं वेद ॥ १७॥ **इति चतुर्थं ब्राह्मणम् ॥**

यत्सप्तान्नानि मेधया तपसाऽजनयत्पिता । एकमस्य साधारणं द्वे देवानभाजयत् । त्रीण्यात्मनेऽकुरुत पशुभ्य एकं प्रायच्छत् । तस्मिन्सर्वं प्रतिष्ठितं यच्च प्राणिति यच्च न । कस्मात्तानि न क्षीयन्तेऽद्यमानानि सर्वदा । यो वैतामक्षितिं वेद सोऽन्नमत्ति प्रतीकेन । स देवानपिगच्छति स ऊर्जमुपजीवतीति श्लोकाः ॥ १ ॥

यत्सप्तान्नानि मेधया तपसाऽजनयत्पितेति मेधया हि तपसाजनयत्पितैकमस्य साधारणमितीदमेवास्य तत्साधारणमन्नं यदिदमद्यते स य एतदुपास्ते न स पाप्मनो व्यावर्तते मिश्रगं् ह्येतत् द्वे देवानभाजयदिति हुतं च प्रहुतं च तस्माद्देवेभ्यो जुह्वति च प्र च जुह्वत्यथो आहुर्दर्शपूर्णमासाविति तस्मान्नेष्टियाजुकः स्यात् पशुभ्य एकं प्रायच्छदिति तत्पयः पयो ह्येवाग्रे मनुष्याश्च पशवश्चोपजीवन्ति तस्मात्कुमारं जातं घृतं वैवाग्रे प्रतिलेहयन्ति स्तनं वाऽनुधापयन्त्यथ वत्सं जातमाहुरतृणाद इति तस्मिन्सर्वं प्रतिष्ठितं यच्च प्राणिति यच्च नेति पयसि हीदगं् सर्वं प्रतिष्ठितं यच्च प्राणिति यच्च न तद्यदिदमाहुः संवत्सरं पयसा जुह्वदप पुनर्मृत्युं जयतीति न तथा विद्याद्यदहरेव जुहोति तदहः पुनर्मृत्युमपजयत्येवं

विद्वान्सर्वग्ं हि देवेभ्योऽन्नाद्यं प्रयच्छति कस्मात्तानि न क्षीयन्तेऽद्यमानानि सर्व-देति पुरुषो वा अक्षितिः स हीदमन्नं पुनः पुनर्जनयते यो वैतामक्षितिं वेदेति पुरुषो वा अक्षितिः स हीदमन्नं धिया धिया जनयते कर्मभिर्यद्धैतन्न कुर्यात्क्षीयेत ह सोऽन्नमत्ति प्रतीकेनेति मुखं प्रतीकं मुखेनेत्येतत्स देवानपिगच्छति स ऊर्जमुपजीवतीति प्रशग्ंसा ॥ २ ॥

त्रीण्यात्मनेऽकुरुतेति मनो वाचं प्राणं तान्यात्मनेऽकुरुतान्यत्रमना अभूवं नादर्शमन्यत्रमना अभूवं नाश्रौषमिति मनसा ह्येव पश्यति मनसा शृणोति कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भी-रित्येतत्सर्वं मन एव तस्मादपि पृष्ठत उपस्पृष्टो मनसा विजानाति यः कश्च शब्दो वागेव सैषा ह्यन्तमायत्तैषा हि न प्राणोऽपानो व्यान उदानः समानोऽन इत्येतत्सर्वं प्राण एवैतन्मयो वा अयमात्मा वाङ्मयो मनोमयः प्राणमयः ॥ ३ ॥

त्रयो लोका एत एव वागेवायं लोको मनोऽन्तरिक्षलोकःप्राणोऽसौ लोकः ॥ ४ ॥

त्रयो वेदा एत एव वागेवर्ग्वेदो मनो यजुर्वेदः प्राणः सामवेदः ॥ ५ ॥

देवाः पितरो मनुष्या एत एव वागेव देवा मनः पितरः प्राणो मनुष्याः ॥ ६ ॥

पिता माता प्रजैत एव मन एव पिता वाङ्माता प्राणः प्रजा ॥ ७ ॥

विज्ञातं विजिज्ञास्यमविज्ञातमेत एव यत्किंच विज्ञातं वाचस्तद्रूपं वाग्घि विज्ञाता वागेनं तद्भूत्वाऽवति ॥ ८ ॥

यत्किंच विजिज्ञास्यं मनसस्तद्रूपं मनो हि विजिज्ञास्यं मन एनं तद्भूत्वाऽवति ॥ ९ ॥

यत्किंचाविज्ञातं प्राणस्य तद्रूपं प्राणो ह्यविज्ञातः प्राण एनं तद्भूत्वाऽवति ॥ १० ॥

तस्यै वाचः पृथिवी शरीरं ज्योतीरूपमयमग्निस्तद्यावत्येव वाक्तावती पृथिवी तावानयमग्निः ॥ ११ ॥

अथैतस्य मनसो द्यौः शरीरं ज्योतीरूपमसावादित्यस्तद्यावदेव मनस्तावती द्यौस्तावानसावादित्यस्तौ मिथुनगं समैतां ततः प्राणोऽजायत स इन्द्रः स एषोऽसपत्नो द्वितीयो वै सपत्नो नास्य सपत्नो भवति य एवं वेद ॥ १२ ॥

अथैतस्य प्राणस्याऽऽपः शरीरं ज्योतीरूपमसौ चन्द्रस्तद्यावानेव प्राणस्तावत्य आपस्तावानसौ चन्द्रस्त एते सर्व एव समाः सर्वेऽनन्ताः स यो हैतानन्तवत उपास्तेऽन्तवन्तगं स लोकं

जयत्यथ यो हैताननन्तानुपास्तेऽनन्तगं स लोकं जयति ॥ १३ ॥

स एष संवत्सरः प्रजापतिः षोडशकलस्तस्य रात्रय एव पञ्चदशकला ध्रुवैवास्य षोडशी कला स रात्रिभिरेवाऽऽच पूर्यतेऽप च क्षीयते सोऽमावास्यागं रात्रिमेतया षोडश्या कलया सर्वमिदं प्राणभृदनुप्रविश्य ततः प्रातर्जायते तस्मादेतागं रात्रिं प्राणभृतः प्राणं न विच्छिन्द्यादपि कृकलासस्यैतस्या एव देवताया अपचित्यै ॥ १४ ॥

यो वै स संवत्सरः प्रजापतिः षोडशकलोऽयमेव स योऽयमेवं वित्पुरुषस्तस्य वित्तमेव पञ्चदशकला आत्मैवास्य षोडशी कला स वित्तेनैवाऽऽच पूर्यतेऽप च क्षीयते तदेतन्नभ्यं यदयमात्मा प्रधिर्वित्तं तस्माद्यद्यपि सर्वज्यानिं जीयत आत्मना चेज्जीवति प्रधिनाऽगादित्येवाऽऽहुः ॥ १५ ॥

अथ त्रयो वाव लोका मनुष्यलोकः पितृलोको देवलोक इति सोऽयं मनुष्यलोकः पुत्रेणैव जय्यो नान्येन कर्मणा कर्मणा पितृलोको विद्यया देवलोको देवलोको वै लोकानागं श्रेष्ठस्तस्माद्विद्यां प्रशगंसन्ति ॥ १६ ॥

अथातः संप्रत्तिर्यदा प्रैष्यन्मन्यतेऽथ पुत्रमाह त्वं ब्रह्म त्वं यज्ञस्त्वं लोक इति स पुत्रः प्रत्याहाहं ब्रह्माहं यज्ञोऽहं लोक इति यद्वै किंचानूक्तं तस्य सर्वस्य ब्रह्मेत्येकता ये वै के च यज्ञास्तेषागं सर्वेषां यज्ञ इत्येकता ये वै के च लोकास्तेषागं सर्वेषां लोक

देवः । भूयः सृष्ट्वा यतयस्तथेशः सर्वाधिपत्यं कुरुते महात्मा ॥ ३ ॥ सर्वा दिश ऊर्ध्वमधश्च तिर्यक् प्रकाशयन् भ्राजते यद्वनड्वान् । एवं स देवो भगवान् वरेण्यो योनिस्वभावानधितिष्ठत्येकः ॥ ४ ॥ यच्च स्वभावं पचति विश्वयोनिः पाच्यांश्च सर्वान् परिणामयेद् यः । सर्व मेतद् विश्वमधितिष्ठत्येको गुणांश्च सर्वान् विनियोजयेद् यः ॥ ५ ॥ तद् वेदगुह्योपनिषत्सु गूढं तद् ब्रह्मा वेदते ब्रह्मयोनिम् । ये पूर्वं देवा ऋषयश्च तद् विदुस्ते तन्मया अमृता वै बभूवुः ॥ ६ ॥ गुणान्वयो यः फलकर्मकर्ता कृतस्य तस्यैव स चोपभोक्ता । स विश्वरूपस्त्रिगुणस्त्रिवर्त्मा प्राणाधिपः सञ्चरति स्वकर्मभिः ॥ ७ ॥ अङ्गुष्ठमात्रो रवितुल्यरूपः सङ्कल्पाहङ्कारसमन्वितो यः । बुद्धेर्गुणेनात्मगुणेन चैव आराग्रमात्रो ह्यपरोऽपि दृष्टः ॥ ८ ॥ बालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते ॥ ९ ॥ नैव स्त्री न पुमानेष न चैवायं नपुंसकः । यद्यच्छरीरमादत्ते तेन तेन स रक्ष्यते ॥ १० ॥

सङ्कल्पनस्पर्शनदृष्टिमोहैर्ग्रासाम्बुवृष्ट्यात्मविवृद्धिजन्म । कर्मानुगान्यनुक्रमेण देही स्थानेषु रूपाण्यभिसम्प्रपद्यते ॥ ११ ॥ स्थूलानि सूक्ष्माणि बहूनि चैव रूपाणि देही स्वगुणैर्वृणोति । क्रियागुणैरात्मगुणैश्च तेषां संयोगहेतुरपरोऽपि दृष्टः ॥ १२ ॥ अनाद्यनन्तं कलिलस्य मध्ये विश्वस्य स्रष्टारमनेकरूपम् । विश्वस्यैकं

परिवेष्टितारं ज्ञात्वा देवं मुच्यते सर्वपाशैः ॥ १३ ॥ भावग्राह्यमनीडाख्यं भावाभावकरं शिवम् । कलासर्गकरं देवं ये विदुस्ते जहुस्तनुम् ॥ १४ ॥

## षष्ठोऽध्यायः

स्वभावमेके कवयो वदन्ति कालं तथान्ये परिमुह्यमानाः । देवस्यैष महिमा तु लोके येनेदं भ्राम्यते ब्रह्मचक्रम् ॥ १ ॥ येनावृतं नित्यमिदं हि सर्वं ज्ञः कालकारो गुणी सर्वविद्यः । तेनेशितं कर्म विवर्तते ह पृथिव्यप्तेजोऽनिलखानि चिन्त्यम् ॥ २ ॥ तत्कर्म कृत्वा विनिवर्त्य भूयस्तत्त्वस्य तत्त्वेन समेत्य योगम् । एकेन द्वाभ्यां त्रिभिरष्टभिर्वा कालेन चैवात्मगुणैश्च सूक्ष्मैः ॥ ३ ॥ आरभ्य कर्माणि गुणान्वितानि भावांश्च सर्वान् विनियोजयेद् यः । तेषामभावे कृतकर्मनाशः कर्मक्षये याति स तत्त्वतोऽन्यः ॥ ४ ॥ आदिः स संयोगनिमित्तहेतुः परस्त्रिकालादकलोऽपि दृष्टः । तं विश्वरूपं भवभूतमीड्यं देवं स्वचित्तस्थमुपास्य पूर्वम् ॥ ५ ॥ स वृक्षकालाकृतिभिः परोऽन्यो यस्मात् प्रपञ्चः परिवर्ततेऽयम् । धर्मावहं पापनुदं भगेशं ज्ञात्वाऽत्मस्थममृतं विश्वधाम ॥ ६ ॥ तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतम् । पतिं पतीनां परमं परस्ताद् विदाम देवं भुवनेशमीड्यम् ॥ ७ ॥ न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते । परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च ॥ ८ ॥ न तस्य कश्चित् पतिरस्ति लोके न चेशिता नैव च तस्य लिङ्गम् । स

कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः ॥ ९ ॥ यस्तन्तुनाभ इव तन्तुभिः प्रधानजैः स्वभावतः । देव एकः स्वमावृणोत् स नो दधात् ब्रह्माप्ययम् ॥ १० ॥

एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा । कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च ॥ ११ ॥ एको वशी निष्क्रियाणां बहूनामेकं बीजं बहुधा यः करोति । तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम् ॥ १२ ॥ नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान् । तत्कारणं सांख्ययोगाधिगम्यं ज्ञात्वा देवं मुच्यते सर्वपाशैः ॥ १३ ॥ न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ॥ १४ ॥ एको हंसः भुवनस्यास्य मध्ये स एवाग्निः सलिले संनिविष्टः । तमेव विदित्वा अतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय ॥ १५ ॥ स विश्वकृद् विश्वविदात्मयोनिर्ज्ञः कालकारो गुणी सर्वविद्यः । प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारमोक्ष-स्थितिबन्धहेतुः ॥ १६ ॥ स तन्मयो ह्यमृत ईशसंस्थो ज्ञः सर्वगो भुवनस्यास्य गोप्ता । य ईशेऽस्य जगतो नित्यमेव नान्यो हेतुर्विद्यत ईशनाय ॥ १७ ॥ यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै । तं ह देवं आत्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये ॥ १८ ॥ निष्कलं निष्क्रियं शान्तं निरवद्यं

निरञ्जनम् । अमृतस्य परं सेतुं दग्धेन्धनमिवानलम् ॥ १९ ॥ यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः । तदा देवमविज्ञाय दुःखस्यान्तो भविष्यति ॥ २० ॥

तपःप्रभावाद् देवप्रसादाच्च ब्रह्म ह श्वेताश्वतरोऽथ विद्वान् । अत्याश्रमिभ्यः परमं पवित्रं प्रोवाच सम्यगृषिसङ्घजुष्टम् ॥ २१ ॥ वेदान्ते परमं गुह्यं पुराकल्पे प्रचोदितम् । नाऽप्रशान्ताय दातव्यं नाऽपुत्रायाशिष्याय वा पुनः ॥ २२ ॥ यस्य देवे परा भक्तिः यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥ २३ ॥

प्रकाशन्ते महात्मन इति ॥

ॐ सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्विनावधीतमस्तु मा विद्विषावहै ॥

ॐ शान्तिः शान्तिः शान्तिः ॥



सर्वशक्तीश्वरस्सर्वः सर्वशक्त्याश्रयस्सदा ।

त्वमनीहः स्वयञ्ज्योतिः सर्वानन्दस्सनातनः ॥

ब्रह्मवैवर्तपुराणम् - ४, १८, ४२.

Thou art everything. You are the controller of all powers and the source of all powers. You are devoid of desires. You are verily the self luminous, all-blissful, eternal Being.

# ॥ कलिसन्तरणोपनिषत् ॥

ॐ सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्विनावधीतमस्तु मा विद्विषावहै ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

हरिः ॐ ॥ द्वापरान्ते नारदो ब्रह्माणं जगाम कथं भगवन् गां पर्यटन्कलिं सन्तरेयमिति । स होवाच ब्रह्मा साधु पृष्टोऽस्मि । सर्वश्रुतिरहस्यं गोप्यं तच्छृणु येन कलिसंसारं तरिष्यसि । भगवत आदिपुरुषस्य नारायणस्य नामोच्चारणमात्रेण निर्धूतकलिर्भवति । नारदः पुनः पप्रच्छ तन्नाम किमिति ।

स होवाच हिरण्यगर्भः —

हरे राम हरे राम राम राम हरे हरे ।

हरे कृष्ण हरे कृष्ण कृष्ण कृष्ण हरे हरे ॥ १ ॥

इति षोडशकं नाम्नां कलिकल्मषनाशनम् ।

नातः परतरोपायः सर्ववेदेषु दृश्यते ॥ २ ॥

इति षोडशकलस्य जीवस्यावरणविनाशनम् ।

ततः प्रकाशते परं ब्रह्म मेघापाये रविरश्मिमण्डलीवेति ।

पुनर्नारदः पप्रच्छ भगवन्कोऽस्य विधिरिति ।

तं होवाच नास्य विधिरिति । सर्वदा शुचिरशुचिर्वा पठन्ब्राह्मणः सलोकतां समीपतां सरूपतां सायुज्यतामेति । यदास्य षोडशीकस्य

सार्धत्रिकोटीर्जपति तदा ब्रह्महत्यां तरति । तरति वीरहत्याम् । स्वर्णस्तेयात्पूतोभवति । पितृदेवमनुष्याणामपकारात्पूतो भवति । सर्वधर्मपरित्यागपापात्सद्यः शुचितामाप्नुयात् । सद्यो मुच्यते सद्यो मुच्यते इत्युपनिषत् ॥

ॐ सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्विनावधीतमस्तु मा विद्विषावहै ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

---

हरेर्नाम हरेर्नाम हरेर्नामैव केवलम् ।
कलौ नास्त्येव नास्त्येव
नास्त्येव गतिरन्यथा ॥

बृहत् नारदीय पुराणम्

---

वाणी गुणानुकथने श्रवणौ कथायां
हस्तौ च कर्मसु मनस्तव पादयोर्नः ।
स्मृत्यां शिरस्तव निवासजगत्प्रणामे
दृष्टिः सतां दर्शनेऽस्तु भवत्तनूनाम् ॥

श्रीमद्भागवतम् - १०, १०, ३८.

Let our speech be devoted to the narration of Thy excellence, our ears to the hearing of Thy wonderful glory, our hands to the performance of Thy work, our minds to meditation on Thy holy feet, our heads to bowing to the world-Thy abode-and our eyes to seeing the righteous who are Thy body.

## ॥ सरस्वतीरहस्योपनिषत् ॥

नीहारहारघनसारसुधाकराभां
  कल्याणदां कनकचम्पकदामभूषाम् ।
उत्तुङ्गपीनकुचकुम्भमनोहराङ्गीं
  वाणीं नमामि मनसा वचसा विभूत्यै ॥ १ ॥

या वेदान्तार्थतत्त्वैकस्वरूपा परमेश्वरी ।
  नामरूपात्मना व्यक्ता सा मां पातु सरस्वती ॥ २ ॥

या साङ्गोपाङ्गवेदेषु चतुर्ष्वेकैव गीयते ।
  अद्वैता ब्रह्मणः शक्तिः सा मां पातु सरस्वती ॥ ३ ॥

या वर्णपदवाक्यार्थस्वरूपेणैव वर्तते ।
  अनादिनिधनानन्ता सा मां पातु सरस्वती ॥ ४ ॥

अध्यात्ममधिदैवं च देवानां सम्यगीश्वरी ।
  प्रत्यगास्ते वदन्ती या सा मां पातु सरस्वती ॥ ५ ॥

अन्तर्याम्यात्मना विश्वं त्रैलोक्यं या नियच्छति ।
  रुद्रादित्यादिरूपस्था सा मां पातु सरस्वती ॥ ६ ॥

या प्रत्यग्दृष्टिभिर्जीवैर्व्यजमानानुभूयते ।
  व्यापिनी ज्ञप्तिरूपैका सा मां पातु सरस्वती ॥ ७ ॥

नामजात्यादिभिर्भेदैरष्टधा या विकल्पिता ।
निर्विकल्पात्मना व्यक्ता सा मां पातु सरस्वती ॥८॥

व्यक्ताव्यक्तगिरः सर्वे वेदाद्या व्याहरन्ति याम् ।
सर्वकामदुघा धेनुः सा मां पातु सरस्वती ॥९॥

यां विदित्वाखिलं बन्धं निर्मथ्याखिलवर्त्मना ।
योगी याति परं स्थानं सा मां पातु सरस्वती ॥१०॥

नामरूपात्मकं सर्वं यस्यामावेश्य तां पुनः ।
ध्यायन्ति ब्रह्मरूपैका सा मां पातु सरस्वती ॥११॥

चतुर्मुखमुखाम्भोजवनहंसवधूर्मम ।
मानसे रमतां नित्यं सर्वशुक्ला सरस्वती ॥१२॥

नमस्ते शारदे देवि काश्मीरपुरवासिनि ।
त्वामहं प्रार्थये नित्यं विद्यादानं च देहि मे ॥१३॥

अक्षसूत्राङ्कुशधरा पाशपुस्तकधारिणी ।
मुक्ताहारसमायुक्ता वाचि तिष्ठतु मे सदा ॥१४॥

कम्बुकण्ठी सुताम्रोष्ठी सर्वाभरणभूषिता ।
महासरस्वती देवी जिह्वाग्रे सन्निवेश्यताम् ॥१५॥

या श्रद्धा धारणा मेधा वाग्देवी विधिवल्लभा ।
भक्तजिह्वाग्रसदना शमादिगुणदायिनी ॥१६॥

नमामि यामिनीनाथलेखालङ्कृतकुन्तलाम् ।
भवानीं भवसन्तापनिर्वापणसुधानदीम् ॥ १७ ॥
यः कवित्वं निरातङ्कं भुक्तिमुक्ती च वाञ्छति ।
सोऽभ्यर्च्यैनां दशश्लोक्या नित्यं स्तौति सरस्वतीम् ॥ १८ ॥
तस्यैवं स्तुवतो नित्यं समभ्यर्च्य सरस्वतीम् ।
भक्तिश्रद्धाभियुक्तस्य षाण्मासात्प्रत्ययो भवेत् ॥ १९ ॥
ततः प्रवर्तते वाणी स्वेच्छया ललिताक्षरा ।
गद्यपद्यात्मकैः शब्दैरप्रमेयैर्विवक्षितैः ॥
अश्रुतो बुध्यते ग्रन्थः प्रायः सारस्वतः कविः ॥ २० ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

---

एकं ब्रह्मैवाद्वितीयं समस्तं
सत्यं सत्यं नेतरच्चास्ति किञ्चित् ।
एको रुद्रो न द्वितीयोऽवतस्थे
तस्मादेकं त्वां प्रपद्ये महेशम् ॥

स्कन्दपुराणम् - ४, १, १०, १२६.

O Lord, Thou art the one Brahman without a second. Thou art everything. Thou art the one Truth, and verily there is nothing but Thee. O Thou destroyer of misery, Thou alone exist eternally, and none besides. Therefore I take rufuge in Thee, the supreme Lord.

# ॥ कैवल्योपनिषत् ॥

### प्रथमः खण्डः

ॐ भद्रं कर्णेभिः शृणुयाम देवाः । भद्रं पश्येमाक्षभिर्यजत्राः । स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिः । व्यशेम देवहितं यदायुः । स्वस्ति न इन्द्रो वृद्धश्रवाः । स्वस्ति नः पूषा विश्ववेदाः । स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः । स्वस्ति नो बृहस्पतिर्दधातु ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

ॐ अथाश्वलायनो भगवन्तं परमेष्ठिनमुपसमेत्योवाच –

अधीहि भगवन्ब्रह्मविद्यां वरिष्ठां सदा सद्भिः सेव्यमानां निगूढाम् ।
ययाऽचिरात्सर्वपापं व्यपोह्य परात्परं पुरुषं याति विद्वान् ॥ १ ॥

तस्मै स होवाच पितामहश्च श्रद्धाभक्तिध्यानयोगादवैहि ।
न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः ॥ २ ॥

परेण नाकं निहितं गुहायां विभ्राजते यद्यतयो विशन्ति ।
वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्त्वाः ॥ ३ ॥

ते ब्रह्मलोकेषु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे ।
विविक्तदेशे च सुखासनस्थः शुचिः समग्रीवशिरः शरीरः ॥ ४ ॥

अत्याश्रमस्थः सकलेन्द्रियाणि निरुध्य भक्त्या स्वगुरुं प्रणम्य ।
हृत्पुण्डरीकं विरजं विशुद्धं विचिन्त्य मध्ये विशदं विशोकम् ॥ ५ ॥

अचिन्त्यमव्यक्तमनन्तरूपं शिवं प्रशान्तममृतं ब्रह्मयोनिम् ।
तथाऽऽदिमध्यान्तविहीनमेकं विभुं चिदानन्दमरूपमद्भुतम् ॥ ६ ॥

उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम् ।
ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात् ॥ ७ ॥

स ब्रह्मा स शिवः सेन्द्रः सोऽक्षरः परमः स्वराट् ।
स एव विष्णुः स प्राणः स कालोऽग्निः स चन्द्रमाः ॥ ८ ॥

स एव सर्वं यद्भूतं यच्च भव्यं सनातनम् ।
ज्ञात्वा तं मृत्युमत्येति नान्यः पन्था विमुक्तये ॥ ९ ॥

सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।
संपश्यन्ब्रह्म परमं याति नान्येन हेतुना ॥ १० ॥

आत्मानमरणिं कृत्वा प्रणवं चोत्तरारणिम् ।
ज्ञाननिर्मथनाभ्यासात् पाशं दहति पण्डितः ॥ ११ ॥

स एव मायापरिमोहितात्मा शरीरमास्थाय करोति सर्वम् ।
स्त्रियन्नपानादिविचित्रभोगैः स एव जाग्रत्परितृप्तिमेति ॥ १२ ॥

स्वप्ने स जीवः सुखदुःखभोक्ता स्वमायया कल्पितजीवलोके ।
सुषुप्तिकाले सकले विलीने तमोऽभिभूतः सुखरूपमेति ॥ १३ ॥

पुनश्च जन्मान्तरकर्मयोगात्स एव जीवः स्वपिति प्रबुद्धः ।
पुरत्रये क्रीडति यश्च जीवस्ततस्तु जातं सकलं विचित्रम् ॥
आधारमानन्दमखण्डबोधं यस्मिन् लयं याति पुरत्रयं च ॥ १४ ॥

एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ।
खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी ॥ १५ ॥

यत्परं ब्रह्म सर्वात्मा विश्वस्यायतनं महत् ।
सूक्ष्मात्सूक्ष्मतरं नित्यं तत्त्वमेव त्वमेव तत् ॥ १६ ॥

जाग्रत्स्वप्नसुषुप्त्यादिप्रपञ्चं यत्प्रकाशते ।
तद्ब्रह्माहमिति ज्ञात्वा सर्वबन्धैः प्रमुच्यते ॥ १७ ॥

त्रिषु धामसु यद्भोग्यं भोक्ता भोगश्च यद्भवेत् ।
तेभ्यो विलक्षणः साक्षी चिन्मात्रोऽहं सदाशिवः ॥ १८ ॥

मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितम् ।
मयि सर्वं लयं याति तद्ब्रह्माद्वयमस्म्यहम् ॥ १९ ॥

### द्वितीयः खण्डः

अणोरणीयानहमेव तद्वन्महानहं विश्वमहं विचित्रम् ।
पुरातनोऽहं पुरुषोऽहमीशो हिरण्मयोऽहं शिवरूपमस्मि ॥ १ ॥

अपाणिपादोऽहमचिन्त्यशक्तिः पश्याम्यचक्षुः सशृणोम्यकर्णः ।
अहं विजानामि विविक्तरूपो न चास्ति वेत्ता मम चित्सदाहम् ॥ २ ॥

वेदैरनेकैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम् ।
न पुण्यपापे मम नास्ति नाशो न जन्मदेहेन्द्रियबुद्धिरस्ति ॥ ३ ॥

न भूमिरापो न च वह्निरस्ति न चानिलो मेऽस्ति न चाम्बरं च ।
एवं विदित्वा परमात्मरूपं गुहाशयं निष्कलमद्वितीयम् ॥ ४ ॥

समस्तसाक्षिं सदसद्विहीनं प्रयाति शुद्धं परमात्मरूपम् ।
यः शतरुद्रीयमधीते सोऽग्निपूतो भवति स वायुपूतो भवति स आत्मपूतो भवति स सुरापानात्पूतो भवति स ब्रह्महत्यायाः पूतो भवति स सुवर्णस्तेयात्पूतो भवति स कृत्याकृत्यात्पूतो भवति तस्मादविमुक्तमाश्रितो भवत्वित्याश्रमी सर्वदा सकृद्वा जपेत् ।
अनेन ज्ञानमाप्नोति संसारार्णवनाशनम् । तस्मादेवं विदित्वैनं कैवल्यं पदमश्नुते कैवल्यं पदमश्नुत इति ॥ ५ ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

इत्यथर्ववेदे कैवल्योपनिषत्-समाप्ता ॥

---

सत्यव्रतं सत्यपरं त्रिसत्यं
सत्यस्य योनिं निहितं च सत्ये ।
सत्यस्य सत्यमृतसत्यनेत्रं
सत्यात्मकं त्वां शरणं प्रपन्नाः ॥

श्रीमद्भागवतम् - १०, २, २६.

O Lord, you are attainable through truthfulness alone. Thou art Truth in the past, present and future. You are the origin of entire creation and pervade it as its true essence. You are the embodiment of Truth. In Thee do we take refuge.

# ॥ ईशावास्योपनिषत् ॥

## ॥ घनपाठः ॥

[१]

ईशावास्यं वास्यंमीशेशा वास्यंमिद-मिदं वास्यं-मीशेशा वास्यंमिदम् । वास्यंमिदमिदं वास्यं वास्यंमिदगं सर्वगं सर्वंमिदं वास्यं वास्यंमिदगं सर्वम् । इदगं सर्वगं सर्वं-मिदमिदगं सर्वं यद्यत्सर्वंमिद-मिदगं सर्वं यत् ।

सर्वं यद्यत्सर्वगं सर्वं यत्किं किं यत्सर्वगं सर्वं यत्किम् । यत्किं किं यद्यत्किंचं च किं यद्यत्किंचं । किंचं च किं किं च जगंत्यां जगंत्यां च किं किं च जगंत्याम् । च जगंत्यां जगंत्यां च च जगंत्यां जग ज्जगज्जगंत्यां च च जगंत्यां जगंत् । जगंत्यां जगज्जगज्जगंत्यां जगंत्यां जगंत् । जगदिति जगंत् ।

तेनं त्यक्तेनं त्यक्तेन तेन तेनं त्यक्तेनं भुञ्जीथा भुञ्जीथा स्त्यक्तेन तेन तेनं त्यक्तेनं भुञ्जीथाः । त्यक्तेनं भुञ्जीथा भुञ्जीथा स्त्यक्तेनं त्यक्तेनं भुञ्जीथा मा मा भुंञ्जीथा-स्त्यक्तेनं त्यक्तेनं भुञ्जीथा मा ।

भुञ्जीथा मा मा भुंञ्जीथा भुञ्जीथा मा गृंधो गृधो मा भुंञ्जीथा भुञ्जीथा मा गृंधः । मा गृंधो गृधो मा मा गृंधः कस्य कस्यं गृधो मा मा गृंधः कस्यं । गृधः कस्य कस्यं गृधो गृधः कस्यंस्वित् स्वित्कस्यं गृधो गृधः कस्यंस्वित् ।

कस्यंस्वित्-स्वित्कस्य कस्यंस्विद्धनं धनंग्-स्वित्कस्य कस्यंस्विद्धनम् । स्विद्धनं धनंग् स्वित् स्विद्धनम् । धनमिति धनम् ॥

[२]

कुर्वन्नेवैव कुर्वन्कुर्वन्नेवेहे हैव कुर्वन् कुर्वन्नेवेह । एवेहे हैवेवेह कर्माणि कर्माणी हैवैवेह कर्माणि । इह कर्माणि कर्माणी हेह कर्माणि जिजीविषे-ज्जिंजीविषेत् कर्माणी हेह कर्माणि जिजीविषेत् ।

कर्माणि जिजीविषेज्जिंजीविषेत् कर्माणि कर्माणि जिजीविषे-च्छतग्ग् शतं जिंजीविषेत् कर्माणि कर्माणि जिजीविषेच्छतम् । जिजीविषेच्छतग्ग् शतं जिंजीविषेज्जिंजीविषेच्छतग्ग् समा स्समाँश्शतं जिंजीविषेज्जिंजीविषे-च्छतग्ग् समाः । शतग्ग् समा स्समाँश्शतग्ग् शतग्ग् समाः । समा इति समाः ।

एवं त्वयि त्वय्येवमेवं त्वयि न न त्वय्येवमेवं त्वयि न । त्वयि न न त्वयि त्वयि नान्यथान्यथा न त्वयि त्वयि नान्यथा । नान्यथान्यथा ननान्यथेत इतोन्यथा ननान्यथेतः ।

अन्यथेत इतोन्यथान्यथेतोऽस्त्यस्ती-तोन्यथान्यथेतोऽस्ति । इतोऽस्त्यस्तीत इतोऽस्ति ननास्तीत इतोऽस्तिन । अस्तिनना-स्त्यंस्ति न कर्म कर्म ना-स्त्यंस्ति न कर्म ।

न कर्म कर्म न न कर्म लिप्यते लिप्यते कर्म न न कर्म लिप्यते। कर्म लिप्यते लिप्यते कर्म कर्म लिप्यते नरे नरे लिप्यते कर्म कर्म लिप्यते नरे। लिप्यते नरे नरे लिप्यते लिप्यते नरे। नर इति नरे॥

[३]

असुर्या नाम नामासुर्या असुर्या नाम ते ते नामासुर्या असुर्या नामते नामतेते नाम नामते लोका लोकास्ते नामनामते लोकाः।

ते लोका लोकास्ते ते लोका अन्धे नान्धेनं लोकास्ते ते लोका अन्धेनं। लोका अन्धेनान्धेनं लोका लोका अन्धेन तमंसा तमंसान्धेनं लोका लोका अन्धेन तमंसा ।

अन्धेन तमंसा तमंसान्धेनान्धेन तमसावृंता आवृंता स्तमंसान्धेनान्धेन तमसावृंताः । तमसावृंता आवृंतास्तमंसा तमसावृंताः । आवृंता इत्याऽवृंताः ।

ताग्ग्स्तेते ताग्ग्स्ताग्ग्स्ते प्रेत्य प्रेत्यते ताग्ग्स्ताग्ग्स्ते प्रेत्यं। ते प्रेत्य प्रेत्यते ते प्रेत्याभ्यभि प्रेत्यते ते प्रेत्याभि ।

प्रेत्याभ्यभिप्रेत्य प्रेत्याभि गंच्छन्ति गच्छन्त्यभि प्रेत्य प्रेत्याभि गंच्छन्ति । प्रेत्येति प्रऽइत्य ।

अभिगंच्छन्ति गच्छन्त्यभ्यभि गंच्छन्ति ये ये गंच्छन्त्यभ्यभिगंच्छन्ति ये। गच्छन्ति ये ये गंच्छन्ति गच्छन्ति ये के के ये गंच्छन्ति गच्छन्ति ये के ।

ये-के के-ये ये-के-चं च-के-ये ये-के चं । के-चं च-के के-चाँत्महनं आत्महनंश्च के के चाँत्महनः । चात्महनं आत्महनंश्च चात्महनो जना जनाँ आत्महनंश्च चात्महनो जनाँः । आत्महनो जना जनाँ आत्महनं आत्महनो जनाँः । आत्महन इत्याँत्माऽहनः । जना इति जनाँः ॥

[४]

अनेँजदेक मेक मनेँ जदनेँ जदेकं मनंसो मनंस एकमनेँ जदनेँ जदेकं मनंसः । एकं मनंसो मनंस एकमेकं मनंसो जवीँयो जवीँयो मनंस एक मेकं मनंसो जवीँयः । मनंसो जवीँयो जवीँयो मनंसो मनंसो जवीँयो न न जवीँयो मनंसो मनंसो जवीँयोन ।

जवीँयोन न जवीँयो जवीँयो नैनं दे नन्न जवीँयो जवीँयो नैनंत् । नैनंदे नन्न नैनंद्देवा देवा एंनन्न नैनंद्देवाः । एनद्देवा देवा एंनदेनद्देवा आँप्नुवन्नाप्नुवन्देवा एंनदेनद्देवा आँप्नुवन् ।

देवा आँप्नुवन्नाप्नुवन्देवा देवा आँप्नु वन् पूर्वं पूर्वमाप्नुवन्देवा देवा आँप्नुवन्पूर्वमँ ।

आप्नुवन्पूर्वं पूर्वमाप्नुवन्नाप्नुवन् पूर्व मर्षदर्षत् पूर्वमाप्नु-वन्नाप्नुवन् पूर्वमर्षत् । पूर्व मर्षदर्षत् पूर्वं पूर्व मर्षत् । अर्षदित्यर्षत् ।

तद्धावंतो धावंतस्तत्तद्धावंतोन्या नन्न्यान् धावंत-स्तत्तद्धावंतो-

न्यान् । धावंतोन्या-नन्यान् धावंतो धावंतोन्या-नत्यत्यन्यान् धावंतो धावंतोन्न्यानतिं ।

अन्न्यानत्य-त्यन्न्या-नन्न्यान-त्यैंत्ये-त्यन्नानन्न्या-नत्यैंति । अत्यैंत्ये-त्यत्यत्यैंति तिष्ठत्तिष्ठंदे-त्यत्यत्यैंति तिष्ठंत् । एति तिष्ठत्तिष्ठंदेत्येति तिष्ठत्त-स्मिग्ग्-स्तस्मिग्ग्-स्तिष्ठंदेत्येति तिष्ठत्तस्मिन्नँ । तिष्ठत्तस्मिग्ग्-स्तस्मिग्ग्-स्तिष्ठ-त्तिष्ठत्तस्मिन्ँनपो पस्तस्मिग्ग्-स्तिष्ठ त्तिष्ठत्तस्मिन्ँनपः ।

तस्मिन्ँनपो पस्तस्मिग्ग्-स्तस्मिन्ँनपो मँतरिश्वँ मातरिश्वा पस्तस्मिग्ग्-स्तस्मिन्ँनपो मँतरिश्वँ । अपो मँतरिश्वँ मातरिश्वा पोपो मँतरिश्वँ दधाति दधाति मातरिश्वा पोपो मँतरिश्वँ दधाति। मातरिश्वँ दधाति दधाति मातरिश्वँ मातरिश्वँ दधाति। दधातीतिं दधाति ॥

[५]

तदेँजत्ये-जति तत्तदेँजति ननैजंति तत्त-देँजतिन। एजतिन नैजंत्येजति नेजंत्येजति नैजंत्ये जति नेजंति । नेजंत्ये-जति ननेजंति दूरे दूर एँजति ननेजंति दूरे ।

एजति दूरे दूर एँजत्येजति दूर उं अन्तिकेँन्तिक उं दूर एँजत्येजति दूर उं अन्तिके । दूर उं अन्तिकेँन्तिक उं दूरे दूर उं अन्तिके । ऊं इत्यूँम् । अन्तिक इत्यनँतिके ।

अन्तरस्या-स्यान्तरन्तरस्य सर्वस्य सर्वस्यास्यान्तरन्तरस्य सर्वस्य। अस्य सर्वस्य सर्वस्यास्यास्य सर्वस्यो सर्वस्य सर्वस्यो सर्वस्यास्यास्य सर्वस्यो सर्वस्य ।

सर्वस्यो सर्वस्य सर्वस्यो सर्वस्य सर्वस्यो सर्वस्यास्यास्य सर्वस्यो सर्वस्य सर्वस्यो सर्वस्यास्य । ऊं इत्यूम् ।

सर्वस्यास्यास्य सर्वस्य सर्वस्यास्य बाह्यतो बाह्यतोस्य सर्वस्य सर्वस्यास्य बाह्यतः । अस्यबाह्यतो बाह्यतोस्यास्य बाह्यतः । बाह्यत इति बाह्यतः ॥

[६]

यस्तु तु यो यस्तु सर्वाणि सर्वाणि तु यो यस्तु सर्वाणि। तु सर्वाणि सर्वाणि तु तु सर्वाणि भूतानि भूतानि सर्वाणि तु तु सर्वाणि भूतानि ।

सर्वाणि भूतानि भूतानि सर्वाणि सर्वाणि भूतान्यात्मन्नात्मन् भूतानि सर्वाणि सर्वाणि भूतान्यात्मन् । भूतान्यात्मन्नात्मन् भूतानि भूतान्यात्मन्नेवैवात्मन् भूतानि भूतान्-न्यात्मन्नेव ।

आत्मन्नेवैवात्मन्नात्मन्नेवानु पश्यंत्यनु पश्यंत्ये-वात्मन्नात्मन्नेवानु पश्यंति । एवानु पश्यंत्यनु-पश्यंत्येवै-वानु-पश्यंति । अनु पश्यतीत्यनुऽपश्यंति ।

सर्वभूतेषु च च सर्वभूतेषु सर्वभूतेषु चात्मानमात्मानं च सर्व भूतेषु सर्वभूतेषु चात्मानम् । सर्वभूतेष्विति सर्वभूतेषु ।

चात्मानं-मात्मानं च चात्मानं ततस्ततं आत्मानं च चात्मानन्ततः । आत्मानं ततस्ततं आत्मानमात्मानं ततो न न ततं आत्मानमात्मानं ततो न ।

ततो न न ततस्ततो न विविन ततस्ततो नवि । नविविन नविजुंगुप्सते जुगुप्सते विन नविजुंगुप्सते । विजुंगुप्सते जुगुप्सते विविजुंगुप्सते । जुगुप्सत इति जुगुप्सते ॥

[७]

यस्मिन् सर्वाणि सर्वाणि यस्मिन्यस्मिन् सर्वाणि भूतानि भूतानि सर्वाणि यस्मिन्यस्मिन् सर्वाणि भूतानि ।

सर्वाणि भूतानि भूतानि सर्वाणि सर्वाणि भूतान्यात्मात्मा भूतानि सर्वाणि सर्वाणि भूतान्यात्मा ।

भूतान्यात्मात्मा भूतानि भूतान्यात्मैवै वात्मा भूतानि भूतान्यात्मैव ।

आत्मैवैवात्मात्मैवा भूदभूदेवात्मात्मै वा भूत् । एवा भूद भूदेवैवा भूद्विजानतो विजानतो भूदेवैवा भूद्विजानतः । अभूद्विजानतो विजानतोऽभूद भूद्विजानतः । विजानत इति विऽजानतः ।

तत्र कः कस्तत्र तत्र को मोहो मोहः कस्तत्र तत्र को मोहः । को मोहो मोहः कः को मोहः कः को मोहः कः को मोहः कः ।

मोहः कः को मोहो मोहः कश्शोकश्शोकः को मोहो मोहः कश्शोकः ।

कश्शोकश्शोकः कः कश्शोकं एकत्व मेकत्वग्ं शोकः कः कः शोकं एकत्वम् । शोकं एकत्वमेकत्वग्ं शोकः शोकं एकत्व मनुपश्यंतोऽनु पश्यंत एकत्वग्ं शोकः शोकं एकत्व-मनुपश्यंतः ।

एकत्वमनु-पश्यंतोऽनुपश्यंत एकत्व-मेकत्व-मनुपश्यंतः । एकत्वमित्येकत्वम् । अनुपश्यंत इत्यनुऽपश्यंतः ॥

## [८]

स परि परि स स पर्यगादगात्परि स स पर्यगात् । पर्यगादगात्परि पर्यगाच्छुक्रग्ं शुक्रमगात्परि पर्य-गाच्छुक्रम् । अगाच्छुक्रग्ं शुक्रमगादगा-च्छुक्रमकाय-मकायग्ं शुक्रमगादगाच्छुक्रमकायम् ।

शुक्रमकाय-मकायग्ं शुक्रग्ं शुक्रमकाय-मव्रणमव्रण मकायग्ं शुक्रग्ं शुक्रमकाय-मव्रणम् ।

अकायमव्रण-मव्रणमकाय-मकाय-मव्रणमस्नाविर-मस्नाविरमव्रण-मकायमकाय-मव्रण-मस्नाविरम् ।

अव्रणमस्नाविर-मस्नाविर-मव्रणमव्रण-मस्नाविरग्ं शुद्धग्ं शुद्धमस्नाविर-मव्रणमव्रण-मस्नाविरग्ं शुद्धम् ।

अस्नाविरग्ग् शुद्धग्ग् शुद्धमंस्नाविर-मंस्नाविरग्ग् शुद्धमपाँप विद्धमपाँप विद्धग्ग् शुद्धमंस्नाविर-मंस्नाविरग्ग् शुद्धमपाँप विद्धम् ।

शुद्धमपाँप विद्धमपाँप विद्धग्ग् शुद्धग्ग् शुद्धमपाँप विद्धम् । अपाँपविद्ध-मित्यपाँपऽविद्धम् ।

कविर्मनीषी मंनीषी कविः कविर्मनीषी पंरिभूः पंरिभू-र्मनीषी कविः कवि-र्मनीषी पंरिभूः ।

मनीषी पंरिभूः पंरिभू-र्मनीषी मंनीषी पंरिभू-स्वंयम्भू स्स्वंयम्भूः पंरिभू-र्मनीषी मंनीषी पंरिभू-स्वंयम्भूः ।

परिभू-स्वंयम्भू-स्वंयम्भूः पंरिभूः पंरिभू-स्वंयम्भूर्याँथा तथ्यतो याँथा तथ्यत-स्स्वंयम्भूः पंरिभूः पंरिभूः स्वंयं-भूर्याँथा तथ्यतः । परिभूरितिं परिऽभूः ।

स्वयम्भूर्याँथा तथ्यतो याँथा तथ्यतः स्वंयम्भू-स्स्वंयम्भूर्याँथा तथ्यतोर्थां-नर्थां-न्याथा तथ्यतः स्वंयम्भू-स्स्वंयं-भूर्याँथा तथ्यतोर्थान् । स्वयं-भूरितिं स्वयंऽभूः ।

याथा-तथ्यतोर्था-नर्थाँन्याथा तथ्यतो-याँथा तथ्यतोर्थान्वि व्यर्थाँन्याथा-तथ्यतो याँथा-तथ्यतोर्थान्वि । याथा-तथ्यत इतिं याथाऽतथ्यतः ।

अर्थान्वि व्यर्था-नर्था-न्व्यंदधा ददधाद्व्यर्था-नर्थान् व्यंदधात् ।

व्यंदधाद धधाद्वि व्यंधधाच्छा-श्वतीभ्यंः शाश्वतीभ्योऽदधाद्वि व्यंदधाच्छाश्वतीभ्यंः ।

अदधाच्छाश्वतीभ्यंः शाश्वतीभ्यो दधाद दधाच्छाश्वतीभ्यः समाभ्य-स्समाभ्यः शाश्वतीभ्यो दधा ददधाच्छाश्वतीभ्यः समाभ्यः ।

शाश्वतीभ्य-स्समाभ्यः समाभ्यः शाश्वतीभ्यंः शाश्वतीभ्य स्समाभ्यः । समाभ्य इति समाभ्यः ॥

[९]

अन्धं तमस्त्मोन्धमन्धं तमः प्र प्र तमोन्धमन्धं तमः प्र ।

तमः प्र प्र तमस्तमः प्रविंशन्ति विशन्ति प्र तमस्तमः प्रविंशन्ति। प्रविंशन्ति विशन्ति प्र प्रविंशन्ति ये ये विंशन्ति प्र प्रविंशन्ति ये ।

विशन्ति ये ये विंशन्ति विशन्ति ये विंद्यामविंद्यां ये विंशन्ति विशन्ति ये विंद्याम् ।

ये विंद्यामविंद्यां ये ये विंद्या-मुपासंत उपासते विंद्यां ये ये विंद्यामुपासंते। अविंद्यामुपासंत उपासतेऽविंद्या-मविंद्यामुपासंते। उपासंत इत्युंपऽआसंते ।

ततो भूयं इव भूयं इव ततस्ततो भूयं इव ते ते भूयं इव ततस्ततो भूयं इव ते । भूयं इव ते ते भूयं इव भूयं इव ते

तमस्तमस्ते भूयं इव भूयं इव ते तमंः । भूयं इवेति भूयंः इव ।

ते तमस्तमस्ते ते तमो ये ये तमस्तेते तमो ये । तमो ये ये तम स्तमो य उं विद्यायाँ विद्यायामुये तमस्तमो य उं विद्यायाँम् । य उं विद्यायाँ विद्यायाँमुये य उं विद्यायाँग्ग् रता रता विद्यायाँमुये य उं विद्यायाँग्ग् रताः । ऊं इत्यूँम् । विद्यायाँग्ग् रता रता विद्यायाँ विद्यायाँग्ग् रताः । रता इतिं रताः ॥

[१०]

अन्यदेवैवान्य-दन्य देवाहुराहुरेवान्य-दन्य देवाहुः । एवा-हुराहुरेवैवाहु-र्विद्ययाँ विद्यया-हुरेवैवाहु-र्विद्ययाँ । आहुर्विद्ययाँ विद्ययाहुराहु विद्ययान्यदन्य-द्विद्ययाहु-राहु-र्विद्ययान्यत् । विद्ययान्य-दन्यद्विद्ययाँ विद्ययान्य-दाँहु-राहु-रन्य-द्विद्ययाँ विद्ययान्यदाँहुः । अन्यदाँहुराहु-रन्यदन्य-दाँहुर-विंद्यया विंद्यया-हुरन्यदन्य-दाँहुर-विंद्यया । आहुर-विंद्यया विंद्ययाहुराहुर-विंद्यया । अविंद्ययेत्यविंद्यया । इतिं शुश्रुम शुश्रुमेतीतिं शुश्रुम धीराँणां धीराँणाग्ग् शुश्रुमेतीतिं शुश्रुम धीराँणाम् । शुश्रुम धीराँणां धीराँणाग्ग् शुश्रुम शुश्रुम धीराँणां ये ये धीराँणाग्ग् शुश्रुम शुश्रुम धीराँणां ये । धीराँणां ये ये धीराँणां धीराँणां ये नोँ नो ये धीराँणां धीराँणां ये नंः । ये नोँ नो ये ये नस्तन्नो ये ये नस्तत् । नस्तत्तन्नोँ

नस्तद्विंचचक्षिरे विंचचक्षिरे तन्नों नस्तद्विंचचक्षिरे । तद्विंचचक्षिरे विंचचक्षिरे तत्तद्विंचचक्षिरे । विचचक्षिर इतिं विचचक्षिरे ॥

[११]

विद्यां चं च विद्यां विद्यां चा विंद्यामविंद्यां च विद्यां विद्यां चा विंद्यां । चा विंद्यामविंद्यां च चा विंद्यां च चा विंद्यां च चा विंद्यां च । अविंद्यां च चा विंद्यामविंद्यां च योयश्चा विंद्यामविंद्यां च यः । च यो यश्चं चयस्तत्तद्यश्चं च यस्तत् ।

यस्तत्तद्यो यस्तद्वेद वेद तद्यो यस्तद्वेदं । तद्वेद वेद तत्तद्वेदोभयं-मुभयं वेद तत्तद्वेदोभयम् ।

वेदोभयंमुभयं वेद वेदोभयंग् सह सहो-भयं वेद वेदोभयंग् सह । उभयंग्सह सहोभयंमुभयंग् सह । सहेतिं सह । अविंद्यया मृत्युं मृत्युमविंद्यया विंद्यया मृत्युं तीर्त्वा तीर्त्वा मृत्युमविंद्यया विंद्यया मृत्युं तीर्त्वा ।

मृत्युं तीर्त्वा तीर्त्वा मृत्युं मृत्युं तीर्त्वा विद्ययाँ विद्ययाँतीर्त्वा मृत्युं मृत्युं तीर्त्वा विद्ययाँ । तीर्त्वा विद्ययाँ विद्ययाँ तीर्त्वा तीर्त्वा विद्ययामृतंममृतँ विद्ययाँ तीर्त्वा तीर्त्वा विद्यया मृतम् । विद्ययामृतंममृतँ विद्ययाँ विद्ययामृतंमश्नुते श्नुतेमृतँ विद्ययाँ विद्ययामृतंमश्नुते । अमृतंमश्नुते श्नुतेमृतं-ममृतं-मश्नुते । अश्नुत इत्यंश्नुते ॥

[१२]

अन्धं तमस्तमोन्धमन्धं तमः प्र प्र तमोन्धमन्ध तमः प्र। तमः प्र प्र तमस्तमः प्रविंशन्ति विशन्ति प्र तमस्तमः प्रविंशन्ति। प्रविंशन्ति विशन्ति प्र प्रविंशन्ति ये ये विंशन्ति प्र प्रविंशन्ति ये। विशन्ति ये ये विंशन्ति विशन्ति ये सँभूतिमसँभूतिं ये विंशन्ति विशन्ति ये सँभूतिम्। ये सँभूतिम-सँभूतिं ये ये सँभूतिमुपासंत उपासते सँभूतिं ये ये सँभूतिमुपासंते। असँभूति-मुपासंत उपासते सँभूति-मसँभूति-मुपासंते। असँभूति मित्य-सँऽभूतिम्। उपासंत इत्युंपऽआसंते।

ततो भूयं इव भूयं इव ततस्ततो भूयं इव ते ते भूयं इव ततस्ततो भूयं इव ते। भूयं इव ते ते भूयं इव भूयं इव ते तमस्तमस्ते भूयं इव भूयं इव ते तमः।

भूयं इवेति भूयःऽइव। ते तमस्तमस्ते ते तमो ये ये तमस्ते ते तमो ये।

तमो ये ये तमस्तमो य उ संभूँत्याग्ग् संभूँत्यामुये तमस्तमो य उ संभूँत्याम्। य उ संभूँत्याग्ग् संभूँत्यामुये य उ संभूँत्याग्ग् रता रतास्संभूँत्यामुये य उ संभूँत्याग्ग् रताः। ऊं इत्यूँम्। संभूँत्याग्ग् रता रताः संभूँत्याग्ग् संभूँत्याग्ग् रताः। संभूँत्यामिति संऽभूँत्याम्। रता इतिं रताः॥

[१३]

अ॒न्यदे॒वैवान्य-द॒न्यदे॒वाहु॒राहु-रे॒वान्य-द॒न्य दे॒वाहुः । ए॒वा-हु॒राहु॒रे॒वैवाहु-स्सँ᳚भ॒वात्सँ᳚भ॒वा-दा॒हु॒रे॒वैवाहु-स्सँ᳚भ॒वात् । आ॒हुः सँ᳚भ॒वात्सँ᳚भ॒वा-दा॒हु॒रा॒हुः सँ᳚भ॒वा-द॒न्य-द॒न्य-त्सँ᳚भ॒वादा॒हु॒रा॒हु-स्सँ᳚भ॒वा-द॒न्यत् । सं॒भ॒वा-द॒न्य-द॒न्य-त्सँ᳚भ॒वा-त्सँ᳚भ॒वा-द॒न्य-दाँ᳚हुराहु - र॒न्य - त्सँ᳚भ॒वा - त्सँ᳚भ॒वाद॒न्यदाँ᳚हुः । सं॒भ॒वादिति॑ सं॒भ॒वात् ।

अ॒न्यदाँ᳚हु-राहु॒रन्य-द॒न्यदाँ᳚हु॒र सँ᳚भवा॒द-सँ᳚भवा-दाहु-र॒न्य-द॒न्य-दाँ᳚हु॒र सँ᳚भवात् । आ॒हु॒र सँ᳚भवा॒द-सँ᳚भवा-दाहुराहु॒र सँ᳚भवात् । असँ᳚भवा॒दित्य सँ᳚भवात् ।

इति॑ शुश्रुम शुश्रु॒मेतीति॑ शुश्रु॒म धीरा᳚णां॒ धीरा᳚णाग्ग् शुश्रु॒मेतीति॑ शुश्रु॒म धीरा᳚णाम् ।

शु॒श्रु॒म॒ धीरा᳚णां॒ धीरा᳚णाग्ग् शुश्रुम शुश्रु॒म धीरा᳚णां॒ ये ये धीरा᳚णाग्ग् शुश्रुम शुश्रु॒म धीरा᳚णां॒ ये । धीरा᳚णां॒ ये ये धीरा᳚णां॒ धीरा᳚णां॒ ये नो᳚ नो॒ ये धीरा᳚णां॒ धीरा᳚णां॒ ये नः॑ । ये नो᳚ नो॒ ये ये न॒स्तत्तन्नो॒ ये ये न॒स्तत् । न॒स्तत्तन्नो᳚ न॒स्त-द्विं॑चचक्षि॒रे विं॑चचक्षि॒रे तन्नो᳚ न॒स्तद्विं॑चचक्षि॒रे । तद्विं॑चचक्षि॒रे विं॑चचक्षि॒रे तत्तद्विं॑चचक्षि॒रे । वि॒च॒च॒क्षि॒र इति॑ वि॒ऽच॒च॒क्षि॒रे ॥

[ १४ ]

संभूतिं च च संभूतिग्ं संभूतिं च विनाशं विनाशं च संभूतिग्ं संभूतिं च विनाशम् । संभूति-मिति संऽभूतिम् । च विनाशं विनाशं च च विनाशं च च विनाशं च च विनाशं च ।

विनाशं च च विनाशं विनाशं च यो यश्च विनाशं विनाशं च यः । विनाशमिति विऽनाशम् ।

च यो यश्च च यस्तत्तद्यश्च च यस्तत् । यस्तत्तद्यो यस्तद्वेद वेदतद्यो यस्तद्वेदं । तद्वेद वेद तत्तद्वेदोभयं-मुभयं वेद तत्तद्वेदो-भयम् ।

वेदोभयं-मुभयं वेद वेदोभयंग्ं सह सहो-भयं वेद वेदोभयंग्ं सह उभयंग्ं सह सहो-भयं-मुभयंग्ं सह सहेति सह ।

विनाशेन मृत्युं मृत्युं विनाशेन विनाशेन मृत्युं तीर्त्वा तीर्त्वा मृत्युं विनाशेन विनाशेन मृत्युं तीर्त्वा । विनाशेनेति विऽनाशेन ।

मृत्युं तीर्त्वा तीर्त्वा मृत्युं मृत्युं तीर्त्वा संभूत्या संभूत्या तीर्त्वा मृत्युं मृत्युं तीर्त्वा संभूत्या । तीर्त्वा संभूत्या संभूत्या तीर्त्वा तीर्त्वा संभूत्यामृतं-ममृतग्ं संभूत्या तीर्त्वा तीर्त्वा संभूत्यामृतम् । संभूत्यामृतं-ममृतग्ं संभूत्या संभूत्यामृतं-मश्नुते श्नुते मृतग्ं संभूत्या संभूत्यामृतमश्नुते । संभूत्येति संऽभूत्या । अमृतमश्नुते श्नुते-मृतममृतं-मश्नुते । अश्नुत इत्यश्नुते ॥

[१५]

हिरण्मयेन पात्रेण पात्रेण हिरण्मयेन हिरण्मयेन पात्रेण सत्यस्यं सत्यस्य पात्रेण हिरण्मयेन हिरण्मयेन पात्रेण सत्यस्यं। पात्रेण सत्यस्यं सत्यस्य पात्रेण पात्रेण सत्यस्यापिंहित-मपिंहितग्ग् सत्यस्य पात्रेण पात्रेण सत्यस्यापिंहितम् ।

सत्यस्यापिंहित-मपिंहितग्ग् सत्यस्यं सत्यस्यापिंहितं मुखं मुखमपिंहितग्ग् सत्यस्यं सत्यस्यापिंहितं मुखम् ।

अपिंहितं मुखं मुखमपिंहित-मपिंहितं मुखम् । अपिंहित मित्यपिंऽहितम् । मुखमिति मुखम् ।

तत्त्वं त्वं तत्तत्वं पूषन् पूषग्ग्-स्त्वं तत्तत्वं पूषन् । त्वं पूषन् पूषग्ग्-स्त्वं त्वं पूषन्नपापं पूषग्ग्-स्त्वं त्वं पूषन्नपं ।

पूषन्नपापं पूषन् पूषन्नपावृंणु वृण्वापं पूषन् पूषन्नपावृंणु। अपावृंणु वृण्वापापा-वृंणु सत्य धर्माय सत्य धर्माय वृण्वापापा-वृंणु सत्यधर्माय आवृंणु ।

वृणुसत्य-धर्माय सत्य-धर्माय वृणु वृणु सत्य-धर्माय दृष्टये दृष्टये सत्य-धर्माय वृणु वृणु सत्य-धर्माय दृष्टये ॥

सत्यधर्माय दृष्टये दृष्टये सत्य धर्माय सत्यधर्माय दृष्टये। सत्यधर्मायेतिं सत्यऽधर्माय । दृष्टय इतिं दृष्टये ॥

[१६]

पूषँन्नेक ऋष एकऋषे पूषन् पूषँन्नेक ऋषे यम यमैक ऋषे पूषन् पूषँन्नेक ऋषे यम। एक ऋषे यम यमैक ऋष एक ऋषे यम सूर्य सूर्य यमैक ऋष एक ऋषे यम सूर्य । एक ऋष इत्यैँकऽऋषे ।

यम सूर्य सूर्य यम यम सूर्य प्राजाँपत्य प्राजाँपत्य सूर्य यम यम सूर्य प्राजाँपत्य । सूर्य प्राजाँपत्य प्राजाँपत्य सूर्य सूर्य प्राजाँपत्य वि वि प्राजाँपत्य सूर्य सूर्य प्राजाँपत्य वि। प्राजाँपत्य वि वि प्राजाँपत्य प्राजाँपत्य व्यूँहोह वि प्राजाँपत्य प्राजाँपत्य व्यूँह । प्राजाँपत्येति प्राजाँऽपत्य ।

व्यूँहोह वि व्यूँह रश्मीन् रश्मीँनूह विव्यूँह रश्मीन् । ऊहरश्मीन् रश्मीँनू-होह रश्मीन् सग्ग् सग्ग् रश्मीँनू-होह रश्मीन्सम् । रश्मीन् सग्ग् सग्ग् रश्मीन् रश्मीन् समूँहोह सग्ग् रश्मीन् रश्मीन् समूँह ।

समूँहोह सग्ग् समूँह तेजस्तेजं ऊह सग्ग् समूँह तेजः। ऊह तेजस्तेजं ऊहोह तेजो यद्यत्तेजं ऊहोह तेजो यत् ।

तेजो यद्यत्तेजस्तेजो यत्तेँ ते यत्तेज-स्तेजो यत्तेँ। यत्तेँ ते यद्यत्तेँ रूपग्ग् रूपन्ते यद्यत्तेँ रूपम्। ते रूपग्ग् रूपं तेँ ते रूपं कल्याँण-तमं कल्याँण-तमग्ग् रूपं तेँ ते रूपं कल्याँण-तमम् । रूपं

कल्याँण-तमं कल्याँण-तमग्ग् रूपग्ग् रूपं कल्याँण-तमं तत्तत्कल्याँण-तमग्ग् रूपग्ग् रूपं कल्याँण-तमं तत् । कल्याँण-तमं तत्तत्कल्याँण-तमं कल्याँण-तमं तत्तै ते तत्कल्याँण-तमं कल्याँण-तमं तत्ते । कल्याँण-तममिति कल्याँणऽतमम् ।

तत्ते ते तत्तत्ते पश्यामि पश्यामि ते तत्तत्ते पश्यामि । ते पश्यामि पश्यामि ते ते पश्यामि । पश्यामीति पश्यामि ।

यो सा असौ यो यो सा वसा असा असौ यो यो सा वसौ । असा वसा असा असा असावसौ पुरुषः पुरुषोसा असा असावसौ पुरुषः । असौ पुरुषः पुरुषो सा असौ पुरुषः स स पुरुषो सा असौ पुरुषस्सः । पुरुषस्स स पुरुषः पुरुषस्सोहमहग्ग् स पुरुषः पुरुषस्सोहं । सोहमहग्ग् स सोह-मंस्म्य-स्म्यहग्ग् स सोहमंस्मि । अहमंस्म्य-स्म्यह-महमंस्मि । अस्मीत्यंस्मि ॥

[१७]

वायु-रनिंल-मनिंलं वायुर्वायु-रनिंल-ममृतं-ममृत-मनिंलं वायु-र्वायु-रनिंल-ममृतम् । अनिंल-ममृतं-ममृत-मनिंल-मनिंल-ममृत-मथाथामृत-मनिंल-मनिंल-ममृतमथं । अमृत-मथाधामृतं-ममृत-मथेद-मिदमथामृतं-ममृत-मथेदम् ।अथेद-मिद-मथाथेदं भस्माँन्तं भस्माँन्तमिद मथाथेदं भस्माँन्तम् । इदं भस्माँन्तं भस्माँन्तमिदमिदं भस्माँन्तग्ग् शरींरग्ग् शरींरं भस्माँन्तमिदमिदं भस्माँन्तग्ग् शरींरम् ।

भस्मान्तग्ं शरीरग्ं शरीरं भस्मान्तं भस्मान्तग्ं शरीरम् । भस्मान्तमिति भस्मऽअन्तम् । शरीरमिति शरीरम् ।

ॐ ३ क्रतो क्रत ॐ ३ मों ३ क्रतो स्मर स्मर क्रत ॐ ३ मों ३ क्रतो स्मरं ।

क्रतो स्मर स्मर क्रतो क्रतो स्मरं कृतं कृतग्ं स्मर क्रतो क्रतो स्मरं कृतम् ।

क्रतो इति क्रतो । स्मरं कृतं कृतग्ं स्मर स्मरं कृतग्ं स्मर स्मर कृतग्ं स्मर स्मरं कृतग्ं स्मर । कृतग्ं स्मर स्मर कृतं कृतग्ं स्मर क्रतो क्रतो स्मर कृतं कृतग्ं स्मर क्रतो ।

स्मर क्रतो क्रतो स्मर स्मर क्रतो स्मर स्मर क्रतो स्मर स्मर क्रतो स्मरं ।

क्रतो स्मर स्मर क्रतो क्रतो स्मरं कृतं कृतग्ं स्मर क्रतो क्रतो स्मरं कृतम् । क्रतो इति क्रतो ।

स्मरं कृतं कृतग्ं स्मर स्मरं कृतग्ं स्मर स्मर कृतग्ं स्मर स्मरं कृतग्ं स्मर । कृतग्ं स्मर स्मर कृतं कृतग्ं स्मर । स्मरेति स्मर ॥

[१८]

अग्ने नय नयाग्नेग्ने नयं सुपथा सुपथा नयाग्नेग्ने नयं सुपथा । नयं सुपथा सुपथा नय नयं सुपथा राये राये सुपथा नय नयं सुपथा राये । सुपथा राये राये सुपथा सुपथा राये अस्मानस्मान् राये

सुपथा॑ सुपथा॑ राये अस्मान्। सुपथेति॑ सुपथा॑। राये अस्मानस्मान् राये राये अस्मान्विश्वा॑नि विश्वा॑न्यस्मान् राये राये अस्मान्विश्वा॑नि।

अस्मान्विश्वा॑नि विश्वा॑न्यस्मानस्मान्विश्वा॑नि देव देव विश्वा॑न्यस्मानस्मान्विश्वा॑नि देव। विश्वा॑नि देव देव विश्वा॑नि विश्वा॑नि देव वयुना॑नि वयुना॑नि देव विश्वा॑नि विश्वा॑नि देव वयुना॑नि। देव वयुना॑नि वयुना॑नि देव देव वयुना॑नि विद्वान् विद्वान् वयुना॑नि देव देव वयुना॑नि विद्वान्। वयुना॑नि विद्वान् विद्वान् वयुना॑नि वयुना॑नि विद्वान्। विद्वानिति॑ विद्वान्। युयोध्यस्म-दस्मद्युं॑योधि युं॑योध्यस्म-ज्जुं॑हुराणं जुं॑हुराणमस्मद्युं॑योधि युं॑योध्यस्म ज्जुं॑हुराणम्। अस्मज्जुं॑हुराणं जुं॑हुराण मस्म-दस्म-ज्जुं॑हुराण मेन एनो॑ जुहुराणमस्म-दस्मज्जुं॑हुराण-मेनः॑। जुहुराणमेन एनो॑ जुहुराणं जुं॑हुराण-मेनो भूयि॑ष्ठां भूयि॑ष्ठामेनो॑ जुहुराणं जुं॑हुराण-मेनो भूयि॑ष्ठां। एनो भूयि॑ष्ठां भूयि॑ष्ठा मेन एनो भूयि॑ष्ठां ते ते भूयि॑ष्ठा-मेन एनो भूयि॑ष्ठां ते। भूयि॑ष्ठां ते ते भूयि॑ष्ठां भूयि॑ष्ठां ते नम॑ उक्तिं नम॑ उक्तिं ते भूयि॑ष्ठां भूयि॑ष्ठां ते नम॑ उक्तिम्। ते नम॑ उक्तिं नम॑ उक्तिं ते ते नम॑ उक्तिं विधेम विधेम नम॑ उक्तिं ते ते नम॑ उक्तिं विधेम। नम॑ उक्तिं विधेम विधेम नम॑ उक्तिं नम॑ उक्तिं विधेम। नम॑ उक्तिमिति नमः॑ऽउक्तिम्। विधेमेति॑ विधेम॥

ॐ शान्तिः शान्तिः शान्तिः॑॥

# ॥ गणपति प्रार्थना ॥

## ॥ घनपाठः ॥

गणानाँन्त्वा त्वा गणानाँ गणानाँत्वा गणपंतिं गणपंतिं त्वा गणानाँ गणानाँन्त्वा गणपंतिम् ।

त्वा गणपंतिं गणपंतिं त्वा त्वा गणपंतिगं हवामहे हवामहे गणपंतिं त्वा त्वा गणपंतिगं हवामहे । गणपंतिगं हवामहे हवामहे गणपंतिं गणपंतिगं हवामहे कविन्कविगं हवामहे गणपंतिं गणपंतिगं हवामहे कविम् । गणपंतिमितिंगण-पतिम् ।

हवामहे कविं कविगं हवामहे हवामहे कविं कंवीनान्कंवीनां कविगं हवामहे हवामहे कविन्कंवीनाम् ।

कविन्कंवीनान्कंवीनां कविन्कविं कंवीनामुंपमश्रंवस्तम मुपमश्रंवस्तम-न्कवीनां कविन्कविं कंवीनामुंपमश्रंवस्तमम् ।

कवीनामुंपमश्रंव-स्तममुपमश्रंवस्तमं कवीना-न्कंवीना मुंपमश्रंवस्तमम् । उपमश्रंवस्तम - मित्युंपमश्रंवः - तमम् ।

ज्येष्ठराजं ब्रह्मंणां ब्रह्मंणां ज्येष्ठराजं ज्येष्ठराजं ब्रह्मंणां ब्रह्मणो ब्रह्मणो ब्रह्मंणां ज्येष्ठराजं ज्येष्ठराजं ब्रह्मंणां ब्रह्मणः । ज्येष्ठराजमितिंज्येष्ठ राजम् ।

ब्रह्मंणां ब्रह्मणो ब्रह्मणो ब्रह्मंणां ब्रह्मंणां ब्रह्मणस्पते पते ब्रह्मणो ब्रह्मंणां ब्रह्मंणां ब्रह्मणस्पते ।

ब्रह्मणस्पते पते ब्रह्मणो ब्रह्मणस्पत आपंते ब्रह्मणो ब्रह्मणस्पत आ । पत आ पंतेपत आनोंन आपंते पत आनंः ।

आनोंन आनंश्शृण्वन् छृण्वन्न आनंश्शृण्वन् । न श्शृण्वन् छृण्वन्नोंन श्शृण्वन्नूतिभिं-रूतिभिंश्शृण्वन्नोंन श्शृण्वन्नूतिभिंः ।

श्शृण्वन्नूतिभिं-रूतिभिंश्शृण्वन् छृण्वन्नूतिभिंस्सीद सीदोतिभिं-श्शृण्वन् छृण्वन्नूतिभिंस्सीद ।

ऊतिभिंस्सीद सीदोतिभिं-रूतिभिंस्सीद सादंनगं सादंनगं सीदोतिभिं-रूतिभिंस्सीद सादंनम् । ऊतिभि-रित्यूति-भिः ।

सीदसादंनगं सादंनगं सीद सीद सादंनम्। सादंनमिति सादंनम् ॥



अहं क्रतुरहं यज्ञः स्वधाहमहमौषधम् ।
मन्त्रोऽहमहमेवाज्यमहमग्निरहं हुतम् ॥

I am the ritual, I am the Sacrifice. I am the offering to the manes,
I am the Medicinal herbs,I am the Mantra, I am the clarified butter,
I am the fire, and I am the oblation.

पिताहमस्य जगतो माता धाता पितामहः ।
वेद्यं पवित्रमोंकार ऋक्साम यजुरेव च ॥

I am the father of this world, the mother, the sustainer and the grandfather;
I am that which is to be known, the purifier, the syllable Om, and also the
Rigveda, Samaveda and Yajurveda.

Bhagavad Gita, Chapter IX : 16-17

## ॥ सरस्वती प्रार्थना ॥

## ॥ संहिता-पाठः ॥

(तै. सं. कां.१ प्र.८ अनु-२२)

ॐ प्रणों देवी सरंस्वती वाजेंभिर्वाजिनींवती । धीनामं वित्र्यंवतु ॥

## ॥ घनपाठः ॥

प्रणों नः प्रप्रणों देवी देवी नः प्रप्रणों देवी । नो देवी देवी नों नो देवी सरंस्वती सरंस्वती देवी नों नो देवी सरंस्वती ।

देवी सरंस्वती सरंस्वती देवी देवी सरंस्वती वाजेंभिर्वाजेंभि-स्सरंस्वती देवी देवी सरंस्वती वाजेंभिः ।

सरंस्वती वाजेंभि-र्वाजेंभि-स्सरंस्वती सरंस्वती वाजेंभि-र्वाजिनींवती वाजिनींवती वाजेंभि-स्सरंस्वती सरंस्वती वाजेंभि-र्वाजिनींवती ।

वाजेंभि-र्वाजिनींवती वाजिनींवती वाजेंभि-र्वाजेंभि-र्वाजिनींवती । वाजिनींवतीतिं वाजिनीं-वती ॥

धीना-मंवित्र्यंवित्री धीनां धीनामंवित्र्यं-वत्व-वत्व-वित्री धीनां धीनामंवित्र्यंवतु । अवित्र्यं-वत्व-वत्व-वित्र्यंवित्र्यंवतु । अवत्वित्र्यंवतु ॥



## ॥ गायत्रीमन्त्रः ॥

## ॥ घनपाठः ॥

तथ्सवितु-स्सवितु-स्तत्तथ्सवितुर्वरेण्यं वरेण्यगं सवितु स्तत्तथ्सवितुर्वरेण्यम् ।

सवितुर्वरेण्यं वरेण्यगं सवितु-स्सवितुर्वरेण्यं भर्गो भर्गो वरेण्यगं सवितु-स्सवितुर्वरेण्यं भर्गः ।

वरेण्यं भर्गो भर्गो वरेण्यं वरेण्यं भर्गो देवस्य देवस्य भर्गो वरेण्यं वरेण्यं भर्गो देवस्य ।

भर्गो देवस्य देवस्य भर्गो भर्गो देवस्य धीमहि धीमहि देवस्य भर्गो भर्गो देवस्य धीमहि ।

देवस्य धीमहि धीमहि देवस्य देवस्य धीमहि । धीमहीति धीमहि ।

धियो यो यो धियो धियो यो नो नो यो धियो धियो योनः ।

यो नो नो यो योनः प्रचोदयात्प्रचोदयान्नो यो योनः प्रचोदयात् ।

नः प्रचोदयात् प्रचोदयान्नो नः प्रचोदयात् । प्रचोदयादिति-प्र-चोदयात् ॥



## ॥ शिवमन्त्राः ॥

## ॥ घनपाठः ॥

नमस्तारायं ताराय नमो नमस्ताराय नमो नमं स्ताराय नमो नमस्ताराय नमः ।

ताराय नमो नमस्तारायं ताराय नमश्शम्भवें शम्भवे नमस्तारायं ताराय नमश्शम्भवें ।

नमश्शम्भवें शम्भवे नमो नमश्शम्भवें च च शम्भवे नमो नमश्शम्भवें च ।

शम्भवें च च शम्भवें शम्भवें च मयोभवें मयोभवें च शम्भवें शम्भवें च मयोभवें । शम्भव इतिं शम्-भवें ।

च मयो भवें मयोभवें च च मयोभवें च च मयोभवें च च मयोभवें च ।

मयोभवें च च मयोभवें मयोभवें च नमो नमश्च मयोभवें मयोभवें च नमः ।

मयोभव इतिंमयः-भवें ।

च नमो नमश्च च नमश्शङ्करायं शङ्कराय नमश्च च नमश्शङ्करायं ।

नमश्शङ्करायं शङ्कराय नमो नमश्शङ्करायं च च शङ्कराय नमो नमश्शङ्करायं च ।

शङ्करायं च च शङ्करायं शङ्करायं च मयस्करायं मयस्करायं च शङ्करायं शङ्करायं च मयस्करायं। शङ्करायेतिं शं-करायं।

च मयस्करायं मयस्करायं च च मयस्करायं च च मयस्करायं च च मयस्करायं च।

मयस्करायं च च मयस्करायं मयस्करायं च नमो नमश्च मयस्करायं मयस्करायं च नमः। मयस्करायेतिं मयः - करायं।

च नमो नमश्च च नमश्शिवायं शिवाय नमश्च च नमश्शिवायं।

नमश्शिवायं शिवाय नमो नमश्शिवायं च च शिवाय नमो नमश्शिवायं च।

शिवायं च च शिवायं शिवायं च शिवतराय शिवतराय च शिवायं शिवायं च शिवतराय ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

---

जगद्गुरो नमस्तुभ्यं शिवाय शिवदाय च।
योगीन्द्राणां च योगीन्द्र गुरूणां गुरवे नमः॥

ब्रह्मवैवर्तपुराणम् - ४, ३०, ४३.

Salutations unto Thee, O teacher of the universe. Thou art the Lord auspicious and the giver of bliss, the foremost of the perfect Yogis, the teacher of teachers. Salutations unto Thee.

## ॥ शिवपञ्चाक्षरीमन्त्रः ॥

### ॥ संहितापाठः ॥

नमः॑ शि॒वाय॑ च ।

### ॥ पदपाठः ॥

नमः॑ । शि॒वाय॑ । च॒ ।

### ॥ क्रमपाठः ॥

नमः॑ शि॒वाय॑ । शि॒वाय॑ च ।

### ॥ जटापाठः ॥

नमः॑ शि॒वाय॑ शि॒वाय॒ नमो॒ नमः॑ शि॒वाय॑ । शि॒वाय॑ च च शि॒वाय॑ शि॒वाय॑ च ।

### ॥ घनपाठः ॥

नमः॑ शि॒वाय॑ शि॒वाय॒ नमो॒ नमः॑ शि॒वाय॑ च च शि॒वाय॒ नमो॒ नमः॑ शि॒वाय॑ च । शि॒वाय॑ च च शि॒वाय॑ शि॒वाय॑ च ।



## ॥ मृत्युञ्जय महामन्त्रः ॥

## ॥ संहितापाठः ॥

त्र्यंम्बकं यजामहे सुगन्धिं पुंष्टिवर्धनम् । उर्वारुकमिंव बन्धंनान्मृत्योर्मुक्षीय माऽमृताँत् ॥

## ॥ घनपाठः ॥

त्र्यंम्बकं यजामहे यजामहे त्र्यंम्बकं त्र्यंम्बकं यजामहे सुगन्धिगं सुंगन्धिं यंजामहे त्र्यंम्बकं त्र्यंम्बकं यजामहे सुगन्धिम्। त्र्यंम्बकमितित्रि-अम्बकम् ॥

यजामहे सुगन्धिगं सुंगन्धिं यंजामहे यजामहे सुगन्धिं पुंष्टिवर्धनं पुंष्टिवर्धनगं सुगन्धिं यंजामहे यजामहे सुगन्धिं पुंष्टिवर्धनम् ।

सुगन्धिं पुंष्टिवर्धनं पुष्टिवर्धनगं सुगन्धिगं सुंगन्धिं पुंष्टिवर्धनम् । सुगन्धिमितिंसु-गन्धिं पुष्टिवर्धन-मितिंपुष्टि-वर्धनम् ॥

उर्वारुकमिंवेवोर्वारुक-मुंर्वारुकमिंव बन्धंनाद्बन्धंनादि वोर्वारुक-मुंर्वारुकमिंव बन्धंनात् ।

इव बन्धंनाद्बन्धंनादिवेव बन्धंनान्मृत्यो-मृत्यो-र्बन्धंनादिवेव बन्धंनान्मृत्योः ।

बन्धनान्मृत्यो-र्मृत्योर्बन्धनाद्बन्धनान्मृत्यो-र्मुक्षीय मुक्षीय मृत्यो-र्बन्धनाद्बन्धनान्मृत्योर्मुक्षीय ।

मृत्योर्मुक्षीय मुक्षीय मृत्योर्मृत्यो-र्मुक्षीय मा मा मुक्षीय मृत्योर्मृत्यो-र्मुक्षीय मा ।

मुक्षीय मा मा मुक्षीय मुक्षीय माऽमृतादमृतान्मा मुक्षीय मुक्षीय माऽमृतात् । मामृतादमृतान्मा माऽमृतात् । अमृतादित्यमृतात् ॥



## ॥ रुद्रनमस्कार-मन्त्रः ॥

### ॥ संहितापाठः ॥

यो रुद्रो अग्नौ यो अप्सु य ओषधीषु यो रुद्रो विश्वा भुवना विवेश तस्मै रुद्राय नमो अस्तु ॥

### ॥ घनपाठः ॥

यो रुद्रो रुद्रो यो यो रुद्रो अग्नावग्नौ रुद्रो यो यो रुद्रो अग्नौ । रुद्रो अग्नावग्नौ रुद्रो रुद्रो अग्नौ यो यो अग्नौ रुद्रो रुद्रो अग्नौ यः ।

अग्नौ यो यो अग्नावग्नौ यो अप्स्वप्सु यो अग्नावग्नौ यो अप्सु । यो अप्स्वप्सु यो यो अप्सु यो यो अप्सु यो यो अप्सु यः ।

अप्सु यो यो अप्स्वप्सु य ओषधीष्वोषधीषु यो अप्स्वप्सु य ओषधीषु । अप्स्वित्यप्-सु ।

य ओषधीष्वोषधीषु योय ओषधीषु योय ओषधीषु योय ओषधीषु यः ।

ओषधीषु योय ओषधीष्वोषधीषु यो रुद्रो रुद्रो य ओषधीष्वोषधीषु यो रुद्रः ।

यो रुद्रो रुद्रो यो यो रुद्रो विश्वा विश्वा रुद्रो यो यो रुद्रो विश्वा । रुद्रो विश्वा विश्वा रुद्रो रुद्रो विश्वा भुवना भुवना विश्वा रुद्रो रुद्रो विश्वा भुवना ।

विश्वा भुवना भुवना विश्वा विश्वा भुवना विवेशाविवेश भुवना विश्वा विश्वा भुवना विवेश ।

भुवना विवेशाविवेश भुवना भुवना विवेश तस्मै तस्मा आविवेश भुवना भुवना विवेश तस्मै । आविवेश तस्मै तस्मा आविवेशा विवेश तस्मै रुद्राय रुद्राय तस्मा आविवेशा विवेश तस्मै रुद्राय । आविवेशेत्या-विवेश ।

तस्मै रुद्राय रुद्राय तस्मै तस्मै रुद्राय नमो नमो रुद्राय तस्मै तस्मै रुद्राय नमः ।

रुद्राय नमो नमो रुद्राय रुद्राय नमो अस्त्वस्तु नमो रुद्राय रुद्राय नमो अस्तु । नमो अस्त्वस्तु नमो नमो अस्तु । अस्त्वित्यस्तु ॥



## ॥ गायत्री-सामगानम् ॥

१ र र र र —
ॐ तत्सवितुर्वरेणियोम् । भार्गो देवस्य धीमाहीऽ२ ॥

२ १र र॰ २ १ — १॰
धियोयोनः प्रचोऽ१२१२ ॥ हिं(स्थि)आऽ२ ॥ दायो ॥

२ १ १ १
आऽ३४५ ॥

## ॥ रथन्तर-सामगानम् ॥

२॰ र र र॰२ १॰ १॰ २र र र र॰
आभित्वा शूरनोनु मोवा ॥ आदुग्धा इव धेनव ईशानमस्य

१ ३ २ १ र॰ २ १ ४^ १
जगतः ॥ सुवाऽ२३र्दृशाम् ॥ आइशानमा२३इन्द्राऽ३ ॥ सूस्थूऽ

र॰ ४र॰ ५ ५
२३४ षा । ओवाऽ६ ॥ हाउवा ॥

२र॰ १॰ १ २ २ र र र २ र॰
ईशोवा ॥ नामिन्द्र सुस्थुषो नत्वावाङ् अन्यो दिवियः ॥

१ ३ २ १ र॰ २र॰ १ ४ १ · र॰
नपाऽ२३र्थिवाः ॥ न जातो ना२३ जाऽ३ ॥ नाइष्याऽ२३४ ता ॥

४र॰ ५ ५
ओवाऽ६ ॥ हा उवा ॥

२ १॰ १॰ २ र र र॰ २
नजोवा । तोन जनिष्यते अश्वायन्तो मघवन्नि ॥

१ ३ २ १ २ १ ४ १ र॰
द्रवाऽ२३जिनाः ॥ गव्यन्तरस्त्वाऽ२३ हाऽ३ वामाऽ२३४ हा ॥

४र॰ ५ ५ १
ओवाऽ६ ॥ हा उवा ॥ अस् ॥

## ॥ बृहत्-सामगानम् ॥

२र र र र॰ ॰ २ २र॰ र॰ र ॰
औ हो इत्वा मिद्धिहवा महाऽ३ए ॥ सातौवाजा ॥
१॰ २ ३ ५ १ २ ३र ४र॰ ५ २ १
स्याकाराऽ२३४वाः ॥ तुवाऽ३४ ॥ औहोवा ॥ वृत्राइषुवाइ ॥
१ २ १ २ ३ ५ १र॰ र॰ २ ३र ४र॰ ५
द्रासाऽ३१ त् ॥ पतिन्नाऽ२३४ राः ॥ त्वां काष्टाऽ३४ ॥ औहोवा ॥
१— १ ॰ ४ ५ ५ ५ १
सूऽ२ आर्वाऽ२३४ ॥ ताऽः ॥ उहुवाऽ६ हाउ ॥ वा । हस् ॥

## ॥ आरण्यक-गानम् ॥

स्वर्ग्यम् सेतुषाम पुरुषगतिर्वा विशोकं वा । प्रजापति स्त्रिष्टुवात्मा ॥

२र॰ र र॰ १र॰ र॰ २ २ १ १
हा उहा उहा उ ॥ सेतूगं् स्तर ॥ (त्रिः) दुस्त ॥ रान् ॥ (द्वे त्रिः)
१र॰२र॰१र र॰ २ २र॰ र र॰ २ र॰ १
दानेना दानम् (त्रिः) हा उहा उहा उ ॥ अहमस्मि प्रथमजा ऋताऽ२३
२ १ १ १ २र॰ र र॰ १र॰ र॰ २ २ १ १
स्याऽ३४५ ॥ हा उहा उहा उ ॥ सेतूगं् स्तर (त्रिः) ॥ दुस्त ॥ रान् ॥
१ र॰ २र॰ १र॰ २
(द्वे त्रिः) अक्रोधेन क्रोधम् (द्विः) ॥
१ र॰ २र॰ २ १र २र॰ र र॰
अक्रोधेन क्रोधम् ॥ हा उहा उहा उ ॥
२र॰ र र र॰ २ १ १ २ १ १ १ २र॰ र र॰
पूर्वं देवेभ्यो अमृतस्यनाऽ२३ माऽ३४५ ॥ हा उहा उहा उ ॥
१र॰ र॰ २
सेतूगं् स्तर (त्रिः) ॥

२ १ १ २ १ १२ १ २र २र र
दुस्त ॥ रान् ॥ (द्वे त्रिः) श्रद्धया श्रद्धाम् (त्रिः) ॥ हा उहा
र २र र र र १ १ २ १ १ १
उहा उ ॥ योमा ददाति सइदेव माऽ२३वाऽ३४५त् ॥

२र र र १र र २ २ १ १
हा उहा उहा उ ॥ सेतूगं् स्तर (त्रिः) ॥ दुस्त ॥ रान् ॥ (द्वे त्रिः)
२ १र र १ २
सत्येना नृतम् ॥ (त्रिः)

२र र र २ १ २ १ १ १
हा उहा उहा उ ॥ अहमन्नमन्नमदन्तमाऽ२३ द्मीऽ३४५ ॥
२ २र र
हा उहा उहा उवा ॥ एषा गतिः (त्रिः) ॥

२र १ २ १ १ २ १र २
एतदमृतम् (त्रिः) ॥ स्वर्गच्छ (त्रिः) ॥ ज्योतिर्गच्छ (त्रिः) ॥
१र र २र १र २ १ १ १ १
सेतूगं् स्तीर्त्वा चतुरा२३४५: ॥

---

यं ध्यायन्ति बुधाः समाधिसमये शुद्धं वियत्सन्निभं
नित्यानन्दमयं प्रसन्नममलं सर्वेश्वरं निर्गुणम् ।
व्यक्ताव्यक्तपरं प्रपञ्चरहितं ध्यानैकगम्यं विभुं
तं संसारविनाशहेतुमजरं वन्दे हरिं मुक्तिदम् ॥

ब्रह्मपुराणम् - अध्यायः १

Adoration unto the Lord, the destroyer of all worldliness and bestower of salvation, the undecaying and infinite Being, the One who is attainable through meditation alone, who is free from illusion, and beyond the manifest and the unmanifest; the One who is of the form of bliss eternal, who is gracious, taintless, and without any attributes, who is the overlord; the One who is pure and limitless like the ether, and who is contemplated in Samadhi by the wise.

## ॥ श्रीरुद्रप्रश्नः ॥

## ॥ लघुन्यासः ॥

ॐ नमो भगवते रुद्राय ॥

ॐ अथात्मानगं शिवात्मानग् श्रीरुद्ररूपं ध्यायेत् ॥ शुद्धस्फटिकसंकाशं त्रिनेत्रं पञ्चवक्त्रकम् । गङ्गाधरं दशभुजं सर्वाभरणभूषितम् ॥ नीलग्रीवं शशाङ्काङ्कं नागयज्ञोपवीतिनम् । व्याघ्रचर्मोत्तरीयं च वरेण्यमभय-प्रदम् ॥ कमण्डल्वक्षसूत्राणां धारिणं शूलपाणिनम् । ज्वलन्तं पिङ्गलजटा-शिखामुद्योतधारिणम् ॥ वृषस्कन्ध-समारूढं उमादेहार्ध-धारिणम् । अमृतेनाप्लुतं शान्तं दिव्यभोग-समन्वितम् ॥ दिग्देवतासमायुक्तं सुरासुरनमस्कृतम् । नित्यं च शाश्वतं शुद्धं ध्रुवमक्षरमव्ययम् ॥ सर्वव्यापिन-मीशानं रुद्रं वै विश्वरूपिणम् । एवं ध्यात्वा द्विजस्सम्यक् ततो यजनमारभेत् ॥

अथातो रुद्रस्नानार्चनाभिषेकविधिं व्याख्यास्यामः। आदित एव तीर्थे स्नात्वा उदेत्य शुचिः प्रयतो ब्रह्मचारी शुक्लवासा देवाभिमुखः स्थित्वा आत्मनि देवताः स्थापयेत् ॥

प्रजनने ब्रह्मा तिष्ठतु। पादयोर्विष्णुस्तिष्ठतु। हस्तयोर्हरस्तिष्ठतु। बाह्वोरिन्द्रस्तिष्ठतु । जठरेऽग्निस्तिष्ठतु । हृदये शिवस्तिष्ठतु । कण्ठे वसवस्तिष्ठन्तु । वक्त्रे सरस्वती तिष्ठतु । नासिकयोर्वायुस्तिष्ठतु ।

नयनयोश्चन्द्रादित्यौ तिष्ठेताम् । कर्णयोरश्विनौ तिष्ठेताम् । ललाटे रुद्रास्तिष्ठन्तु । मूर्ध्न्यादित्यास्तिष्ठन्तु । शिरसि महादेवस्तिष्ठतु । शिखायां वामदेवस्तिष्ठतु । पृष्ठे पिनाकी तिष्ठतु । पुरतः शूली तिष्ठतु । पार्श्वयोः शिवाशङ्करौ तिष्ठेताम् । सर्वतो वायुस्तिष्ठतु । ततो बहिः सर्वतोऽग्निर्ज्वालामाला-परिवृतस्तिष्ठतु । सर्वेष्वङ्गेषु सर्वा देवता यथास्थानं तिष्ठन्तु । माग्ं रक्षन्तु ॥

अ॒ग्निर्मे॑ वा॒चि श्रि॒तः । वाग्घृद॑ये । हृद॑यं॒ मयि॑ । अ॒हम॒मृते᳚ । अ॒मृतं॒ ब्रह्म॑णि । वा॒युर्मे᳚ प्रा॒णे श्रि॒तः । प्रा॒णो हृद॑ये । हृद॑यं॒ मयि॑ । अ॒हम॒मृते᳚ । अ॒मृतं॒ ब्रह्म॑णि । सूर्यो॑ मे॒ चक्षु॑षि श्रि॒तः । चक्षु॒र्हृद॑ये । हृद॑यं॒ मयि॑ । अ॒हम॒मृते᳚ । अ॒मृतं॒ ब्रह्म॑णि । च॒न्द्रमा॑ मे॒ मन॑सि श्रि॒तः । मनो॒ हृद॑ये । हृद॑यं॒ मयि॑ । अ॒हम॒मृते᳚ । अ॒मृतं॒ ब्रह्म॑णि । दिशो॑ मे॒ श्रोत्रे᳚ श्रि॒ताः । श्रोत्र॒ग्ं॒ हृद॑ये । हृद॑यं॒ मयि॑ । अ॒हम॒मृते᳚ । अ॒मृतं॒ ब्रह्म॑णि । आपो॑ मे॒ रेत॑सि श्रि॒ताः । रेतो॒ हृद॑ये । हृद॑यं॒ मयि॑ । अ॒हम॒मृते᳚ । अ॒मृतं॒ ब्रह्म॑णि । पृ॒थि॒वी मे॒ शरी॑रे श्रि॒ताः । शरी॑र॒ग्ं॒ हृद॑ये । हृद॑यं॒ मयि॑ । अ॒हम॒मृते᳚ । अ॒मृतं॒ ब्रह्म॑णि । ओ॒ष॒धि॒व॒न॒स्पत॒यो॑ मे॒ लोम॑सु श्रि॒ताः । लोमा॑नि॒ हृद॑ये । हृद॑यं॒ मयि॑ । अ॒हम॒मृते᳚ । अ॒मृतं॒ ब्रह्म॑णि । इन्द्रो॑ मे॒ बले᳚ श्रि॒तः । बल॒ग्ं॒ हृद॑ये । हृद॑यं॒ मयि॑ । अ॒हम॒मृते᳚ । अ॒मृतं॒ ब्रह्म॑णि । प॒र्जन्यो॑ मे मू॒र्ध्नि श्रि॒तः । मू॒र्धा हृद॑ये । हृद॑यं॒ मयि॑ । अ॒हम॒मृते᳚ । अ॒मृतं॒ ब्रह्म॑णि । ईशा॑नो मे म॒न्यौ श्रि॒तः ।

मन्युर्हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । आत्मा म आत्मनि श्रितः । आत्मा हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । पुनर्म आत्मा पुनरायुरागात् । पुनः प्राणः पुनराकूतमागात् । वैश्वानरो रश्मिभिर्वावृधानः । अन्तस्तिष्ठत्वमृतस्य गोपाः ॥

अस्य श्री रुद्राध्यायप्रश्नमहामन्त्रस्य अघोर ऋषिः, अनुष्टुप्-छन्दः, सङ्कर्षणमूर्तिस्वरूपो योऽसावादित्यः परमपुरुषः स एष रुद्रो देवता । नमः शिवायेति बीजम् । शिवतरायेति शक्तिः । महादेवायेति कीलकम् । श्रीसाम्बसदाशिव-प्रसादसिद्ध्यर्थे जपे विनियोगः ॥

ओं अग्निहोत्रात्मने अङ्गुष्ठाभ्यां नमः । दर्शपूर्णमासात्मने तर्जनीभ्यां नमः । चातुर्मास्यात्मने मध्यमाभ्यां नमः । निरूढपशुबन्धात्मने अनामिकाभ्यां नमः । ज्योतिष्टोमात्मने कनिष्ठिकाभ्यां नमः । सर्वक्रत्वात्मने करतलकरपृष्ठाभ्यां नमः ॥ अग्निहोत्रात्मने हृदयाय नमः । दर्शपूर्णमासात्मने शिरसे स्वाहा । चातुर्मास्यात्मने शिखायै वषट् । निरूढपशुबन्धात्मने कवचाय हुं । ज्योतिष्टोमात्मने नेत्रत्रयाय वौषट् । सर्वक्रत्वात्मने अस्त्राय फट् । भूर्भुवस्सुवरोमिति दिग्बन्धः ॥

## ध्यानम्

आपाताळ-नभः स्थलान्त-भुवन-ब्रह्माण्ड-माविस्फुर-

ज्ज्योतिः स्फाटिक-लिङ्ग-मौळि-विलसत्पूर्णेन्दु-वान्तामृतैः ।

अस्तोकाप्लुत-मेक-मीश-मनिशं रुद्रानुवाकाञ्जपन्
ध्याये-दीप्सित-सिद्धये ध्रुवपदं विप्रोऽभिषिञ्चे-च्छिवम् ॥

ब्रह्माण्डव्याप्तदेहा भसितहिमरुचा भासमाना भुजङ्गैः
कण्ठे कालाः कपर्दाकलित-शशिकला-श्चण्डकोदण्डहस्ताः ।
त्र्यक्षा रुद्राक्षमालाः प्रकटितविभवाः शाम्भवा मूर्तिभेदा
रुद्राः श्रीरुद्रसूक्त-प्रकटितविभवा नः प्रयच्छन्तु सौख्यम् ॥

ॐ गणानां त्वा गणपतिगं हवामहे कविं कवीनामुपमश्रवस्तमम् । ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आ नः शृण्वन्नूतिभिस्सीद सादनम् ॥ महागणपतये नमः ॥

## ॥ शान्तिपाठः ॥

शं च मे मयश्च मे प्रियं च मेऽनुकामश्च मे कामश्च मे सौमनसश्च मे भद्रं च मे श्रेयश्च मे वस्यश्च मे यशश्च मे भगश्च मे द्रविणं च मे यन्ता च मे धर्ता च मे क्षेमश्च मे धृतिश्च मे विश्वं च मे महश्च मे संविच्च मे ज्ञात्रं च मे सूश्च मे प्रसूश्च मे सीरं च मे लयश्च म ऋतं च मेऽमृतं च मेऽयक्ष्मं च मेऽनामयच्च मे जीवातुश्च मे दीर्घायुत्वं च मेऽनमित्रं च मेऽभयं च मे सुगं च मे शयनं च मे सूषा च मे सुदिनं च मे ॥

ॐ शान्तिः शान्तिः शान्तिः ॥



# ॥ श्रीरुद्रप्रश्नः ॥

कृष्णयजुर्वेदीय तैत्तिरीय संहिता

चतुर्थं वैश्वदेवं काण्डम् पञ्चमः प्रपाठकः

ॐ नमो भगवते रुद्राय ॥

ॐ नम॑स्ते रुद्र म॒न्यव॑ उ॒तोत॒ इष॑वे॒ नमः॑ । नम॑स्ते अस्तु॒ धन्व॑ने बा॒हुभ्या॑मु॒त ते॒ नमः॑ । या त॒ इषुः॑ शि॒वत॑मा शि॒वं ब॒भूव॑ ते॒ धनुः॑ । शि॒वा श॑र॒व्या॑ या तव॒ तया॑ नो रुद्र मृडय । या ते॑ रुद्र शि॒वा त॒नूरघो॒राऽपा॑पकाशिनी । तया॑ नस्त॒नुवा॒ शन्त॑मया॒ गिरि॑शंता॒भिचा॑कशीहि । यामिषुं॑ गिरिशंत॒ हस्ते॒ बिभ॒र्ष्यस्त॑वे । शि॒वां गि॑रित्र॒ तां कु॑रु॒ मा हिग्ं॑सीः॒ पुरु॑षं॒ जग॑त् । शि॒वेन॒ वच॑सा त्वा॒ गिरि॒शाच्छा॑वदामसि । यथा॑ नः॒ सर्व॒मिज्जग॑द-य॒क्ष्मग्ं सु॒मना॒ अस॑त् । अध्य॑वोचदधिव॒क्ता प्र॑थ॒मो दैव्यो॑ भि॒षक् । अहीग्॑श्च॒ सर्वा॑ञ्ज॒म्भय॒न्त्सर्वा॑श्च यातुधा॒न्यः॑ । अ॒सौ यस्ता॒म्रो अ॑रु॒ण उ॒त ब॒भ्रुः सु॑म॒ङ्गलः॑ । ये चे॒माग्ं रु॒द्रा अ॒भितो॑ दि॒क्षु श्रि॒ताः स॑हस्र॒शोऽवै॑षा॒ग्ं॒ हेड॑ ईमहे । अ॒सौ यो॑ऽव॒सर्प॑ति॒ नील॑ग्रीवो॒ विलो॑हितः । उ॒तैनं॑ गो॒पा अ॑दृश॒न्नदृ॑श॒न्नुदहा॒र्यः॑ । उ॒तैन॒ं विश्वा॑ भू॒तानि॒ स दृ॒ष्टो मृ॑डयाति नः । नमो॑ अस्तु॒ नील॑ग्रीवाय सहस्रा॒क्षाय॑ मी॒ढुषे॑ । अथो॒ ये अ॑स्य॒ सत्वा॑नो॒ऽहं तेभ्यो॑ऽकर॒न्नमः॑ । प्रमु॑ञ्च॒ धन्व॑न॒स्त्वमु॒भयो॒रार्त्नि॑यो॒र्ज्याम् । याश्च॑ ते॒ हस्त॒ इष॑वः॒ परा॒ ता भ॑गवो वप । अ॒व॒तत्य॒

धनुस्त्वगं सहस्राक्ष शतेषुधे । निशीर्य शल्यानां मुखा शिवो नः सुमना भव । विज्यं धनुः कपर्दिनो विशल्यो बाणवाग् उत । अनेशन्नस्येषव आभुरस्य निषंगथिः । या ते हेतिर्मीढुष्टम हस्ते बभूव ते धनुः । तयाऽस्मान्, विश्वतस्त्वमयक्ष्मया परिब्भुज । नमस्ते अस्त्वायुधायानाताय धृष्णवे । उभाभ्यामुत ते नमो बाहुभ्यां तव धन्वने । परि ते धन्वनो हेतिरस्मान्वृणक्तु विश्वतः । अथो य इषुधिस्तवारे अस्मन्निधेहि तम् ॥ १ ॥

शम्भवे नमः । नमस्ते अस्तु भगवन्विश्वेश्वराय महादेवाय त्र्यम्बकाय त्रिपुरान्तकाय त्रिकाग्निकालाय कालाग्निरुद्राय नीलकण्ठाय मृत्युञ्जयाय सर्वेश्वराय सदाशिवाय श्रीमन्महादेवाय नमः ॥

नमो हिरण्यबाहवे सेनान्ये दिशां च पतये नमो नमो वृक्षेभ्यो हरिकेशेभ्यः पशूनां पतये नमो नमः सस्पिञ्जराय त्विषीमते पथीनां पतये नमो नमो बभ्लुशाय विव्याधिनेऽन्नानां पतये नमो नमो हरिकेशायोपवीतिने पुष्टानां पतये नमो नमो भवस्य हेत्यै जगतां पतये नमो नमो रुद्रायाताविने क्षेत्राणां पतये नमो नमः सूतायाहन्त्याय वनानां पतये नमो नमो रोहिताय स्थपतये वृक्षाणां पतये नमो नमो मन्त्रिणे वाणिजाय कक्षाणां पतये नमो नमो भुवंतये वारिवस्कृतायौषधीनां पतये नमो नम उच्चैर्घोषायाक्रन्दयते

पत्तीनां पतये नमो नमः कृत्स्नवीताय धावते सत्त्वनां पतये नमः ॥ २ ॥

नमः सहमानाय निव्याधिन आव्याधिनीनां पतये नमो नमः ककुभाय निषङ्गिणे स्तेनानां पतये नमो नमो निषङ्गिण इषुधिमते तस्कराणां पतये नमो नमो वञ्चते परिवञ्चते स्तायूनां पतये नमो नमो निचेरवे परिचरायारण्यानां पतये नमो नमः सृकाविभ्यो जिघांसद्भ्यो मुष्णतां पतये नमो नमोऽसिमद्भ्यो नक्तंचरद्भ्यः प्रकृन्तानां पतये नमो नम उष्णीषिणे गिरिचराय कुलुञ्चानां पतये नमो नम इषुमद्भ्यो धन्वाविभ्यश्च वो नमो नम आतन्वानेभ्यः प्रतिदधानेभ्यश्च वो नमो नम आयच्छद्भ्यो विसृजद्भ्यश्च वो नमो नमोऽस्यद्भ्यो विध्यद्भ्यश्च वो नमो नम आसीनेभ्यः शयानेभ्यश्च वो नमो नमः स्वपद्भ्यो जाग्रद्भ्यश्च वो नमो नमस्तिष्ठद्भ्यो धावद्भ्यश्च वो नमो नमः सभाभ्यः सभापतिभ्यश्च वो नमो नमो अश्वेभ्योऽश्वपतिभ्यश्च वो नमः ॥ ३ ॥

नम आव्याधिनीभ्यो विविध्यन्तीभ्यश्च वो नमो नम उगणाभ्यस्तृंहतीभ्यश्च वो नमो नमो गृत्सेभ्यो गृत्सपतिभ्यश्च वो नमो नमो व्रातेभ्यो व्रातपतिभ्यश्च वो नमो नमो गणेभ्यो गणपतिभ्यश्च वो नमो नमो विरूपेभ्यो विश्वरूपेभ्यश्च वो नमो नमो महद्भ्यः, क्षुल्लकेभ्यश्च वो नमो नमो रथिभ्योऽरथेभ्यश्च वो नमो

नमो॒ रथे᳚भ्यो॒ रथ॑पतिभ्यश्च वो॒ नमो॒ नमः॒ सेना᳚भ्यः सेना॒निभ्य॑श्च वो॒ नमो॒ नमः॑, क्ष॒त्तृभ्य॑ः संग्र॒ही॒तृभ्य॑श्च वो॒ नमो॒ नम॒स्तक्ष॑भ्यो रथका॒रेभ्य॑श्च वो॒ नमो॒ नमः॒ कुला॑लेभ्यः क॒र्मारे᳚भ्यश्च वो॒ नमो॒ नमः॑ पु॒ञ्जिष्टे᳚भ्यो नि॒षादे᳚भ्यश्च वो॒ नमो॒ नम॑ इषु॒कृद्भ्यो॑ धन्व॒कृद्भ्य॑श्च वो॒ नमो॒ नमो॑ मृग॒युभ्य॑ः श्व॒निभ्य॑श्च वो॒ नमो॒ नमः॒ श्वभ्य॒ः श्वप॑तिभ्यश्च वो॒ नमः॑ ॥ ४ ॥

नमो॑ भ॒वाय॑ च रु॒द्राय॑ च॒ नमः॑ श॒र्वाय॑ च पशु॒पत॑ये च॒ नमो॒ नील॑ग्रीवाय च शिति॒कण्ठा॑य च॒ नमः॑ कप॒र्दिने॑ च॒ व्यु॑प्तकेशाय च॒ नमः॑ सहस्रा॒क्षाय॑ च श॒तध॑न्वने च॒ नमो॑ गिरि॒शाय॑ च शिपिवि॒ष्टाय॑ च॒ नमो॑ मी॒ढुष्ट॑माय॒ चेषु॑मते च॒ नमो᳚ ह्र॒स्वाय॑ च वा॒मनाय॑ च॒ नमो॑ बृह॒ते च॒ वर्षी॑यसे च॒ नमो॑ वृ॒द्धाय॑ च सं॒वृध्व॑ने च॒ नमो॒ अग्रि॑याय च प्र॒थमाय॑ च॒ नम॑ आ॒शवे॑ चाजि॒राय॑ च॒ नमः॒ शीघ्रि॑याय च॒ शीभ्या॑य च॒ नम॑ ऊ॒र्म्या॑य चावस्व॒न्या॑य च॒ नमः॑ स्रो॒तस्या॑य च॒ द्वीप्या॑य च ॥ ५ ॥

नमो᳚ ज्ये॒ष्ठाय॑ च कनि॒ष्ठाय॑ च॒ नमः॑ पूर्व॒जाय॑ चापर॒जाय॑ च॒ नमो॑ मध्य॒माय॑ चापग॒ल्भाय॑ च॒ नमो॑ जघ॒न्या॑य च॒ बुध्नि॑याय च॒ नमः॑ सो॒भ्या॑य च प्रतिस॒र्या॑य च॒ नमो॒ याम्या॑य च॒ क्षेम्या॑य च॒ नम॑ उर्व॒र्या॑य च॒ खल्या॑य च॒ नमः॒ श्लोक्या॑य चाऽवसा॒न्या॑य च॒ नमो॒ वन्या॑य च॒ कक्ष्या॑य च॒ नमः॑ श्र॒वाय॑ च प्रति॒श्रवाय॑ च॒ नम॑

आशुषेणाय चाशुरथाय च नमः शूराय चावभिन्दते च नमो वर्मिणे च वरूथिने च नमो बिल्मिने च कवचिने च नमः श्रुताय च श्रुतसेनाय च ॥ ६ ॥

नमो दुन्दुभ्याय चाहनन्याय च नमो धृष्णवे च प्रमृशाय च नमो दूताय च प्रहिताय च नमो निषङ्गिणे चेषुधिमते च नमस्तीक्ष्णेषवे चायुधिने च नमः स्वायुधाय च सुधन्वने च नमः स्रुत्याय च पथ्याय च नमः काट्याय च नीप्याय च नमः सूद्याय च सरस्याय च नमो नाद्याय च वैशन्ताय च नमः कूप्याय चावट्याय च नमो वर्ष्याय चावर्ष्याय च नमो मेघ्याय च विद्युत्याय च नम ईध्रियाय चातप्याय च नमो वात्याय च रेष्मियाय च नमो वास्तव्याय च वास्तुपाय च ॥ ७ ॥

नमः सोमाय च रुद्राय च नमस्ताम्राय चारुणाय च नमः शङ्गाय च पशुपतये च नम उग्राय च भीमाय च नमो अग्रेवधाय च दूरेवधाय च नमो हन्त्रे च हनीयसे च नमो वृक्षेभ्यो हरिकेशेभ्यो नमस्ताराय नमश्शंभवे च मयोभवे च नमः शङ्कराय च मयस्कराय च नमः शिवाय च शिवतराय च नमस्तीर्थ्याय च कूल्याय च नमः पार्याय चावार्याय च नमः प्रतरणाय चोत्तरणाय च नम आतार्याय चालाद्याय च नमः शष्प्याय च फेन्याय च नमः सिकत्याय च प्रवाह्याय च ॥ ८ ॥

नम॑ इरि॒ण्या॑य च प्रप॒थ्या॑य च॒ नमः॑ किग्ं॒शि॒लाय॑ च॒ क्षय॑णाय च॒ नमः॑ कप॒र्दिने॑ च पुल॒स्तये॑ च॒ नमो॒ गोष्ठ्या॑य च॒ गृह्या॑य च॒ नम॒स्तल्प्या॑य च॒ गेह्या॑य च॒ नमः॑ का॒ट्या॑य च गह्व॒रे॒ष्ठाय॑ च॒ नमो॑ ह्र॒द॒य्या॑य च निवे॒ष्प्या॑य च॒ नमः॑ पाग्ं स॒व्या॑य च रज॒स्या॑य च॒ नम॒ः शुष्क्या॑य च हरि॒त्या॑य च॒ नमो॒ लोप्या॑य चोल॒प्या॑य च॒ नम॑ ऊ॒र्व्या॑य च सू॒र्म्या॑य च॒ नमः॑ प॒र्ण्या॑य च पर्णश॒द्या॑य च॒ नमो॑ऽपगु॒रमा॑णाय चाभिघ्न॒ते च॒ नम॑ आख्खिद॒ते च॑ प्रख्खिद॒ते च॒ नमो॑ वः किरि॒केभ्यो॑ दे॒वाना॒ग्ं॒ हृद॑येभ्यो॒ नमो॑ विक्षीण॒केभ्यो॒ नमो॑ विचिन्व॒त्केभ्यो॒ नम॑ आनिर्ह॒तेभ्यो॒ नम॑ आमीव॒त्केभ्य॑ः ॥ ९ ॥

द्रापे॒ अन्ध॑सस्पते॒ दरि॑द्र॒न्नील॑लोहित । ए॒षां पुरु॑षाणामे॒षां प॑शू॒नां मा भेर्माऽरो॒ मो ए॑षां॒ किंच॒नामम॑मत् । या ते॑ रुद्र शि॒वा त॒नूः शि॒वा वि॒श्वाह॑भेषजी । शि॒वा रु॒द्रस्य॑ भेष॒जी तया॑ नो मृड जी॒वसे॑ । इ॒मा॒ग्ं॒ रु॒द्राय॑ त॒वसे॑ कप॒र्दिने॑ क्ष॒यद्वी॑राय॒ प्रभ॑रामहे म॒तिम् । यथा॑ न॒ः शमस॑द्द्वि॒पदे॒ चतु॑ष्पदे॒ विश्वं॑ पु॒ष्टं ग्रामे॑ अ॒स्मिन्नना॑तुरम् । मृ॒डा नो॑ रुद्रो॒त नो॒ मय॑स्कृधि क्ष॒यद्वी॑राय॒ नम॑सा विधेम ते । यच्छं॑ च॒ योश्च॒ मनु॑राय॒जे पि॒ता तद॑श्याम॒ तव॑ रुद्र॒ प्रणी॑तौ । मा नो॑ म॒हान्त॑मु॒त मा नो॑ अर्भ॒कं मा न॒ उक्ष॑न्तमु॒त मा न॑ उक्षि॒तम् । मा नो॑ऽवधीः पि॒तरं॒ मोत मा॒तरं॑ प्रि॒या मा न॑स्त॒नुवो॑ रुद्र रीरिषः । मा न॑स्तो॒के तन॑ये॒ मा न॒ आयु॑षि॒ मा नो॒ गोषु॒ मा नो॒ अश्वे॑षु रीरिषः ।

वीरान्मा नो रुद्र भामितोऽवधीर्हविष्मन्तो नमसा विधेम ते । आरात्ते गोघ्न उत पूरुषघ्ने क्षयद्वीराय सुम्नमस्मे ते अस्तु । रक्षा च नो अधि च देव ब्रूह्यधा च नः शर्म यच्छ द्विबर्हाः । स्तुहि श्रुतं गर्तसदं युवानं मृगन्न भीममुपहत्नुमुग्रम् । मृडा जरित्रे रुद्र स्तवानो अन्यन्ते अस्मन्निवपन्तु सेनाः । परिणो रुद्रस्य हेतिर्वृणक्तु परि त्वेषस्य दुर्मति रघायोः । अव स्थिरा मघवद्भ्यस्तनुष्व मीढ्वस्तोकाय तनयाय मृडय । मीढुष्टम शिवतम शिवो नः सुमना भव । परमे वृक्ष आयुधन्निधाय कृत्तिं वसान आचर पिनाकं बिभ्रदागहि । विकिरिद विलोहित नमस्ते अस्तु भगवः । यास्ते सहस्रग्ं हेतयोन्यमस्मन्निवपन्तु ताः । सहस्राणि सहस्रधा बाहुवोस्तव हेतयः । तासामीशानो भगवः पराचीना मुखा कृधि ॥ १० ॥

सहस्राणि सहस्रशो ये रुद्रा अधि भूम्याम् । तेषाग्ं सहस्रयोजनेऽवधन्वानि तन्मसि । अस्मिन्महत्यर्णवेऽन्तरिक्षे भवा अधि । नीलग्रीवाः शितिकण्ठाः शर्वा अधः, क्षमाचराः । नीलग्रीवाः शितिकण्ठा दिवग्ं रुद्रा उपश्रिताः । ये वृक्षेषु सस्पिञ्जरा नीलग्रीवा विलोहिताः । ये भूतानामधिपतयो विशिखासः कपर्दिनः । ये अन्नेषु विविध्यन्ति पात्रेषु पिबतो जनान् । ये पथां पथिरक्षय ऐलबृदा यव्युधः । ये तीर्थानि प्रचरन्ति

सृकावन्तो निषङ्गिणः । य एतावन्तश्च भूयाग्ंसश्च दिशो रुद्रा वितस्थिरे । तेषाग्ं सहस्रयोजनेऽवधन्वानि तन्मसि । नमो रुद्रेभ्यो ये पृथिव्यां येऽन्तरिक्षे ये दिवि येषामन्नं वातो वर्षमिषवस्तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वास्तेभ्यो नमस्ते नो मृडयन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तं वो जम्भे दधामि ॥ ११ ॥

त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिव बंधनान्मृत्योर्मुक्षीय माऽमृतात् । यो रुद्रो अग्नौ यो अप्सु य ओषधीषु यो रुद्रो विश्वा भुवना विवेश तस्मै रुद्राय नमो अस्तु । तमु ष्टुहि यः स्विषुः सुधन्वा यो विश्वस्य क्षयति भेषजस्य । यक्ष्वामहे सौमनसाय रुद्रं नमोभिर्देवमसुरं दुवस्य । अयं मे हस्तो भगवानयं मे भगवत्तरः । अयं मे विश्वभेषजोऽयग्ं शिवाभिमर्शनः । ये ते सहस्रमयुतं पाशा मृत्यो मर्त्याय हन्तवे । तान्यज्ञस्य मायया सर्वानव यजामहे । मृत्यवे स्वाहा मृत्यवे स्वाहा । ॐ नमो भगवते रुद्राय विष्णवे मृत्युर्मे पाहि ॥

प्राणानां ग्रन्थिरसि रुद्रो मा विशान्तकः । तेनान्नेनाप्यायस्व ॥ सदाशिवोम् ॥

ॐ शान्तिः शान्तिः शान्तिः ॥



# ॥ चमकप्रश्नः ॥

संहिता पाठः

ॐ अग्नाविष्णू सजोषसेमावर्धन्तु वां गिरः । द्युम्नैर्वाजेभिरागतम् । वाजश्च मे प्रसवश्च मे प्रयतिश्च मे प्रसितिश्च मे धीतिश्च मे क्रतुश्च मे स्वरश्च मे श्लोकश्च मे श्रावश्च मे श्रुतिश्च मे ज्योतिश्च मे सुवश्च मे प्राणश्च मेऽपानश्च मे व्यानश्च मेऽसुश्च मे चित्तं च म आधीतं च मे वाक्च मे मनश्च मे चक्षुश्च मे श्रोत्रं च मे दक्षश्च मे बलं च म ओजश्च मे सहश्च म आयुश्च मे जरा च म आत्मा च मे तनूश्च मे शर्म च मे वर्म च मेऽङ्गानि च मेऽस्थानि च मे परूंषि च मे शरीराणि च मे ॥ १ ॥

ज्यैष्ठ्यं च म आधिपत्यं च मे मन्युश्च मे भामश्च मेऽमश्च मेऽम्भश्च मे जेमा च मे महिमा च मे वरिमा च मे प्रथिमा च मे वर्ष्मा च मे द्राघुया च मे वृद्धं च मे वृद्धिश्च मे सत्यं च मे श्रद्धा च मे जगच्च मे धनं च मे वशश्च मे त्विषिश्च मे क्रीडा च मे मोदश्च मे जातं च मे जनिष्यमाणं च मे सूक्तं च मे सुकृतं च मे वित्तं च मे वेद्यं च मे भूतं च मे भविष्यच्च मे सुगं च मे सुपथं च म ऋद्धं च म ऋद्धिश्च मे क्लृप्तं च मे क्लृप्तिश्च मे मतिश्च मे सुमतिश्च मे ॥ २ ॥

शं च मे मयश्च मे प्रियं च मेऽनुकामश्च मे कामश्च मे सौमनसश्च मे भद्रं च मे श्रेयश्च मे वस्यश्च मे यशश्च मे भगश्च मे

द्रविणं च मे यन्ता चं मे धर्ता चं मे क्षेमंश्च मे धृतिंश्च मे विश्वं च मे महंश्च मे संविच्चं मे ज्ञात्रं च मे सूश्चं मे प्रसूश्चं मे सीरं च मे लयश्चं म ऋतं चं मेऽमृतं च मेऽयक्ष्मं च मेऽनांमयच्च मे जीवातुंश्च मे दीर्घायुत्वं चं मेऽनमित्रं च मेऽभंयं च मे सुगं चं मे शयंनं च मे सूषा चं मे सुदिनं च मे ॥ ३ ॥

ऊर्क्चं मे सूनृतां च मे पयंश्च मे रसंश्च मे घृतं चं मे मधुं च मे सग्धिंश्च मे सपींतिश्च मे कृषिश्चं मे वृष्टिंश्च मे जैत्रं च म औद्भिंद्यं च मे रयिश्चं मे रायंश्च मे पुष्टं चं मे पुष्टिंश्च मे विभु चं मे प्रभु चं मे बहु चं मे भूयंश्च मे पूर्णं चं मे पूर्णतंरं च मेऽक्षिंतिश्च मे कूयंवाश्च मेऽन्नं च मेऽक्षुंच्च मे व्रीहयंश्च मे यवाँश्च मे माषाँश्च मे तिलाँश्च मे मुद्गाश्चं मे खल्वाँश्च मे गोधूमाँश्च मे मसुराँश्च मे प्रियंगंवश्च मेऽणंवश्च मे श्यामाकाँश्च मे नीवाराँश्च मे ॥ ४ ॥

अश्मां च मे मृत्तिंका च मे गिरयंश्च मे पर्वताश्च मे सिकंताश्च मे वनस्पतंयश्च मे हिरंण्यं च मेऽयंश्च मे सीसं च मे त्रपुंश्च मे श्यामं चं मे लोहं चं मेऽग्निश्चं म आपंश्च मे वीरुधंश्च म ओषंधयश्च मे कृष्टपच्यं चं मेऽकृष्टपच्यं चं मे ग्राम्याश्चं मे पशवं आरण्याश्चं यज्ञेनं कल्पन्तां वित्तं चं मे वित्तिंश्च मे भूतं चं मे भूतिंश्च मे वसुं च मे वसतिश्चं मे कर्मं च मे

शक्तिश्च मेऽर्थश्च म एमश्च म इतिश्च मे गतिश्च मे ॥ ५ ॥

अग्निश्च म इन्द्रश्च मे सोमश्च म इन्द्रश्च मे सविता च म इन्द्रश्च मे सरस्वती च म इन्द्रश्च मे पूषा च म इन्द्रश्च मे बृहस्पतिश्च म इन्द्रश्च मे मित्रश्च म इन्द्रश्च मे वरुणश्च म इन्द्रश्च मे त्वष्टा च म इन्द्रश्च मे धाता च म इन्द्रश्च मे विष्णुश्च म इन्द्रश्च मेऽश्विनौ च म इन्द्रश्च मे मरुतश्च म इन्द्रश्च मे विश्वे च मे देवा इन्द्रश्च मे पृथिवी च म इन्द्रश्च मेऽन्तरिक्षं च म इन्द्रश्च मे द्यौश्च म इन्द्रश्च मे दिशश्च म इन्द्रश्च मे मूर्धा च म इन्द्रश्च मे प्रजापतिश्च म इन्द्रश्च मे ॥ ६ ॥

अंशुश्च मे रश्मिश्च मेऽदाभ्यश्च मेऽधिपतिश्च म उपांशुश्च मेऽन्तर्यामश्च म ऐन्द्रवायवश्च मे मैत्रावरुणश्च म आश्विनश्च मे प्रतिप्रस्थानश्च मे शुक्रश्च मे मन्थी च म आग्रयणश्च मे वैश्वदेवश्च मे ध्रुवश्च मे वैश्वानरश्च म ऋतुग्रहाश्च मेऽतिग्राह्याश्च म ऐन्द्राग्नश्च मे वैश्वदेवश्च मे मरुत्वतीयाश्च मे माहेन्द्रश्च म आदित्यश्च मे सावित्रश्च मे सारस्वतश्च मे पौष्णश्च मे पात्नीवतश्च मे हारियोजनश्च मे ॥ ७ ॥

इध्मश्च मे बर्हिश्च मे वेदिश्च मे धिष्णियाश्च मे स्रुचश्च मे चमसाश्च मे ग्रावाणश्च मे स्वरवश्च म उपरवाश्च मेऽधिषवणे च मे द्रोणकलशश्च मे वायव्यानि च मे पूतभृच्च म आधवनीयश्च

म आग्नीध्रं च मे हविर्धानं च मे गृहाश्च मे सदश्च मे पुरोडाशाश्च मे पचताश्च मेऽवभृथश्च मे स्वगाकारश्च मे ॥ ८ ॥

अग्निश्च मे घर्मश्च मेऽर्कश्च मे सूर्यश्च मे प्राणश्च मेऽश्वमेधश्च मे पृथिवी च मेऽदितिश्च मे दितिश्च मे द्यौश्च मे शक्वरीरङ्गुलयो दिशश्च मे यज्ञेन कल्पन्तामृक्च मे साम च मे स्तोमश्च मे यजुश्च मे दीक्षा च मे तपश्च म ऋतुश्च मे व्रतं च मेऽहोरात्रयोर्वृष्ट्या बृहद्रथन्तरे च मे यज्ञेन कल्पेताम् ॥ ९ ॥

गर्भाश्च मे वत्साश्च मे त्र्यविश्च मे त्र्यवीच मे दित्यवाट् च मे दित्यौही च मे पञ्चाविश्च मे पञ्चावी च मे त्रिवत्सश्च मे त्रिवत्सा च मे तुर्यवाट् च मे तुर्यौही च मे पष्ठवाट् च मे पष्ठौही च म उक्षा च मे वशा च म ऋषभश्च मे वेहच्च मेऽनड्वाञ्च मे धेनुश्च म आयुर्यज्ञेन कल्पतां प्राणो यज्ञेन कल्पतामपानो यज्ञेन कल्पतां व्यानो यज्ञेन कल्पतां चक्षुर्यज्ञेन कल्पताग् श्रोत्रं यज्ञेन कल्पतां मनो यज्ञेन कल्पतां वाग्यज्ञेन कल्पतामात्मा यज्ञेन कल्पतां यज्ञो यज्ञेन कल्पताम् ॥ १० ॥

एका च मे तिस्रश्च मे पञ्च च मे सप्त च मे नव च म एकादश च मे त्रयोदश च मे पञ्चदश च मे सप्तदश च मे नवदश च म एकविंग्ंशतिश्च मे त्रयोविंग्ंशतिश्च मे पञ्चविंग्ंशतिश्च मे सप्तविंग्ंशतिश्च मे नवविंग्ंशतिश्च म

एकत्रिंशच्च मे त्रयस्त्रिंशच्च मे चतस्रश्च मेऽष्टौ च मे द्वादश च मे षोडश च मे विंशतिश्च मे चतुर्विंशतिश्च मेऽष्टाविंशतिश्च मे द्वात्रिंशच्च मे षट्त्रिंशच्च मे चत्वारिंशच्च मे चतुश्चत्वारिंशच्च मेऽष्टाचत्वारिंशच्च मे वाजश्च प्रसवश्चापिजश्च क्रतुश्च सुवश्च मूर्धा च व्यश्नियश्चान्त्यायनश्चान्त्यश्च भौवनश्च भुवनश्चाधिपतिश्च ॥ ११ ॥

ॐ इडा देवहूर्मनुर्यज्ञनीर्बृहस्पतिरुक्थामदानि शंसिषद्विश्वे देवाः सूक्तवाचः पृथिविमातर्मा मा हिंसीर्मधु मनिष्ये मधु जनिष्ये मधु वक्ष्यामि मधु वदिष्यामि मधुमतीं देवेभ्यो वाचमुद्यासंशुश्रूषेण्यां मनुष्येभ्यस्तं मा देवा अवन्तु शोभायै पितरोऽनुमदन्तु ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

---

नमामीशमीशाननिर्वाणरूपं
विभुं व्यापकं ब्रह्मवेदस्वरूपम् ।
अजं निर्गुणं निर्विकल्पं निरीहं
चिदाकारमाकाशवासं भजेऽहम् ॥

श्रीतुलसीदासस्य रामायणम् - ७, शिवाष्टकम् - १

Salutations unto Thee, thou all-pervading and great Lord. Thou art liberation itself, and the revealed scripture is Thy embodied form. I worship Thee, the unborn, attributeless and unconditioned one. Thou art without any desire. Intelligence itself is Thy nature, and the sky Thy garment.

# ॥ अरुणप्रश्नः ॥

### तैत्तिरीयारण्यकम्

ॐ भद्रं कर्णेभिः शृणुयाम देवाः । भद्रं पश्येमाक्षभिर्यजत्राः । स्थिरैरङ्गैस्तुष्टुवाग्ंसस्तनूभिः । व्यशेम देवहितं यदायुः । स्वस्ति न इन्द्रो वृद्धश्रवाः । स्वस्ति नः पूषा विश्ववेदाः । स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः । स्वस्ति नो बृहस्पतिर्दधातु ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

ॐ भद्रं कर्णेभिः शृणुयाम देवाः । भद्रं पश्येमाक्षभिर्यजत्राः । स्थिरैरङ्गैस्तुष्टुवाग्ंसस्तनूभिः । व्यशेम देवहितं यदायुः । स्वस्ति न इन्द्रो वृद्धश्रवाः । स्वस्ति नः पूषा विश्ववेदाः । स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः । स्वस्ति नो बृहस्पतिर्दधातु । आपमापामपः सर्वाः । अस्मादस्मादितोऽमुतः ॥ १ ॥

अग्निर्वायुश्च सूर्यश्च । सह संचस्करर्द्धिया । वाय्वश्वा रश्मिपतयः । मरीच्यात्मानो अद्रुहः । देवीर्भुवनसूवरीः । पुत्रवत्वाय मे सुत । महानाम्नीर्महामानाः । महसो महसस्स्वः । देवीः पर्जन्यसूवरीः । पुत्रवत्वाय मे सुत ॥ २ ॥

अपाश्न्युष्णिमपा रक्षः । अपाश्न्युष्णिमपारघम् । अपाघ्रामप चावर्तिम् । अपदेवीरितो हित । वज्रं देवीरजीताग्श्च । भुवनं देवसूवरीः । आदित्यानदितिं देवीम् । योनिनोर्ध्वमुदीषत ।

शिवानश्शन्तमा भवन्तु । दिव्या आप ओषधयः । सुमृडीका सरस्वति । मा ते व्योम संदृशि ॥ ३ ॥

स्मृतिः प्रत्यक्षमैतिह्यम् । अनुमानश्चतुष्टयम् । एतैरादित्य-मण्डलम् । सर्वैरेव विधास्यते । सूर्यो मरीचिमादत्ते । सर्वस्माद्भुवनादधि । तस्याः पाकविशेषेण । स्मृतं कालविशेषणम् । नदीव प्रभवात्काचित् । अक्षय्यात्स्यन्दते यथा ॥ ४ ॥

तान्नद्योऽभिसमायन्ति । सोरुस्सती न निवर्तते एवन्नाना-समुत्थानाः । कालास्संवत्सरग् श्रिताः । अणुशश्च महशश्च । सर्वे समवयन्त्रितम् । सतैस्सर्वैस्समाविष्टः । ऊरुस्सन्न निवर्तते । अधिसंवत्सरं विद्यात् । तदेव लक्षणे ॥ ५ ॥

अणुभिश्च महद्भिश्च । समारूढः प्रदृश्यते । संवत्सरः प्रत्यक्षेण । नाधिसत्वः प्रदृश्यते । पटरो विक्लिधः पिङ्गः । एतद्वरुणलक्षणम् । यत्रैतदुपदृश्यते । सहस्रं तत्र नीयते । एकग्ंहि शिरो नाना मुखे । कृत्स्नं तदृतुलक्षणम् ॥ ६ ॥

उभयतस्सप्तेन्द्रियाणि । जल्पितं त्वेव दिह्यते । शुक्लकृष्णे संवत्सरस्य । दक्षिणवामयोः पार्श्वयोः । तस्यैषा भवति । शुक्रं ते अन्यद्यजतं ते अन्यत् । विषुरूपे अहनी द्यौरिवासि । विश्वा हि माया अवसि स्वधावः । भद्रा ते पूषन्निह रातिरस्त्विति । नात्र भुवनम् । न पूषा । न पशवः । नादित्यस्संवत्सर एव प्रत्यक्षेण प्रियतमं विद्यात् ।

एतद्वै संवत्सरस्य प्रियतमग्ं रूपम् । योऽस्य महानर्थ उत्पत्स्यमानो भवति । इदं पुण्यं कुरुष्वेति । तमाहरणं दद्यात् ॥ ७ ॥

साकंजानाग्ं सप्तथमाहुरेकजम् । षडुद्यमा ऋषयो देवजा इति । तेषामिष्टानि विहितानि धामशः । स्थात्रे रेजन्ते विकृतानि रूपशः । को नु मर्या अमिथितः । सखा सखायमब्रवीत् । जहाको अस्मदीषते । यस्तित्याजं सखिविदग्ं सखायम् । न तस्य वाच्यपि भागो अस्ति । यदीग्ं शृणोत्यलकग्ं शृणोति ॥ ८ ॥

न हि प्रवेद सुकृतस्य पन्थामिति । ऋतुरृतुना नुद्यमानः । विननादाभिधावः । षष्टिश्च त्रिग्ंशका वल्गाः । शुक्लकृष्णौ च षाष्टिकौ । सारागवस्त्रैर्जरदक्षः । वसन्तो वसुभिस्सह संवत्सरस्य सवितुः । प्रैषकृत्प्रथमः स्मृतः । अमूनादयतेत्यन्यान् ॥ ९ ॥

अमूग्श्च परिरक्षतः । एता वाचः प्रयुज्यन्ते । यत्रैतदुपदृश्यते । एतदेव विजानीयात् । प्रमाणं कालपर्यये । विशेषणं तु वक्ष्यामः । ऋतूनाँ तन्निबोधत । शुक्लवासा रुद्रगणः । ग्रीष्मेणाऽऽवर्तते सह । निजहन् पृथिवीग्ं सर्वाम् ॥ १० ॥

ज्योतिषाँऽप्रतिख्येन सः । विश्वरूपाणि वासाग्ंसि । आदित्यानाँ निबोधत । संवत्सरीणं कर्मफलम् । वर्षाभिर्ददताग्ं सह । अदुःखो दुःखचक्षुरिव । तद्माऽऽपीत इव दृश्यते । शीतेनाँव्यथयन्निव । रुरुदक्ष इव दृश्यते । ह्लादयते ज्वलतश्चैव । शाम्यतश्चास्य चक्षुषी ।

या वै प्रजा भ्रंग्ग्श्यन्ते। संवत्सरात्ता भ्रंग्ग्श्यन्ते। याः प्रतिंतिष्ठन्ति। संवत्सरे ताः प्रतिंतिष्ठन्ति। वर्षाभ्यं इत्यर्थः ॥ ११ ॥

अक्षिंदुःखोत्थिंतस्यैव। विप्रसंन्ने कनीनिंके। आङ्क्तेचाद्गंणं नास्ति। ऋभूणाँ तन्निबोधंत। कनकाभानिं वासांग्ंसि। अहतांनि निबोधंत। अन्नमश्नीतं मृज्मीत। अहं वों जीवनप्रंदः। एता वाचः प्रंयुज्यन्ते। शरद्यंत्रोपदृश्यंते ॥ १२ ॥

अभिधून्वन्तोऽभिघ्नंन्त इव। वातवंन्तो मरुद्गंणाः। अमुतो जेतुमिषुमुंखमिव। सन्नद्धास्सह दंदृशे ह। अपध्वस्तैर्वस्तिवंर्णैरिव। विशिखासंः कपर्दिनः। अक्रुद्धस्य योत्स्यंमानस्य। क्रुद्धस्येंव लोहिंनी। हेमतश्चक्षुंषी विद्यात्। अक्ष्णयोंः, क्षिपणोरिंव ॥ १३ ॥

दुर्भिक्षं देवंलोकेषु। मनूनांमुदकं गृंहे। एता वाचः प्रंवदन्तीः। वैद्युतों यान्ति शैशिंरीः। ता अग्निः पवंमाना अन्वैंक्षत। इह जींविकामपंरिपश्यन्। तस्यैषा भवंति। इहेहवंस्स्वतपसः। मरुंतस्सूर्यंत्वचः। शर्मं सप्रथा आवृंणे ॥ १४ ॥

अतिंताम्राणिं वासांग्ंसि। अष्टिवंज्रिशतघ्निं च। विश्वे देवा विप्रंहरन्ति। अग्निजिंह्वा असश्चंत। नैव देवों न मर्त्यः। न राजा वंरुणो विभुः। नाग्निर्नेन्द्रो न पंवमानः। मातृक्कंच्चन विद्यंते। दिव्यस्यैका धनुंरार्त्निः। पृथिव्यामपंरा श्रिता ॥ १५ ॥

तस्येन्द्रो वम्रिंरूपेण। धनुर्ज्यामच्छिनत्स्वंयम्। तदिंन्द्रधनु-

रित्यज्यम् । अभ्रवर्णेषु चक्षते । एतदेव शंयोर्बार्हस्पत्यस्य । एतद्रुद्रस्य धनुः । रुद्रस्यं त्वेव धनुरार्त्निः । शिर उत्पिंपेष । स प्रंवर्ग्योऽभवत् । तस्माद्यस्सप्रंवर्ग्येणं यज्ञेन यजंते । रुद्रस्य स शिरः प्रतिंदधाति । नैनग्ं रुद्र आरुंको भवति । य एवं वेदं ॥ १६ ॥

अत्यूर्ध्वाक्षोऽतिंरश्चात् । शिशिंरः प्रदृश्यंते । नैव रूपं नं वासाग्ंसि । न चक्षुः प्रतिदृश्यंते । अन्योन्यं तु नं हिग्ग्स्रातः । सतस्तंद्देवलक्षंणम् । लोहितोऽक्षिण शांरशीर्ष्णिः । सूर्यस्योंदयनं प्रंति । त्वं करोषिंन्यञ्जलिकाम् । त्वं करोंषि निजानुंकाम् ॥ १७ ॥

निजानुकामेंन्यञ्जलिका । अमी वाचमुपासंतामिति । तस्मै सर्व ऋतवों नमन्ते । मर्यादाकरत्वात्प्रंपुरोधाम् । ब्राह्मणं आप्नोति । य एवं वेद । स खलु संवत्सर एतैस्सेनानींभिस्सह । इन्द्राय सर्वान्कामानंभिवहति । स द्रप्सः । तस्यैषा भवंति ॥ १८ ॥

अवंद्रप्सो अग्ंशुमतींमतिष्ठत् । इयानः कृष्णो दशभिंस्सहस्रैंः । आवर्तमिन्द्रः शच्या धमंन्तम् । उपस्नुहि तं नृमणामथंद्रामिति । एतयैवेन्द्रः सलावृंक्या सह । असुरान् पंरिवृश्चति । पृथिव्यग्ंशुमंती । तामन्ववंस्थितः संवत्सरो दिवं चं । नैवं विदुषाऽऽचार्यांन्तेवासिनौ । अन्योन्यस्मैं द्रुह्याताम् । यो द्रुह्यति । भ्रश्यते स्वंर्गाल्लोकात् । इत्यृतुमंण्डलानि । सूर्यमण्डलांन्याख्यायिकाः । अत ऊर्ध्वग्ं-सनिंर्वचनाः ॥ १९ ॥

आरोगो भ्राजः पटरः पतङ्गः। स्वर्णरो ज्योतिषीमान् विभासः। ते अस्मै सर्वे दिवमातपन्ति। ऊर्जं दुहाना अनपस्फुरन्त इति। कश्यपोऽष्टमः। स महामेरुं न जहाति। तस्यैषा भवति। यत्ते शिल्पंकश्यप रोचनावत्। इन्द्रियावत्पुष्कलं चित्रभानु। यस्मिन्त्सूर्या अर्पितास्सप्त साकम् ॥ २० ॥

तस्मिन् राजानमधिविश्रयेममिति। ते अस्मै सर्वे कश्यपाज्ज्योतिर्लभन्ते। तान्त्सोमः कश्यपादधिनिर्द्धमति। भ्रस्ताकर्मकृदिवैवम्। प्राणो जीवानीन्द्रियंजीवानि। सप्त शीर्षण्याः प्राणाः। सूर्या इत्याचार्याः। अपश्यमहमेतान्त्सप्त सूर्यानिति। पञ्चकर्णो वात्स्यायनः। सप्तकर्णश्च प्लाक्षिः ॥ २१ ॥

आनुश्रविक एव नौ कश्यप इति। उभौ वेदयिते। न हि शेकुमिव महामेरुं गन्तुम्। अपश्यमहमेत्सूर्यमण्डलं परिवर्तमानम्। गार्ग्यः प्राणत्रातः। गच्छन्त महामेरुम्। एकं चाजहतम्। भ्राजपटरपतङ्गा निहने। तिष्ठन्नातपन्ति। तस्मादिह तप्त्रितपाः॥ २२ ॥

अमुत्रेतरे। तस्मादिहातप्त्रितपाः। तेषामेषा भवति। सप्त सूर्या दिवमनुप्रविष्टाः। तानन्वेति पथिभिर्दक्षिणावान्। ते अस्मै सर्वे घृतमातपन्ति। ऊर्जं दुहाना अनपस्फुरन्त इति। सप्तर्त्विजस्सूर्या इत्याचार्याः। तेषामेषा भवति। सप्त दिशो नानासूर्याः ॥ २३ ॥

सप्त होतार ऋत्विजः । देवा आदित्या ये सप्त । तेभिस्सोमाभीरक्षण इति । तदप्याम्नायः । दिग्भ्राज ऋतून् करोति । एतयैवावृता सहस्रसूर्यताया इति वैशंपायनः । तस्यैषा भवति । यद्द्याव इन्द्र ते शतगंशतं भूमीः । उतस्युः । नत्वा वज्रिन् सहस्रगं सूर्याः ॥ २४ ॥

अनुनजातमष्ट रोदसी इति । नानालिङ्गत्वादृतूनां नानासूर्यत्वम् । अष्टौ तु व्यवसिता इति । सूर्यमण्डलान्यष्टात ऊर्ध्वम् । तेषामेषा भवति । चित्रं देवानामुदगादनीकम् । चक्षुर्मित्रस्य वरुणस्याग्नेः । आप्रा द्यावापृथिवी अन्तरिक्षम् । सूर्य आत्मा जगतस्तस्थुषश्चेति ॥ २५ ॥

क्वेदमभ्रन्निविशते । क्वायगं संवत्सरो मिथः । क्वाहः क्वेयन्देव-रात्री । क्व मासा ऋतवः श्रिताः । अर्द्धमासा मुहूर्ताः । निमेषास्तुटिभिस्सह । क्वेमा आपो निविशन्ते । यदीतो यान्ति संप्रति । काला अप्सुनिविशन्ते । आपस्सूर्ये समाहिताः ॥ २६ ॥

अभ्राण्यपः प्रपद्यन्ते । विद्युत्सूर्ये समाहिता । अनवर्णे इमे भूमी । इयं चाऽसौ च रोदसी । किग्ंस्विदत्रान्तरा भूतम् । येनेमे विधृते उभे । विष्णुना विधृते भूमी । इति वत्सस्य वेदना । इरावती धेनुमती हि भूतम् । सूयवसिनी मनुषे दशस्ये ॥ २७ ॥

व्यष्टभ्नाद्रोदसी विष्णवेते । दाधर्थ पृथिवीमभितो मयूखैः ।

किन्तद्विष्णोर्बलमाहुः । का दीप्तिः किं परायणम् । एको यद्धा-
रयद्देवः । रेजती रोदसी उभे । वाताद्विष्णोर्बलमाहुः । अक्षराँद्दीप्ति-
रुच्यते । त्रिपदाद्धारयद्देवः । यद्विष्णो-रेकमुत्तमम् ॥ २८ ॥

अग्नयो वायवश्चैव । एतदस्य परायणम् । पृच्छामि त्वा परं
मृत्युम् । अवमं मध्यमञ्चतुम् । लोकञ्च पुण्यपापानाम् ।
एतत्पृच्छामि संप्रति । अमुमाहुः परं मृत्युम् । पवमानं तु
मध्यमम् । अग्निरेवावमो मृत्युः । चन्द्रमाँश्चतुरुच्यते ॥ २९ ॥

अनाभोगाः परं मृत्युम् । पापास्संयन्ति सर्वदा । आभोगास्त्वेवं
संयन्ति । यत्र पुण्यकृतो जनाः । ततो मध्यममायन्ति । चतुमग्निं
च संप्रति । पृच्छामि त्वां पापकृतः । यत्र यातयते यमः ।
त्वन्नस्तद्ब्रह्मन् प्रब्रूहि । यदि वेत्थाऽसतो गृहान् ॥ ३० ॥

कश्यपादुदितास्सूर्याः । पापान्निर्घ्नन्ति सर्वदा । रोदस्योरन्त-
देशेषु । तत्र न्यस्यन्ते वासवैः । तेऽशरीराः प्रपद्यन्ते । यथा
ऽपुण्यस्य कर्मणः । अपाण्यपादकेशासः । तत्र तेयोनिजा जनाः ।
मृत्वा पुनर्मृत्युमापद्यन्ते । अद्यमानास्स्वकर्मभिः ॥ ३१ ॥

आशातिकाः क्रिमय इव । ततः पूयन्ते वासवैः अपैतं मृत्युं
जयति । य एवं वेद । स खल्वैवं विद्ब्राह्मणः । दीर्घश्रुत्तमो भवति ।
कश्यपस्यातिथिस्सिद्धगमनस्सिद्धागमनः । तस्यैषा भवति । आ-
यस्मिन्थ्सप्त वासवाः । रोहन्ति पूर्व्या रुहः ॥ ३२ ॥

ऋषिंर् ह दीर्घश्रुत्तंमः । इन्द्रस्य घर्मो अतिथिरिति । कश्यपः पश्यंको भवति । यत्सर्वं परिपश्यतींति सौक्ष्म्यात् । अथाग्नेरष्ट-पुंरुषस्य । तस्यैषा भवंति । अग्ने नयं सुपथां राये अस्मान् । विश्वांनि देव वयुनांनि विद्वान् । युयोध्यंस्मज्जुंहुराणमेनंः । भूयिष्ठान्ते नम उक्तिं विधेमेति ॥ ३३ ॥

अग्निश्च जातंवेदाश्च । सहोजा अंजिराप्रभुः । वैश्वानरो नंर्यापाश्च । पङ्क्तिरांधाश्च सप्तंमः विसर्पेवाऽष्टंमोऽग्नीनाम् । एतेऽष्टौ वसवः, क्षिता इति । यथर्त्वेवाग्नेरर्चिर्वर्ण-विशेषाः । नीलार्चिश्च पीतकाँर्चिश्चेति । अथ वायो-रेकादशपुरुषस्यै-कादशंस्त्रीकस्य । प्रभ्राजमाना व्यंवदाताः ॥ ३४ ॥

याश्च वासुंकिवैद्युताः । रजताः परुंषाः श्यामाः । कपिला अंतिलोंहिताः । ऊर्ध्वा अवपंतन्ताश्च । वैद्युत इंत्येकादश । नैनं वैद्युतों हिनस्ति । य एंवं वेद । स होवाच व्यासः पांराशर्यः । विद्युद्वधमेवाहं मृत्युमैँच्छमिति । न त्वकांमगंं हन्ति ॥ ३५ ॥

य एंवं वेद । अथ गंन्धर्वगणाः । स्वानभ्राट् । अङ्घांरिर्बम्भांरिः । हस्तस्सुहंस्तः । कृशांनुर्विश्वावंसुः । मूर्धन्वान्थ्सूँर्यवर्चाः । कृतिरित्ये-कादश गंन्धर्वगंणाः । देवाश्च मंहादेवाः । रश्मयश्च देवां गरगिरः ॥ ३६ ॥

नैनं गरों हिनस्ति । य एंवं वेद । गौरी मिंमाय सलिलानि तक्षंती ।

एकंपदी द्विपदी सा चतुंष्पदी । अष्टापंदी नवंपदी बभूवुषीँ। सहस्राक्षरा परमे व्योंमन्निति । वाचों विशेषणम् । अथ निगदंव्याख्याताः।ताननुक्रंमिष्यामः। वराहवंस्स्वतपसः ॥ ३७ ॥

विद्युन्मंहसो धूपंयः । श्वापयो गृहमेधाँश्चेत्येते । ये चेमेऽशिंमिविद्विषः। पर्जन्यास्सप्त पृथिवीमभिवंर्षन्ति। वृष्टिंभिरिति। एतयैव विभक्तिविंपरीताः। सप्तभिर्वा तैंरुदीरिताः। अमून्लोकानभि वंर्षन्ति। तेषांमेषा भवंति। समानमेतदुदंकम् ॥ ३८ ॥

उच्चैत्यंवचाहंभिः । भूमिँ पर्जन्या जिन्वंन्ति । दिवं जिन्वन्त्यग्नंय इति । यदक्षंरं भूतकृंतम् । विश्वें देवा उपासंते । महर्षिंमस्य गोप्तारम्ँ । जमदंग्निमकुंर्वत । जमदंग्निराप्यांयते । छन्दोंभिश्चतुरुत्तरैः। राज्ञस्सोमंस्य तृप्तासंः ॥ ३९ ॥

ब्रह्मंणा वीर्यावता । शिवा नंः प्रदिशो दिशंः । तच्छंयोरावृंणीमहे । गातुं यज्ञायं । गातुं यज्ञपंतये । दैवीँस्वस्तिरंस्तु नः। स्वस्तिर्मानुंषेभ्यः। ऊर्ध्वं जिंगातु भेषजम्। शन्नों अस्तु द्विपदेँ। शं चतुंष्पदे। सोमपा (३) असोमपा (३) इति निगदंव्याख्याताः ॥ ४० ॥

सहस्रवृदिंयं भूमिः । परं व्योंम सहस्रंवृत् । अश्विनां भुज्यू नासत्या । विश्वस्यं जगतस्पंती । जाया भूमिः पंतिर्व्योम । मिथुनंन्ता अतुर्यंथुः। पुत्रो बृहस्पंती रुद्रः। सरमां इतिं स्त्रीपुमम्।

शुक्रं वांमन्यद्यंजतं वांमन्यत्। विषुंरूपे अहंनी द्यौरिंव स्थः ॥ ४१ ॥

विश्वा हि माया अवंथः स्वधावन्तौ । भद्रा वाँ पूषणाविह रातिरंस्तु। वासाँत्यौ चित्रौ जगंतो निधानौँ । द्यावांभूमी चरथंः सगं सखांयौ । तावश्विनां रासभाँश्वा हवं मे । शुभस्पती आगतगं सूर्ययां सह । त्युग्रोंह भुज्युमंश्विनोदमेघे । रयिन्न कश्चिंन्ममृवां (२) अवांहाः । तमूंहथुर्नौभिराँत्मन्वतींभिः । अन्तरिक्षप्रुड्भिरपोंदकाभिः ॥ ४२ ॥

तिस्रः, क्षपस्त्रिरहांतिव्रजंद्भिः। नासंत्या भुज्युमूंहथुः पतङ्गैः । समुद्रस्य धन्वंन्नार्द्रस्यं पारे। त्रिभीरथैँश्शतपंद्भिः षडंश्वैः। सवितारं वितंन्वन्तम्। अनुंबध्नाति शांबरः। आपपूर्षबंरश्चैव। सवितांरेपसोंऽभवत्। त्यगं सुतृप्तं विंदित्वैव। बहुसोंम गिरं वंशी ॥ ४३ ॥

अन्वेति तुग्रो वंक्रियान्तम् । आयसूयान्त्सोमंतृप्सुषु । स सङ्ग्रामस्तमोँद्योऽत्योतः । वाचो गाः पिंपाति तत् । स तद्गोभिस्स्तवाँऽत्येत्यन्ये । रक्षसांनन्वितारश्चं ये । अन्वेति परिंवृत्याऽस्तः । एवमेतौस्थों अश्विना । ते एते द्युंःपृथिव्योः । अहंरहर्गर्भिन्दधाथे ॥ ४४ ॥

तयोंरेतौ वत्सावंहोरात्रे। पृथिव्या अहंः। दिवो रात्रिंः। ता अविंसृष्टौ। दम्पंती एव भंवतः। तयोंरेतौ वत्सौ। अग्निश्चां-दित्यश्चं। रात्रेर्वत्सः। श्वेत आंदित्यः। अन्होऽग्निः ॥ ४५ ॥

ताम्रो अरुणः। ता अविसृष्टौ। दम्पती एव भवतः। तयो रेतौ वत्सौ। वृत्रश्च वैद्युतश्च। अग्नेर्वृत्रः। वैद्युत आदित्यस्य। ता अविसृष्टौ। दम्पती एव भवतः। तयो रेतौ वत्सौ ॥ ४६ ॥

उष्मा च नीहारश्च। वृत्रस्योष्मा। वैद्युतस्य नीहारः। तौ तावेव प्रतिपद्येते। सेयग्ंरात्री गर्भिणी पुत्रेण संवसति। तस्या वा एतदुल्बणम्ँ। यद्रात्रौ रश्मयः। यथा गोर्गर्भिण्या उल्बणम्। एवमेतस्या उल्बणम्ँ। प्रजयिष्णुः प्रजया च पशुभिश्च भवति। य एवं वेद। एतमुद्यन्तमपियन्तं चेति। आदित्यः पुण्यस्य वत्सः। अथ पवित्राङ्गिरसः ॥ ४७ ॥

पवित्रवन्तः परिवाजमासते। पितैषाँ प्रत्नो अभिरक्षति व्रतम्। महस्समुद्रं वरुणस्तिरोदधे। धीरा इच्छेकुर्धरुणेष्वारभम्ँ। पवित्रं ते विततं ब्रह्मणस्पतेँ। प्रभुर्गात्राणि पर्येषि विश्वतः। अतप्ततनूर्न तदामो अश्नुते। शृतास इद्वहन्तस्तत्समाशत। ब्रह्मा देवानाम्ँ। असतस्सद्ये ततक्षुः ॥ ४८ ॥

ऋषयस्सप्तात्रिश्च यत्। सर्वेऽत्रयो अगस्त्यश्च। नक्षत्रैश्शङ्कृतोऽवसन्। अथ सवितुः श्यावाश्वस्याऽवर्तिकामस्य। अमी य ऋक्षा निहितास उच्चा। नक्तं ददृश्रे कुहचिद्दिवेयुः। अदब्धानि वरुणस्य व्रतानि। विचाकशच्चन्द्रमा नक्षत्रमेति। तत्सवितुर्वरेँण्यम्। भर्गो देवस्य धीमहि ॥ ४९ ॥

धियो यो नः प्रचोदयात् । तत्संवितुर्वृणीमहे । वयन्देवस्य भोजनम् । श्रेष्ठंसर्वधातमम् । तुरं भगस्य धीमहि । अपागूहत सविता तृभीन् । सर्वान्दिवो अन्धसः । नक्तन्तान्यभवन्दृशे । अस्थ्यस्थ्ना संभविष्यामः । नाम नामैव नाम मे ॥ ५० ॥

नपुंसकं पुमांस्त्र्यस्मि । स्थावरोऽस्म्यथ जङ्गमः । यजेऽयक्षि यष्टाहे च । मया भूतान्ययक्षत । पशवो मम भूतानि । अनूबन्ध्योऽस्म्यहं विभुः । स्त्रियस्सतीः । ता उमे पुंस आहुः । पश्यद्-दक्षण्वान्नविचेतदन्धः । कविर्यः पुत्रस्स इमा चिकेत ॥ ५१ ॥

यस्ता विजानाथ्सवितुः पितासत् । अन्धो मणिमविन्दत् । तमनङ्गुलिरावयत् । अग्रीवः प्रत्यमुञ्चत् । तमजिह्वा असश्चत । ऊर्ध्वमूलमवाक्छाखम् । वृक्षं यो वेद सम्प्रति । न स जातु जनः श्रद्दध्यात् । मृत्युर्मा मारयादिति । हसितंरुदितङ्गीतम् ॥ ५२ ॥

वीणापणवलासितम् । मृतञ्जीवं च यत्किंचित् । अङ्गानि स्नेव विद्धि तत् । अतृष्यंस्तृष्यध्यायत् । अस्माज्जाता मे मिथू चरन् । पुत्रो निरृत्यां वैदेहः । अचेता यश्च चेतनः । स तं मणिमविन्दत् । सोऽनङ्गुलिरावयत् । सोऽग्रीवः प्रत्यमुञ्चत् ॥ ५३ ॥

सोऽजिह्वो असश्चत । नैतमृषिं विदित्वा नगरं प्रविशेत् । यदि प्रविशेत् । मिथौ चरित्वा प्रविशेत् । तथ्सम्भवस्य व्रतम् । आतमग्ने रथन्तिष्ठ । एकाश्वमेकयोजनम् । एकचक्रमेकधुरम् । वातध्राजिगति

विभो। न रिष्यति न व्यथते ॥ ५४ ॥

नास्याक्षो यातु सज्जति। यच्छ्वेताँन्रोहिताग्श्चाग्नेः। रथे युक्त्वा ऽधितिष्ठति। एकया च दशभिश्च स्वभूते। द्वाभ्यामिष्टये विग्ंशत्या च। तिसृभिश्च वहसे त्रिग्ंशता च। नियुद्भिर्वायविहता विमुञ्च ॥ ५५ ॥

आतनुष्व प्रतनुष्व । उद्धमाऽऽधम सन्धम । आदित्ये चन्द्रवर्णानाम् । गर्भमाधेहि यः पुमान् । इतस्सिक्तग्ंसूर्यगतम् । चन्द्रमसे रसङ्कृधि। वारादञ्जनयाग्रेऽग्निम्। य एको रुद्र उच्यते। असङ्ख्यातास्सहस्राणि। स्मर्यते न च दृश्यते ॥ ५६ ॥

एवमेतन्निबोधत। आमन्द्रैरिन्द्र हरिभिः। याहि मयूररोमभिः। मा त्वा केचिन्नियेमुरिन्न पाशिनः। दधन्वेव ता इहि। मा मन्द्रै-रिन्द्र हरिभिः। यामि मयूररोमभिः। मा मा केचिन्नियेमुरिन्न पाशिनः। निधन्वेव तां (२) इमि। अणुभिश्च महद्भिश्च ॥ ५७ ॥

निघृष्वैरसमायुतैः। कालैर्हरित्वमापन्नैः। इन्द्रायाहि सहस्रयुक्। अग्निर्विभ्राष्टिवसनः। वायुश्श्वेतसिकद्रुकः। संवथ्सरो विषूवर्णैः। नित्यास्तेऽनुचरास्तव। सुब्रह्मण्योग्ं सुब्रह्मण्योग्ं सुब्रह्मण्योम्। इन्द्रागच्छ हरिव आगच्छ मेधातिथेः। मेष वृषणश्वस्य मेने ॥ ५८ ॥

गौरावस्कन्दिन्नहल्यायै जार। कौशिकब्राह्मण गौतमब्रुवाण। अरुणाश्वा इहागताः। वसवः पृथिविक्षितः। अष्टौदिग्वाससो ऽग्नयः। अग्निश्च जातवेदाश्चेत्येते। ताम्राश्वास्ताम्ररथाः। ताम्रवर्णा-

स्तथाऽसिताः। दण्डहस्ताँः खादुग्दतः। इतो रुद्राँः पराङ्गताः ॥ ५९ ॥

उक्तग्ग्स्थानं प्रमाणञ्चं पुर इत। बृहस्पतिंश्च सविता चं। विश्वरूपैरिहागंताम्। रथोंनोदकवर्त्मना। अप्सुषां इति तद्वयोः। उक्तो वेषों वासाग्ंसि च। कालावयवानामितः प्रतीज्या। वासात्यां इत्यश्विनोः। कोऽन्तरिक्षे शब्दङ्करोतीति। वासिष्ठो रौहिणो मीमाग्ंसाञ्चक्रे। तस्यैषा भवंति। वाश्रेवं विद्युदितिं। ब्रह्मंण उदरंणमसि। ब्रह्मंण उदीरणंमसि। ब्रह्मंण आस्तरंणमसि। ब्रह्मंण उपस्तरंणमसि ॥ ६० ॥ [अपंक्रामत गर्भिण्यः]

अष्टयोंनीमष्टपुंत्राम्। अष्टपंत्नीमिमां महीँम्। अहं वेद न में मृत्युः। नचामृंत्युरघाहंरत्। अष्टयोँन्यष्टपुंत्रम्। अष्टपंदिद-मन्तरिंक्षम्। अहं वेद न में मृत्युः। नचामृंत्युरघाहंरत्। अष्टयोंनीमष्टपुंत्राम्। अष्टपंत्नीममून्दिवम्ँ ॥ ६१ ॥

अहं वेद न में मृत्युः। नचामृंत्युरघाहंरत्। सुत्रामांणं महीमूषु। अदिंतिर्द्यौरदिंतिरन्तरिंक्षम्। अदिंतिर्माता स पिता स पुत्रः। विश्वें देवा अदिंतिः पञ्चजनाँः। अदिंतिर्जातमदिंतिर्जनिंत्वम्। अष्टौ पुत्रासो अदिंतेः। ये जातास्तन्वंः परिं। देवां (२) उपंप्रैत्सप्तभिंः ॥ ६२ ॥

परा मार्ताण्डमास्यंत्। सप्तभिंः पुत्रैरदिंतिः। उपप्रैत्पूर्व्यं युगम्ँ। प्रजायैं मृत्यवे तंत्। परा मार्ताण्डमाभंरदितिं।

तानंनुक्रमिष्यामः। मित्रश्च वरुंणश्च। धाता चार्यमा चं। अगंशश्च भगंश्च। इन्द्रश्च विवस्वागंश्चेत्येते। हिरण्य गर्भो हगंसश्शुंचिषत्। ब्रह्मंजज्ञानं तदित्पदमितिं गर्भः प्रांजापत्यः। अथ पुरुंषः सप्त पुरुंषः ॥ ६३ ॥ [ यथास्थानं गंर्भिण्यः ]

योऽसौ तपन्नुदेतिं। स सर्वेंषां भूतानां प्राणानादायोदेतिं। मा में प्रजाया मा पंशूनाम्। मा ममं प्राणानादायोदंगाः। असौ योंऽस्तमेतिं। स सर्वेंषां भूतानां प्राणानादायाऽस्तमेतिं। मा में प्रजाया मा पंशूनाम्। मा ममं प्राणानादायाऽस्तंङ्गाः। असौ य आपूर्यंति। स सर्वेंषां भूतानां प्राणैरापूर्यंति ॥ ६४ ॥

मा में प्रजाया मा पंशूनाम्। मा ममं प्राणैरापूरिंष्ठाः। असौ योंऽपक्षीयंति। स सर्वेंषां भूतानां प्राणैरपंक्षीयति। मा में प्रजाया मा पंशूनाम्। मा ममं प्राणै-रपंक्षेष्ठाः। अमूनि नक्षंत्राणि। सर्वेंषां भूतानां प्राणैरपंप्रसर्पन्ति चोत्संर्पन्ति च। मा में प्रजाया मा पंशूनाम्। मा ममं प्राणैरपंप्रसृपत मोत्सृंपत ॥ ६५ ॥

इमे मासांश्चार्धमासाश्चं। सर्वेंषां भूतानां प्राणैरपंप्रसर्पन्ति चोत्संर्पन्ति च। मा में प्रजाया मा पंशूनाम्। मा ममं प्राणैरपंप्रसृपत मोत्सृंपत। इम ऋतवंः। सर्वेंषां भूतानां प्राणैरपंप्रसर्पन्ति चोत्संर्पन्ति च। मा में प्रजाया मा पंशूनाम्। मा ममं प्राणैरपं प्रसृपत मोत्सृंपत। अयगं संवत्सरः। सर्वेंषां भूतानां

प्राणैरपंप्रसर्पति चोत्संर्पति च ॥ ६६ ॥

मा मे॑ प्रजाया मा पंशूनाम् । मा ममं प्राणैरपंप्रसृप मोत्सृंप । इदमहंः । सर्वेंषां भूतानाँं प्राणैरपंप्रसर्पति चोत्संर्पति च । मा मे॑ प्रजाया मा पंशूनाम् । मा ममं प्राणैरपंप्रसृप मोत्सृंप । इयगंरात्रिंः । सर्वेंषां भूतानाँं प्राणैरपंप्रसर्पति चोत्संर्पति च । मा मे॑ प्रजाया मा पंशूनाम् । मा ममं प्राणैरपंप्रसृप मोत्सृंप । ॐ भूर्भुवस्स्वंः । एतद्वो मिथुनं मा नो मिथुंनगंरीढ्वम् ॥ ६७ ॥

अथादित्यस्याष्टपुंरुषस्य । वसूनामादित्यानाग्स्थाने स्वतेजंसा भानि । रुद्राणामादित्यानाग्स्थाने स्वतेजंसा भानि । आदित्यानामादित्यानाग्स्थाने स्वतेजंसा भानि । सतागंसत्यानाम् । आदित्यानाग्स्थाने स्वतेजंसा भानि । अभिधून्वतांमभिघ्नताम् । वातवंतां मरुताम् । आदित्यानाग्स्थाने स्वतेजंसा भानि । ऋभूणामादित्यानाग्स्थाने स्वतेजंसा भानि । विश्वेषाँन्देवानाम् । आदित्यानाग्स्थाने स्वतेजंसा भानि । संवत्सरंस्य सवितुः । आदित्यस्य स्थाने स्वतेजंसा भानि । ॐ भूर्भुवस्स्वंः । रश्मयो वो मिथुनं मा नो मिथुंनगंरीढ्वम् ॥ ६८ ॥

आरोगस्य स्थाने स्वतेजंसा भानि । भ्राजस्य स्थाने स्वतेजंसा भानि । पटरस्य स्थाने स्वतेजंसा भानि । पतङ्गस्य स्थाने स्वतेजंसा भानि । स्वर्णरस्य स्थाने स्वतेजंसा भानि ।

ज्योतिषीमतस्य स्थाने स्वतेजंसा भा॒नि । विभासस्य स्थाने स्वतेजंसा भा॒नि । कश्यपस्य स्थाने स्वतेजंसा भा॒नि । ॐ भूर्भुव॒स्स्वः । आपो वो मिथुनं मा नो मिथुंनग्ं री॒ढ्वम् ॥ ६९ ॥

अथ वायोरेकादशपुरुषस्यैकादशंस्त्रीकु॒स्य । प्रभ्राजमानानाग्-रुद्राणाग्स्थाने स्वतेजंसा भा॒नि । व्यवदातानाग्ंरुद्राणाग्स्थाने स्वतेजंसा भा॒नि। वासुकिवैद्युतानाग्ंरुद्राणाग्स्थाने स्वतेजंसा भा॒नि। रजतानाग् रुद्राणाग्स्थाने स्वतेजंसा भा॒नि। परुषाणाग्ंरुद्राणाग्-स्थाने स्वतेजंसा भा॒नि। श्यामानाग्ंरुद्राणाग्स्थाने स्वतेजंसा भा॒नि। कपिलानाग् रुद्राणाग्स्थाने स्वतेजंसा भा॒नि। अतिलोहितानाग्-रुद्राणाग्स्थाने स्वतेजंसा भा॒नि । ऊर्ध्वानाग्ंरुद्राणाग्स्थाने स्वतेजंसा भा॒नि ॥ ७० ॥

अवपतन्तानाग्ंरुद्राणाग्स्थाने स्वतेजंसा भा॒नि। वैद्युतानाग् रुद्राणाग्स्थाने स्वतेजंसा भा॒नि। प्रभ्राजमानीनाग्ंरुद्राणीनाग्स्थाने स्वतेजंसा भा॒नि। व्यवदातीनाग्ंरुद्राणीनाग्स्थाने स्वतेजंसा भा॒नि। वासुकिवैद्युतीनाग्ंरुद्राणीनाग्स्थाने स्वतेजंसा भा॒नि। रजतानाग्-रुद्राणीनाग्स्थाने स्वतेजंसा भा॒नि । परुषाणाग्ंरुद्राणीनाग्स्थाने स्वतेजंसा भा॒नि। श्यामानाग्ंरुद्राणीनाग्स्थाने स्वतेजंसा भा॒नि। कपिलानाग्ंरुद्राणीनाग्स्थाने स्वतेजंसा भा॒नि। अतिलोहितीनाग्-रुद्राणीनाग्स्थाने स्वतेजंसा भा॒नि । ऊर्ध्वानाग्ंरुद्राणीनाग्स्थाने स्वतेजंसा भा॒नि। अवपतन्तीनाग्ंरुद्राणीनाग्स्थाने स्वतेजंसा भा॒नि।

वैद्युतीनागं रुद्राणीनाग्स्थाने स्वतेजंसा भानि । ॐ भूर्भुवस्स्वंः । रूपाणि वो मिथुनं मा नो मिथुंनगंरीढ्वम् ॥ ७१ ॥

अथाग्नेंरष्टपुंरुषस्य । अग्नेःपूर्वदिश्यस्य स्थाने स्वतेजंसा भानि । जातवेदस उपदिश्यस्य स्थाने स्वतेजंसा भानि । सहोजसो दक्षिणदिश्यस्य स्थाने स्वतेजंसा भानि । अजिराप्रभव उपदिश्यस्य स्थाने स्वतेजंसा भानि । वैश्वानरस्याऽपरदिश्यस्य स्थाने स्वतेजंसा भानि । नर्यापस उपदिश्यस्य स्थाने स्वतेजंसा भानि । पङ्क्तिराधस उदग्दिश्यस्य स्थाने स्वतेजंसा भानि । विसर्पिण उपदिश्यस्य स्थाने स्वतेजंसा भानि । ॐ भूर्भुवस्स्वंः । दिशो वो मिथुनं मा नो मिथुंनगंरीढ्वम् ॥ ७२ ॥

दक्षिणपूर्वस्यान्दिशि विसंर्पी नरकः । तस्मान्नः पंरिपाहि । दक्षिणापरस्यां दिश्यविसंर्पी नरकः । तस्मान्नः पंरिपाहि । उत्तरपूर्वस्यान्दिशि विषांदी नरकः । तस्मान्नः पंरिपाहि । उत्तरापरस्यान्दिश्यविषांदी नरकः । तस्मान्नः पंरिपाहि । आ यस्मिन्त्सप्त वासवा इन्द्रियाणि शतक्रतंवित्येते ॥ ७३ ॥

इन्द्रघोषा वो वसुंभिः पुरस्तादुपंदधताम् । मनोंजवसो वः पितृभिंर्दक्षिणत उपंदधताम् । प्रचेंता वो रुद्रैः पश्चादुपंदधताम् । विश्वकंर्मा व आदित्यरुंत्तरत उपंदधताम् । त्वष्टां वो रूपैरुपरिंष्टा-दुपंदधताम् । संज्ञानं वः पंश्चादिति । आदित्यस्सर्वोऽग्निः

पृथिव्याम्। वायुरन्तरिक्षे। सूर्यो दिवि। चन्द्रमा दिक्षु। नक्षत्राणि स्वलोके। एवा ह्येव। एवा ह्यग्ने। एवा हि वायो। एवा हीन्द्र। एवा हि पूषन्। एवा हि देवाः ॥ ७४ ॥

आपमापामपस्सर्वाः। अस्मादस्मादितोऽमुतः। अग्निर्वायुश्च सूर्यश्च। सह सञ्चस्करर्द्धिया। वाय्वश्वा रश्मिपतयः। मरीच्यात्मानो अद्रुहः। देवीर्भुवनसूवरीः। पुत्रवत्त्वाय मे सुत। महानाम्नीर्महामानाः। महसो महसस्स्वः ॥ ७५ ॥

देवीः पर्जन्यसूवरीः। पुत्रवत्त्वाय मे सुत। अपाऽश्न्युष्णिमपारक्षः। अपाऽऽश्न्युष्णिमपारघम्। अपाघ्रामपचाऽवर्तिम्। अपदेवीरितो हित। वज्रन्देवीरजीताग्श्च। भुवनन्देवसूवरीः। आदित्यानदितिन्देवीम्। योनिनोर्ध्वमुदीषत ॥ ७६ ॥

भद्रं कर्णेभिः शृणुयाम देवाः। भद्रं पश्येमाक्षभिर्यजत्राः। स्थिरैरङ्गैस्तुष्टुवाग्ंसस्तनूभिः। व्यशेम देवहितं यदायुः। स्वस्ति न इन्द्रो वृद्धश्रवाः। स्वस्ति नः पूषा विश्ववेदाः। स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः। स्वस्ति नो बृहस्पतिर्दधातु। केतवो अरुणासश्च। ऋषयो वातरशनाः। प्रतिष्ठाग्ंशतधा हि। समाहितासो सहस्रधायसम्। शिवा नश्शन्तमा भवन्तु। दिव्या आप ओषधयः। सुमृडीका सरस्वति। मा ते व्योम सन्दृशि ॥ ७७ ॥

योऽपां पुष्पं वेद । पुष्पवान् प्रजावाँन् पशुमान् भवति । चन्द्रमा वा अपां पुष्पम्ँ । पुष्पवान् प्रजावाँन् पशुमान् भवति । य एवं वेद । योऽपामायतनं वेद । आयतनवान् भवति । अग्निर्वा अपामायतनम् । आयतनवान् भवति । योँऽग्नेरायतनं वेद ॥ ७८ ॥

आयतनवान् भवति । आपो वा अग्नेरायतनम् । आयतनवान् भवति । य एवं वेद । योऽपामायतनं वेद । आयतनवान् भवति । वायुर्वा अपामायतनम् । आयतनवान् भवति । यो वायोरायतनं वेद । आयतनवान् भवति ॥ ७९ ॥

आपो वै वायोरायतनम् । आयतनवान् भवति । य एवं वेद । योऽपामायतनं वेद । आयतनवान् भवति । असौ वै तपन्नपामा-यतनम् । आयतनवान् भवति । योऽमुष्य तपत आयतनं वेद । आयतनवान् भवति । आपो वा अमुष्य तपत आयतनम् ॥ ८० ॥

आयतनवान् भवति । य एवं वेद । योऽपामायतनं वेद । आयतनवान् भवति । चन्द्रमा वा अपामायतनम् । आयतनवान् भवति । यश्चन्द्रमस आयतनं वेद । आयतनवान् भवति । आपो वै चन्द्रमस आयतनम् । आयतनवान् भवति ॥ ८१ ॥

य एवं वेद । योऽपामायतनं वेद । आयतनवान् भवति । नक्षत्राणि वा अपामायतनम् । आयतनवान् भवति । यो नक्षत्राणामायतनं वेद । आयतनवान् भवति । आपो वै

नक्षत्राणामायतनम् । आयतनवान् भवति । य एवं वेद ॥ ८२ ॥

योऽपामायतनं वेद । आयतनवान् भवति । पर्जन्यो वा अपामायतनम् । आयतनवान् भवति । यः पर्जन्यस्यायतनं वेद । आयतनवान् भवति । आपो वै पर्जन्यस्याऽऽयतनम् । आयतनवान् भवति । य एवं वेद । योऽपामायतनं वेद ॥ ८३ ॥

आयतनवान् भवति । संवत्सरो वा अपामायतनम् । आयतनवान् भवति । यस्संवत्सरस्यायतनं वेद । आयतनवान् भवति । आपो वै संवत्सरस्यायतनम् । आयतनवान् भवति । य एवं वेद । योऽप्सु नावं प्रतिष्ठितां वेद । प्रत्येव तिष्ठति ॥ ८४ ॥

इमे वै लोका अप्सु प्रतिष्ठिताः । तदेषाऽभ्यनूक्ता । अपाग्ंरसमुदयग्ंसन्न् । सूर्ये शुक्रग्ंसमाभृतम् । अपाग्ंरसस्य यो रसः । तं वो गृह्णाम्युत्तममिति । इमे वै लोका अपाग्ंरसः । तेऽमुष्मिन्नादित्ये समाभृताः । जानुदघ्नीमुत्तरवेदीङ्खात्वा । अपां पूरयित्वा गुल्फदघ्नम् ॥ ८५ ॥

पुष्करपर्णैः पुष्करदण्डैः पुष्करैश्च सग्ंस्तीर्य। तस्मिन्विहायसे। अग्निं प्रणीयोपसमाधाय । ब्रह्मवादिनो वदन्ति । कस्मात्प्रणीते ऽयमग्निश्चीयते । साप्रणीतेऽयमप्सु ह्ययञ्चीयते । असौ भुवनेप्य-नाहिताग्निरेताः । तमभित एता अबीष्टका उपदधाति । अग्निहोत्रे दर्शपूर्णमासयोः । पशुबन्धे चातुर्मास्येषु ॥ ८६ ॥

अथो आहुः । सर्वेषु यज्ञक्रतुष्विति । एतद्ध स्म वा आहुश्शाण्डिलाः । कमग्निञ्चिनुते । सत्रियमग्निञ्चिन्वानः । संवत्सरं प्रत्यक्षेण । कमग्निञ्चिनुते । सावित्रमग्निञ्चिन्वानः । अमुमादित्यं प्रत्यक्षेण । कमग्निञ्चिनुते ॥ ८७ ॥

नाचिकेतमग्निञ्चिन्वानः । प्राणान्प्रत्यक्षेण । कमग्निञ्चिनुते । चातुर्होत्रियमग्निञ्चिन्वानः । ब्रह्म प्रत्यक्षेण । कमग्निञ्चिनुते । वैश्वसृजमग्निञ्चिन्वानः । शरीरं प्रत्यक्षेण । कमग्निञ्चिनुते । उपानुवाक्यमाशुमग्निञ्चिन्वानः ॥ ८८ ॥

इमान् लोकान्प्रत्यक्षेण । कमग्निञ्चिनुते । इममारुणकेतुक-मग्निञ्चिन्वान इति । य एवासौ । इतश्चाऽमुतश्चाऽव्यतीपाती । तमिति । योऽग्नेर्मिथूया वेद । मिथुनवान्भवति । आपो वा अग्नेर्मिथूयाः । मिथुनवान्भवति । य एवं वेद ॥ ८९ ॥

आपो वा इदमासन्त्सलिलमेव । स प्रजापतिरेकः पुष्करपर्णे समभवत् । तस्यान्तर्मनसि कामस्समवर्तत । इदगंसृजेयमिति । तस्माद्यत्पुरुषो मनसभिगच्छति । तद्वाचा वदति । तत्कर्मणा करोति । तदेषाऽभ्यनूक्ता । कामस्तदग्रे समवर्तताधि । मनसो रेतः प्रथमं यदासीत् ॥ ९० ॥

सतो बन्धुमसति निरविन्दन्न् । हृदि प्रतीष्या कवयो मनीषेति । उपैनन्तदुपनमति । यत्कामो भवति । य एवं वेद । स तपो

ऽतप्यत। स तपस्तप्त्वा। शरीरमधूनुत। तस्य यन्मागंसमासीत्। ततोऽरुणाः केतवो वातरशना ऋषय उदतिष्ठन् ॥ ९१ ॥

ये नखाः। ते वैखानसाः। ये वालाः। ते वालखिल्याः। यो रसः। सोऽपाम्। अन्तरतः कूर्मं भूतगंसर्पन्तम्। तमब्रवीत्। मम वैत्वङ्मागंसा। समभूत् ॥ ९२ ॥

नेत्यब्रवीत्। पूर्वमेवाहमिहासमिति। तत्पुरुषस्य पुरुषत्वम्। स सहस्रशीर्षा पुरुषः। सहस्राक्षस्सहस्रपात्। भूत्वोदतिष्ठत्। तमब्रवीत्। त्वं वै पूर्वगंसमभूः। त्वमिदं पूर्वः कुरुष्वेति। स इत आदायापः ॥ ९३ ॥

अञ्जलिना पुरस्तादुपादधात्। एवाह्येवेति। ततं आदित्य उदतिष्ठत्। सा प्राची दिक्। अथाऽरुणः केतुर्दक्षिणत उपादधात्। एवाह्यग्न इति। ततो वा अग्निरुदतिष्ठत्। सा दक्षिणा दिक्। अथारुणः केतुः पश्चादुपादधात्। एवाहि वायो इति ॥ ९४ ॥

ततो वायुरुदतिष्ठत्। सा प्रतीची दिक्। अथारुणः केतुरुत्तरत उपादधात्। एवाहीन्द्रेति। ततो वा इन्द्र उदतिष्ठत्। सोदीची दिक्। अथारुणः केतुर्मध्य उपादधात्। एवाहि पूषन्निति। ततो वै पूषोदतिष्ठत्। सेयन्दिक् ॥ ९५ ॥

अथारुणः केतुरुपरिष्टादुपादधात्। एवाहि देवा हति। ततो देवमनुष्याः पितरः। गन्धर्वाप्सरसश्चोदतिष्ठन्। सोर्ध्वा

दिक् । या विप्रुषो विपरापतन्न् । ताभ्योऽसुरा रक्षाग्ंसि पिशाचाश्चोदतिष्ठन्न् । तस्मात्ते पराभवन्न् । विप्रुड्भ्यो हि ते समभवन्न् । तदेषाभ्यनूक्ता ॥ ९६ ॥

आपो ह यद्बृहतीर्गर्भमायन्न् । दक्षन्दधाना जनयन्तीस्स्वयंभुम् । तत इमेध्यसृज्यन्त सर्गाः । अद्भ्यो वा इदग्ं समभूत् । तस्मादिदग्ंसर्वं ब्रह्म स्वयंभ्विति । तस्मादिदग्ं सर्वग्ं शिथिलमिवाऽध्रुवमिवाभवत् । प्रजापतिर्वाव तत् । आत्मनात्मानं विधाय । तदेवानुप्राविशत् । तदेषाभ्यनूक्ता ॥ ९७ ॥

विधाय लोकान् विधाय भूतानि । विधाय सर्वाः प्रदिशो दिशश्च । प्रजापतिः प्रथमजा ऋतस्य । आत्मनात्मानमभि-संविवेशेति । सर्वमेवेदमाप्त्वा । सर्वमवरुद्ध्य । तदेवानुप्रविशति । य एवं वेद ॥ ९८ ॥

चतुष्टय्य आपो गृह्णाति । चत्वारि वा अपाग्ंरूपाणि । मेघो विद्युत् । स्तनयित्नुर्वृष्टिः । तान्येवावरुन्धे । आतपति वर्ष्या गृह्णाति । ताः पुरस्तादुपदधाति । एता वै ब्रह्मवर्चस्या आपः । मुखत एव ब्रह्मवर्चसमवरुन्धे । तस्मान्मुखतो ब्रह्मवर्चसितरः ॥ ९९ ॥

कूप्या गृह्णाति । ता दक्षिणत उपदधाति । एता वै तेजस्विनीरापः । तेज एवास्य दक्षिणतो दधाति । तस्माद्दक्षिणोऽर्धस्तेजस्वितरः । स्थावरा गृह्णाति । ताः पश्चादुपदधाति । प्रतिष्ठिता

वै स्थावराः। पश्चादेव प्रतितिष्ठति। वहन्तीर्गृह्णाति ॥ १०० ॥

ता उत्तरत उपदधाति। ओजसा वा एता वहन्तीरिवोद्वतीरिव आकूजंतीरिव धावन्तीः । ओज एवास्योत्तरतो दधाति । तस्मादुत्तरोऽर्धं ओजस्वितरः । संभार्या गृह्णाति । ता मध्य उपदधाति। इयं वै संभार्याः। अस्यामेव प्रतितिष्ठति। पल्वल्या गृह्णाति। ता उपरिष्टादुपादधाति ॥ १०१ ॥

असौ वै पल्वल्याः। अमुष्यामेव प्रतितिष्ठति। दिक्षूपदधाति। दिक्षु वा आपः । अन्नं वा आपः । अद्भ्यो वा अन्नञ्जायते । यदेवाद्भ्योऽन्नञ्जायते । तदवरुन्धे । तं वा एतमरुणाः केतवो वातरशना ऋषयोऽचिन्वन्न्। तस्मादारुणकेतुकः ॥ १०२ ॥

तदेषाभ्यनूक्ता । केतवो अरुणासश्च । ऋषयो वातरशनाः । प्रतिष्ठाग्ं शतधाहि। समाहितासो सहस्रधायसमिति। शतशश्चैव सहस्रशश्च प्रतितिष्ठति । य एतमग्निञ्चिनुते य उचैनमेवं वेद ॥ १०३ ॥

जानुदघ्नीमुत्तरवेदीङ्खात्वा। अपां पूरयति। अपाग्ं सर्वत्वाय। पुष्करपर्णग्ंरुक्मं पुरुषमित्युपदधाति । तपो वै पुष्करपर्णम् । सत्यग्ंरुक्मः । अमृतं पुरुषः । एतावद्वा वाँस्ति । यावदेतत् । यावदेवास्ति ॥ १०४ ॥

तदवरुन्धे । कूर्ममुपदधाति । अपामेव मेधमवरुन्धे । अथो

स्वर्गस्यं लोकस्य समंष्ट्यै । आपंमापामपस्सर्वाः । अस्मादस्मा-दितोऽमुतंः । अग्निर्वायुश्च सूर्यश्च । सहसंश्चस्करर्द्धिया इति । वाय्वश्वां रश्मिपतंयः । लोकं पृंणच्छिद्रं पृंण ॥ १०५ ॥

यास्तिस्रः परमजाः । इन्द्रघोषा वो वसुंभिरेवाह्येवेति । पञ्चचितय उपंदधाति । पाङ्क्तोऽग्निः । यावांनेवाग्निः । तञ्चिंनुते । लोकंपृंणया द्वितीयामुपंदधाति । पञ्चं पदा वै विराट् । तस्या वा इयं पादः । अन्तरिंक्षं पादः । द्यौः पादः । दिशः पादः । परोरंजाः पादः । विराज्येव प्रतिंतिष्ठति । य एतमग्निञ्चिंनुते । य उंचैनमेवं वेदं ॥ १०६ ॥

अग्निं प्रणीयोंपसमाधायं । तमभित एता अबीष्टंका उपंदधाति । अग्निहोत्रे दंर्शपूर्णमासयोः । पशुबन्धे चांतुर्मास्येषु । अथों आहुः । सर्वेंषु यज्ञक्रतुष्विति । अथ हस्माहारुण-स्स्वांयंभुवंः । सावित्रः सर्वोऽग्निरित्यनंनुषङ्गं मन्यामहे । नाना वा एतेषां वीर्याणि । कमग्निञ्चिंनुते ॥ १०७ ॥

सत्रियमग्निञ्चिंन्वानः । कमग्निञ्चिंनुते । सावित्रमग्निञ्चिंन्वानः । कमग्निञ्चिंनुते । नाचिकेतमग्निञ्चिंन्वानः । कमग्निञ्चिंनुते । चातुर्-होत्रिय-मग्निञ्चिंन्वानः । कमग्निञ्चिंनुते । वैश्वसृजमग्निञ्चिंन्वानः । कमग्निञ्चिंनुते ॥ १०८ ॥

उपानुवाक्यंमाशुमग्निञ्चिंन्वानः । कमग्निञ्चिंनुते । इममांरुणकेतुक

मग्निश्चिन्वान इति । वृषा वा अग्निः । वृषाणौ सग्ग्स्फालयेत् । हन्येतास्य यज्ञः । तस्मान्नानुषज्यः । सोत्तरवेदिषु क्रतुषु चिन्वीत । उत्तरवेद्याग्ह्यग्निश्चीयते । प्रजाकामश्चिन्वीत ॥ १०९ ॥

प्राजापत्यो वा एषोऽग्निः । प्राजापत्याः प्रजाः । प्रजावान् भवति । य एवं वेद । पशुकामश्चिन्वीत । संज्ञानं वा एतत् पशूनाम् । यदापः पशूनामेव संज्ञानेऽग्निश्चिनुते । पशुमान् भवति । य एवं वेद ॥ ११० ॥

वृष्टिकामश्चिन्वीत । आपो वै वृष्टिः । पर्जन्यो वर्षुको भवति । य एवं वेद । आमयावी चिन्वीत । आपो वै भेषजम् । भेषजमेवास्मै करोति । सर्वमायुरेति । अभिचरग्श्चिन्वीत । वज्रो वा आपः ॥ १११ ॥

वज्रमेव भ्रातृव्येभ्यः प्रहरति । स्तृणुत एनम् । तेजस्कामो यशस्कामः । ब्रह्मवर्चसकामस्स्वर्गकामश्चिन्वीत । एतावद्वा वास्ति । यावदेतत् । यावदेवास्ति । तदवरुन्धे । तस्यैतद्व्रतम् । वर्षति न धावेत् ॥ ११२ ॥

अमृतं वा आपः । अमृतस्यानन्तरित्यै । नाप्सु मूत्रपुरीषङ्कुर्यात् । न निष्ठीवेत् । न विवसनस्स्नायात् । गुह्यो वा एषोऽग्निः । एतस्याग्नेरनतिदाहाय । न पुष्करपर्णानि हिरण्यंवाऽधितिष्ठेत् । एतस्याग्नेरनभ्यारोहाय । न कूर्मस्याश्नीयात् । नोदकस्याघातु-

कान्येनमोदकानिं भवन्ति। अघातुंका आपंः। य एतमग्निञ्चिनुते। य उंचैनमेवं वेदं ॥ ११३॥

इमानुंकं भुंवना सीषधेम। इन्द्रंश्च विश्वें च देवाः। यज्ञञ्च नस्तन्वञ्च प्रजाञ्च। आदित्यैरिन्द्रंस्सह सींषधातु। आदित्यैरिन्द्र-स्सगंणो मरुद्भिंः। अस्माकं भूत्ववि ता तनूनाँम्। आप्लंवस्व प्रप्लंवस्व। आण्डीभंवज मा मुहुः। सुखादीन्दुंःखनिधनाम्। प्रतिंमुञ्चस्व स्वां पुरम् ॥ ११४॥

मरींचयस्स्वायंभुवाः। ये शंरीराण्यंकल्पयन्न्। ते तें देहङ्कंल्पयन्तु। मा चं ते ख्यास्मं तीरिषत्। उत्तिंष्ठत मा स्वंप्त। अग्निमिंच्छध्वं भारंताः। राज्ञस्सोमंस्य तृप्तासंः। सूर्येंण सयुजोंषसः। युवां सुवासाँः। अष्टाचंक्रा नवंद्वारा ॥ ११५॥

देवानां पूरंयोध्या। तस्यागंहिरण्मंयः कोशः। स्वर्गो लोको ज्योतिषाऽऽवृंतः। यो वै ताँ ब्रह्मंणो वेद। अमृतेंनाऽऽवृतां पुंरीम्। तस्मैँ ब्रह्म चं ब्रह्मा च। आयुः कीर्तिं प्रजान्दंदुः। विभ्राजंमानागंहरिंणीम्। यशसां संपरीवृंताम्। पुरगंहिरण्मंयीं ब्रह्मा ॥ ११६॥

विवेशांऽपराजिंता। पराङ्केत्यंज्यामयी। पराङ्केत्यंनाशकी। इहचांमुत्रंचान्वेति। विद्वान्देंवासुरानुंभयान्। यत्कुंमारी मन्द्रयंते। यद्योषिद्यत्पंतिव्रताँ। अरिंष्टं यत्किंचं क्रियतेँ। अग्निस्तदनुंवेधति।

अश्रुतासश्श्रृतासश्च ॥ ११७ ॥

यज्वानो येऽप्ययज्वनः । स्वर्यन्तो नापेक्षन्ते । इन्द्रमग्निश्च ये विदुः । सिकता इव संयन्ति । रश्मिभिस्समुदीरिताः । अस्माल्लोकादमुष्माच्च । ऋषिभिरदात्पृश्निभिः । अपेत वीत वि च सर्पतातः । येऽत्रस्थ पुराणा ये च नूतनाः । अहोभिरद्भिरक्तुभिर्व्यक्तम् ॥ ११८ ॥

यमो ददात्ववसानमस्मै । नृ मुणन्तु नृपात्वर्यः । अकृष्टा ये च कृष्टजाः । कुमारीषु कनीनीषु । जारिणीषु च ये हिताः । रेतःपीता आण्डपीताः । अङ्गारेषु च ये हुताः । उभयान् पुत्रपौत्रकान् । युवेऽहं यमराजगान् । शतमिन्नु शरदः ॥ ११९ ॥

अदो यद्ब्रह्म विलबम् । पितृणाञ्च यमस्य च । वरुणस्याश्विनोरग्नेः । मरुताञ्च विहायसाम् । कामप्रयवणं मे अस्तु । स ह्येवास्मि सनातनः । इति नाको ब्रह्मिश्रवो रायो धनम् । पुत्रानापो देवीरिहाऽऽहित ॥ १२० ॥

विशीर्ष्णीङ्गृध्रशीर्ष्णीञ्च । अपेतो निरृतिगृंहथः । परिबाधग्-श्वेतकुक्षम् । निजङ्घग्ंशबलोदरम् । स तान् वाच्याययया सह । अग्ने नाशय सन्दृशः । ईर्ष्यासूये बुभुक्षाम् । मन्युं कृत्यां च दीधिरे । रथेन किग्ंशुकावता । अग्ने नाशय सन्दृशः ॥ १२१ ॥

पर्जन्याय प्रगायत । दिवस्पुत्राय मीढुषे । स नो यवसमिच्छतु ।

इदं वचः पर्जन्याय स्वराजे। हृदो अस्त्वन्तरन्तद्युयोत। मयोभूर्वातो विश्वकृष्टयस्सन्त्वस्मे। सुपिप्पला ओषधीर्देवगोपाः। यो गर्भमोषधीनाम्। गवाङ्कृणोत्यर्वताम्। पर्जन्यः पुरुषीणाम् ॥ १२२ ॥

पुनर्मामैत्त्विन्द्रियम्। पुनरायुः पुनर्भगः। पुनर्ब्राह्मणमैतु मा। पुनर्द्रविणमैतु मा। यन्मेऽद्य रेतः पृथिवीमस्कान्। यदोषधीरप्यसरद्यदापः। इदन्तत्पुनराददे। दीर्घायुत्त्वाय वर्चसे। यन्मे रेतः प्रसिच्यते। यन्म आजायते पुनः। तेन माममृतं कुरु। तेन सुप्रजसङ्कुरु ॥ १२३ ॥

अद्भ्यस्तिरोधाऽजायत। तव वैश्रवणस्सदा। तिरोधेहि सपत्नान्नः। ये अपोऽश्नन्ति केचन। त्वाष्ट्रीं मायां वैश्रवणः। रथग्ंसहस्रवन्धुरम्। पुरुश्चक्रग्ंसहस्राश्वम्। आस्थायायाहि नो बलिम्। यस्मै भूतानि बलिमावहन्ति। धनङ्गावो हस्तिहिरण्यमश्वान् ॥ १२४ ॥

असाम सुमतौ यज्ञियस्य। श्रियं बिभ्रतोऽन्नमुखीं विराजम्। सुदर्शने च क्रौञ्चे च। मैनागे च महागिरौ। शतद्वाट्टारगमन्ता। सग्ंहार्यन्नगरं तव। इति मन्त्राः। कल्पोऽत ऊर्ध्वम्। यदि बलिग्ं हरेत्। हिरण्यनाभये वितुदये कौबेरायायं बलिः ॥ १२५ ॥

सर्वभूताधिपतये नम इति। अथ बलिग्ंहृत्वोपतिष्ठेत। क्षत्रं क्षत्रं वैश्रवणः। ब्राह्मणा वयग्ंस्मः। नमस्ते अस्तु मा मा हिग्ंसीः।

अस्मात्प्रविश्यान्नमद्धीति । अथ तमग्निमादधीत । यस्मिन्नेतत्कर्म प्रयुञ्जीत । तिरोधा भूः । तिरोधा भुवः ॥ १२६ ॥

तिरोधास्स्वः । तिरोधा भूर्भुवस्स्वः । सर्वेषां लोकानामाधिपत्ये सीदेति । अथ तमग्निमिन्धीत । यस्मिन्नेतत्कर्म प्रयुञ्जीत । तिरोधा भूस्स्वाहा । तिरोधा भुवस्स्वाहा । तिरोधास्स्वस्स्वाहा । तिरोधा भूर्भुवस्स्वस्स्वाहा । यस्मिन्नस्य काले सर्वा आहुतीर् हुता भवेयुः ॥ १२७ ॥

अपि ब्राह्मणमुखीनाः । तस्मिन्नह्नः काले प्रयुञ्जीत । परस्सुप्त-जनाद्वेपि । मास्म प्रमाद्यन्तमाध्यापयेत् । सर्वार्थास्सिद्ध्यन्ते । य एवं वेद । क्षुध्यन्निदमजानताम् । सर्वार्था न सिद्ध्यन्ते । यस्ते विघातुको भ्राता । ममान्तर्हृदये श्रितः ॥ १२८ ॥

तस्मा इममग्रपिण्डञ्जुहोमि । स मेऽर्थान्मा विवधीत् । मयि स्वाहा । राजाधिराजाय प्रसह्यसाहिने । नमो वयं वैश्रवणाय कुर्महे । स मे कामान्कामकामाय मह्यम् । कामेश्वरो वैश्रवणो ददातु । कुबेराय वैश्रवणाय । महाराजाय नमः । केतवो अरुणासश्च । ऋषयो वातरशनाः । प्रतिष्ठाग्ंशतधा हि । समाहितासो सहस्रधायसम् । शिवानश्शन्तमा भवन्तु । दिव्या आप ओषधयः । सुमृडीका सरस्वति । मा ते व्योम सन्दृशि ॥ १२९ ॥

संवत्सरमेतद्व्रतं चरेत् । द्वौ वा मासौ । नियमस्समासेन ।

तस्मिन्नियमविशेषाः । त्रिषवणमुदकोपस्पर्शी । चतुर्थकालपानभक्तस्स्यात् । अहरहर्वा भैक्षमश्नीयात् । औदुंबरीभिस्समिद्भिरग्निं परिचरेत् । पुनर्मामैत्त्विन्द्रियमित्येतेनाऽनुवाकेन । उद्धृतपरिपूताभिरद्भिः कार्यं कुर्वीत ॥ १३० ॥

असञ्च्यवान् । अग्नये वायवे सूर्याय । ब्रह्मणे प्रजापतये । चन्द्रमसे नक्षत्रेभ्यः । ऋतुभ्यस्संवत्सराय । वरुणायारुणायेति व्रतहोमाः । प्रवर्ग्यवदादेशः । अरुणाः काण्डऋषयः । अरण्येऽधीयीरन् । भद्रङ्कर्णेभिरिति द्वे जपित्वा ॥ १३१ ॥

महानाम्नीभिरुदकग्ं संग्ग्स्पर्श्य । तमाचार्यो दद्यात् । शिवानश्शन्तमेत्योषधीरालभते । सुमृडीकेति भूमिम् । एवमपवर्गे । धेनुर्दक्षिणा । कग्ंसं वासश्च क्षौमम् । अन्यद्वा शुक्लम् । यथाशक्ति वा । एवग्ग्स्वाध्यायधर्मेण । अरण्येऽधीयीत । तपस्वी पुण्यो भवति तपस्वी पुण्यो भवति ॥ १३२ ॥

ॐ भद्रङ्कर्णेभिश्शृणुयाम देवाः । भद्रं पश्येमाक्षभिर्यजत्राः । स्थिरैरङ्गैस्तुष्टुवाग्ंसस्तनूभिः । व्यशेम देवहितं यदायुः । स्वस्ति न इन्द्रो वृद्धश्रवाः । स्वस्ति नः पूषा विश्ववेदाः । स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः । स्वस्ति नो बृहस्पतिर्दधातु ॥ १३३ ॥

॥ ॐ शान्तिः शान्तिः शान्तिः ॥



# ॥ पुरुषसूक्तम् ॥

तैत्तिरीयारण्यकम् - तृतीयः प्रश्नः

ॐ तच्छं योरावृंणीमहे । गातुं यज्ञायं । गातुं यज्ञपंतये । दैवी स्वस्तिरंस्तु नः । स्वस्तिर्मानुंषेभ्यः । ऊर्ध्वं जिंगातु भेषजम् । शं नों अस्तु द्विपदे । शं चतुंष्पदे । ॐ शान्तिः शान्तिः शान्तिंः ॥

ॐ सहस्रंशीर्षा पुरुंषः । सहस्राक्षः सहस्रंपात् । स भूमिं विश्वतों वृत्वा । अत्यंतिष्ठद्दशाङ्गुलम् । पुरुंष एवेदगं सर्वम् । यद्भूतं यच्च भव्यम् । उतामृतत्वस्येशांनः । यदन्नेंनातिरोहंति । एतावांनस्य महिमा । अतो ज्यायागंश्च पूरुंषः ॥ १ ॥

पादोंऽस्य विश्वां भूतानिं । त्रिपादंस्यामृतं दिवि । त्रिपादूर्ध्व उदैत्पुरुंषः । पादोंऽस्येहाऽऽभंवात्पुनः । ततो विष्वङ्व्यंक्रामत् । साशनानशने अभि । तस्मांद्विराडंजायत । विराजो अधि पूरुंषः । स जातो अत्यंरिच्यत । पश्चाद्भूमिमथों पुरः ॥ २ ॥

यत्पुरुंषेण हविषां । देवा यज्ञमतंन्वत । वसन्तो अंस्यासीदाज्यम् । ग्रीष्म इध्मश्शरद्धविः । सप्तास्यांसन्परिधयंः । त्रिः सप्त समिधंः कृताः । देवा यद्यज्ञं तंन्वानाः । अबंध्नन्पुरुंषं पशुम् । तं यज्ञं बर्हिषि प्रौक्षन् । पुरुंषं जातमंग्रतः ॥ ३ ॥

तेनं देवा अयंजन्त । साध्या ऋषंयश्च ये । तस्मांद्यज्ञात्संर्वहुतंः ।

संभृतं पृषदाज्यम् । पशूग्स्ताग्श्चक्रे वायव्यान् । आरण्यान्ग्राम्याश्च ये । तस्माद्यज्ञात्सर्वहुतः । ऋचः सामानि जज्ञिरे । छन्दाग्ंसि जज्ञिरे तस्मात् । यजुस्तस्मादजायत ॥ ४ ॥

तस्मादश्वा अजायन्त । ये के चोभयादतः । गावो ह जज्ञिरे तस्मात् । तस्माज्जाता अजावयः । यत्पुरुषं व्यदधुः । कतिधा व्यकल्पयन् । मुखं किमस्य कौ बाहू । कावूरू पादावुच्येते । ब्राह्मणोऽस्य मुखमासीत् । बाहू राजन्यः कृतः ॥ ५ ॥

ऊरू तदस्य यद्वैश्यः । पद्भ्याग् शूद्रो अजायत । चन्द्रमा मनसो जातः । चक्षोः सूर्यो अजायत । मुखादिन्द्रश्चाग्निश्च । प्राणाद्वायुरजायत । नाभ्या आसीदन्तरिक्षम् । शीर्ष्णो द्यौः समवर्तत । पद्भ्यां भूमिर्दिशः श्रोत्रात् । तथा लोकाग् अकल्पयन् ॥ ६ ॥

वेदाहमेतं पुरुषं महान्तम् । आदित्यवर्णं तमसस्तुपारे । सर्वाणि रूपाणि विचित्य धीरः । नामानि कृत्वाऽभिवदन् , यदास्ते । धाता पुरस्ताद्यमुदाजहार । शक्रः प्रविद्वान्प्रदिशश्चतस्रः । तमेवं विद्वानमृत इह भवति । नान्यः पन्था अयनाय विद्यते । यज्ञेन यज्ञमयजन्त देवाः । तानि धर्माणि प्रथमान्यासन् । ते ह नाकं महिमानः सचन्ते । यत्र पूर्वे साध्याः सन्ति देवाः ॥ ७ ॥

अद्भ्यः संभूतः पृथिव्यै रसाच्च । विश्वकर्मणः समवर्तताधि । तस्य त्वष्टा विदधद्रूपमेति । तत्पुरुषस्य विश्वमाजानमग्रे ।

वेदाहमेतं पुरुषं महान्तम् । आदित्यवर्णं तमसः परस्तात् । तमेवं विद्वानमृतं इह भवति । नान्यः पन्था विद्यतेऽयनाय । प्रजापतिश्चरति गर्भे अन्तः । अजायमानो बहुधा विजायते ॥ ८ ॥

तस्य धीराः परिजानन्ति योनिम् । मरीचीनां पदमिच्छन्ति वेधसः । यो देवेभ्य आतपति । यो देवानां पुरोहितः । पूर्वो यो देवेभ्यो जातः । नमो रुचाय ब्राह्मये । रुचं ब्राह्मं जनयन्तः । देवा अग्रे तदब्रुवन् । यस्त्वैवं ब्राह्मणो विद्यात् । तस्य देवा असन् वशे ॥ ९ ॥

ह्रीश्च ते लक्ष्मीश्च पत्न्यौ । अहोरात्रे पार्श्वे । नक्षत्राणि रूपम् । अश्विनौ व्यात्तम् । इष्टं मनिषाण । अमुं मनिषाण । सर्वं मनिषाण ॥ १० ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

## ॥ नारायणसूक्तम् ॥

**तैत्तिरीयारण्यकम् - 4 प्रपाठकः - 10 अनुवाकः - 13**

ॐ सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्वि-नावधीतमस्तु मा विद्विषावहै ॥ ॐ शान्तिः शान्तिः शान्तिः ॥

ॐ ॥ सहस्रशीर्षं देवं विश्वाक्षं विश्वशम्भुवम् । विश्वं नारायणं देवमक्षरं परमं पदम् । विश्वतः परमान्नित्यं विश्वं नारायणग् हरिम् । विश्वमेवेदं पुरुष-स्तद्विश्व-मुपजीवति । पतिं विश्वस्यात्मेश्वरग् शाश्वतग् शिव-मच्युतम् । नारायणं महाज्ञेयं विश्वात्मानं परायणम् । नारायणपरो ज्योतिरात्मा नारायणः परः । नारायणपरं

ब्रह्म तत्त्वं नारायणः परः । नारायणपरो ध्याता ध्यानं नारायणः परः । यच्च किञ्चिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा ॥

अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः । अनन्तमव्ययं कविग्ं समुद्रेऽन्तं विश्वशम्भुवम् । पद्मकोश-प्रतीकाशग्ं हृदयं चाप्यधोमुखम् । अधो निष्ट्या वितस्त्यान्ते नाभ्यामुपरि तिष्ठति । ज्वालमालाकुलं भाती विश्वस्यायतनं महत् । सन्ततग्ं शिलाभिस्तु लम्बत्याकोशसन्निभम् । तस्यान्ते सुषिरग्ं सूक्ष्मं तस्मिन् सर्वं प्रतिष्ठितम् । तस्य मध्ये महानग्नि-र्विश्वार्चि-र्विश्वतोमुखः । सोऽग्रभुग्विभजन्तिष्ठ-न्नाहारमजरः कविः । तिर्यगूर्ध्व-मधश्शायी रश्मयस्तस्य सन्तता । सन्तापयति स्वं देहमापाद-तलमस्तकः । तस्य मध्ये वह्निशिखा अणीयोर्ध्वा व्यवस्थितः । नीलतो-यदमध्यस्था-द्विद्युल्लेखेव भास्वरा । नीवारशूकवत्तन्वी पीता भास्वत्यणूपमा । तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः । स ब्रह्म स शिवः स हरिः सेन्द्रः सोऽक्षरः परमः स्वराट् ॥

ऋतग्ं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् । ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमो नमः ॥

ॐ नारायणाय विद्महे वासुदेवाय धीमहि । तन्नो विष्णुः प्रचोदयात् ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

# ॥ विष्णुसूक्तम् ॥

ॐ विष्णोर्नुकं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसि यो अस्कंभायदुत्तरं सधस्थं विचक्रमाणस्त्रेधोरुगायो विष्णोरराटमसि विष्णोः पृष्ठमसि विष्णोः श्नप्त्रेस्थो विष्णोस्स्यूरसि विष्णोर्ध्रुवमसि वैष्णवमसि विष्णवे त्वा ॥

तदस्य प्रियमभिपाथो अश्याम् । नरो यत्र देवयवो मदन्ति । उरुक्रमस्य स हि बन्धुरित्था । विष्णोः पदे परमे मध्व उत्सः । प्रतद्विष्णुस्स्तवते वीर्याय । मृगो न भीमः कुचरो गिरिष्ठाः । यस्योरुषु त्रिषु विक्रमणेषु । अधिक्षियन्ति भुवनानि विश्वा । परो मात्रया तनुवा वृधान । न ते महित्वमन्वश्नुवन्ति ॥

उभे ते विद्म रजसी पृथिव्या विष्णो देवत्वम् । परमस्य विथ्से । विचक्रमे पृथिवीमेष एताम् । क्षेत्राय विष्णुर्मनुषे दशस्यन् । ध्रुवासो अस्य कीरयो जनासः । ऊरुक्षितिं सुजनिमाचकार । त्रिर्देवः पृथिवीमेष एताम् । विचक्रमे शतर्चसं महित्वा । प्रविष्णुरस्तु तवसस्तवीयान् । त्वेषग्ह्यस्य स्थविरस्य नाम ॥

अतो देवा अवन्तुनो यतो विष्णु-र्विचक्रमे । पृथिव्यास्सप्त धामभिः । इदं विष्णु-र्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पागं सुरे । त्रीणि पदा विचक्रमे विष्णुर्गोपा अदाभ्यः । ततो धर्माणि धारयन् । विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे । इन्द्रस्य

युज्यस्सखाँ ॥

तद्विष्णोँः परमं पदग्ं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् । तद्विप्रासो विपन्यवो जागृवाग्ं सस्समिन्धते । विष्णो-र्यत्परमं पदम् । पर्याँप्त्या अनन्तरायाय सर्वस्तोमोऽति रात्र उत्तम महर्भवति सर्वस्याप्त्यै सर्वस्य जित्त्यै सर्वमेव तेनाँप्नोति सर्वं जयति ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

## ॥ श्रीसूक्तम् ॥

**ऋ. सं. अष्टकम्. 4 अ. 4 परि. सू. 11**

ॐ ॥ हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम् । चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥ तां म आवह जातवेदो लक्ष्मीमन-पगामिनीँम् । यस्यां हिरण्यं विन्देयं गामश्वं पुरुषानहम् ॥ अश्वपूर्वां रथमध्यां हस्तिनाँद-प्रबोधिनीम् । श्रियं देवीमुपह्वये श्रीर्माँ देवीर्जुषताम् ॥ कां सोस्मितां हिरण्यप्राकारामार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीम् । पद्मे स्थितां पद्मवर्णां तामिहोपह्वये श्रियम् ॥ चन्द्रां प्रभासां यशसा ज्वलन्तीं श्रियं लोके देवजुष्टामुदाराम् । तां पद्मिनीमीं शरणमहं प्रपद्येऽलक्ष्मीर्मे नश्यतां त्वां वृणे ॥ आदित्यवर्णे तपसोऽधिजातो वनस्पतिस्तव वृक्षोऽथ बिल्वः । तस्य फलाँनि तपसा नुदन्तु मायान्तरायाश्च बाह्या अलक्ष्मीः ॥

उपैतु मां देवसखः कीर्तिश्च मणिना सह । प्रादुर्भूतोऽस्मिं राष्ट्रेऽस्मिन् कीर्तिमृद्धिं ददातु मे ॥ क्षुत्पिपासामलां ज्येष्ठामलक्ष्मीं नाशयाम्यहम् । अभूतिमसमृद्धिं च सर्वां निर्णुद मे गृहात् ॥ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् । ईश्वरीगं सर्वभूतानां तामिहोपह्वये श्रियम् ॥ मनसः काममाकूतिं वाचः सत्यमशीमहि । पशूनां रूपमन्नस्य मयि श्रीः श्रयतां यशः ॥ कर्दमेन प्रजाभूता मयि संभव कर्दम । श्रियं वासय मे कुले मातरं पद्ममालिनीम् ॥ आपः सृजन्तु स्निग्धानि चिक्लीत वस मे गृहे । नि च देवीं मातरं श्रियं वासय मे कुले । आर्द्रां पुष्करिणीं पुष्टिं पिङ्गलां पद्ममालिनीम् । चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥ आर्द्रां यः करिणीं यष्टिं सुवर्णां हेममालिनीम् । सूर्यां हिरण्मयीं लक्ष्मीं जातवेदो म आवह । तां म आवह जातवेदो लक्ष्मीमनपगामिनीम् । यस्यां हिरण्यं प्रभूतं गावो दास्यो ऽश्वान् , विन्देयं पुरुषानहम् ॥

यः शुचिः प्रयतो भूत्वा जुहुयादाज्य मन्वहम् । श्रियः पञ्चदशर्चं च श्रीकामः सततं जपेत् । पद्मानने पद्म ऊरू पद्माक्षी पद्मसंभवे । त्वं मां भजस्व पद्माक्षी येन सौख्यं लभाम्यहम् ॥ अश्वदायी गोदायी धनदायी महाधने । धनं मे जुषतां देवि सर्वकामांश्च देहि मे ॥ पुत्रपौत्र धनं धान्यं हस्त्यश्वादिगवे रथम् ।

प्रजानां भवसि माता आयुष्मन्तं करोतु माम् ॥ धनमग्निर्धनं वायुर्धनं सूर्यो धनं वसुः। धनमिन्द्रो बृहस्पतिर्वरुणं धनमश्नुते ॥ वैनतेय सोमं पिब सोमं पिबतु वृत्रहा। सोमं धनस्य सोमिनो मह्यं ददातु सोमिनः ॥ न क्रोधो न च मात्सर्यं न लोभो नाशुभा मतिः। भवन्ति कृतपुण्यानां भक्तानां श्रीसूक्तं जपेत्सदा ॥ वर्षन्तु ते विभावरि दिवो अभ्रस्य विद्युतः । रोहन्तु सर्वबीजान्यव ब्रह्म द्विषो जहि ॥ पद्मप्रिये पद्मिनि पद्महस्ते पद्मालये पद्मदलायताक्षि। विश्वप्रिये विष्णु मनोऽनुकूले त्वत्पादपद्मं मयि सन्निधत्स्व ॥ या सा पद्मासनस्था विपुलकटितटी पद्मपत्रायताक्षी। गम्भीरा वर्तनाभिः स्तनभर नमिता शुभ्र वस्त्रोत्तरीया ॥ लक्ष्मीर्दिव्यै-र्गजेन्द्रैर्मणिगण खचितै-स्स्नापिता हेमकुम्भैः ।

नित्यं सा पद्महस्ता मम वसतु गृहे सर्वमाङ्गल्ययुक्ता ॥ लक्ष्मीं क्षीरसमुद्र राजतनयां श्रीरङ्गधामेश्वरीम् । दासीभूतसमस्त देव वनितां लोकैक दीपांकुराम् । श्रीमन्मन्दकटाक्षलब्ध विभव ब्रह्मेन्द्रगङ्गाधराम् । त्वां त्रैलोक्य कुटुम्बिनीं सरसिजां वन्दे मुकुन्दप्रियाम् ॥

सिद्धलक्ष्मी-र्मोक्षलक्ष्मी-र्जयलक्ष्मीस्सरस्वती । श्रीलक्ष्मीर्वर लक्ष्मीश्च प्रसन्ना मम सर्वदा। वरांकुशौ पाशमभीतिमुद्रां करैर्वहन्तीं कमलासनस्थाम् । बालार्क कोटि प्रतिभां त्रिणेत्रां भजेहमाद्यां

जगदीश्वरीं त्वाम् ॥

सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थ साधिके । शरण्ये त्र्यम्बके देवि नारायणि नमोऽस्तु ते ॥ नारायणि नमोऽस्तु ते । नारायणि नमोऽस्तु ते ॥

सरसिज-निलये सरोजहस्ते धवलतरांशुक गन्धमाल्यशोभे । भगवति हरिवल्लभे मनोज्ञे त्रिभुवनभूतिकरि प्रसीद मह्यम् ॥

विष्णुपत्नीं क्षमां देवीं माधवीं माधवप्रियाम् । विष्णोः प्रियसखीं देवीं नमाम्यच्युत- वल्लभाम् ॥

महालक्ष्मी च विद्महे विष्णुपत्नी च धीमहि । तन्नो लक्ष्मीः प्रचोदयात् ॥ श्री-वर्चस्य-मायुष्य-मारोग्यमाविधात् पवमानं महीयते । धनं धान्यं पशुं बहुपुत्रलाभं शतसंवत्सरं दीर्घमायुः ॥ ऋणरोगादि-दारिद्र्य-पापक्षुदपमृत्यवः । भयशोकमनस्तापा नश्यन्तु मम सर्वदा ॥

श्रियै जात श्रिय आनिर्याय श्रियं वयो जनितृभ्यो दधातु । श्रियं वसाना अमृतत्वमायन् भजन्ति सद्यः सविता विदध्यून् ॥ श्रियं एवैनं तच्छ्रियामादधाति । सन्ततमृचा वषट्कृत्यं सन्धत्तं सन्धीयते प्रजया पशुभिः । य एवं वेद । ॐ महादेव्यै च विद्महे विष्णुपत्नी च धीमहि । तन्नो लक्ष्मीः प्रचोदयात् ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

# ॥ भूसूक्तम् ॥

तैत्तिरीय संहिता  काण्डम् - 1  प्रपाठकः - 5  अनुवाकः - 3

तैत्तिरीय ब्राह्मणम्  अष्टकम् - 3  प्रश्नः - 1  अनुवाकः - 2

ॐ ॥ भूमिर्भूम्ना द्यौर्वरिणाऽन्तरिक्षं महित्वा । उपस्थे ते देव्यदितेऽग्निमन्नाद-मन्नाद्यायादधे । आऽयङ्गौः पृश्निरक्रमी दसनन्मातरं पुनः । पितरं च प्रयन्त्सुवः । त्रिगंशद्धाम विराजति वाक्पतङ्गाय शिश्रिये । प्रत्यस्य वह द्युभिः । अस्य प्राणादपानत्यन्तश्चरति रोचना । व्यख्यन् महिषः सुवः । यत्त्वा क्रुद्धः परोवपमन्युना यदवर्त्या । सुकल्पमग्ने तत्तव पुनस्त्वोद्दीपयामसि । यत्ते मन्युपरोप्तस्य पृथिवीमनुदध्वसे । आदित्या विश्वे तद्देवा वसवश्च समाभरन् ।

मेदिनी देवी वसुन्धरा स्याद्वसुधा देवी वासवी । ब्रह्मवर्चसः पितृणाग् श्रोत्रं चक्षुर्मनः । देवी हिरण्यगर्भिणी देवी प्रसूवरी । सदने सत्यायने सीद । समुद्रवती सावित्रीह नो देवी मह्यङ्गी । महीधरणी महोव्यथिष्ठा-श्शृङ्गे शृङ्गे यज्ञे यज्ञे विभीषिणी । इन्द्रपत्नी व्यापिनी सुरसरिदिह । वायुमती जलशयनी श्रियंधाराजा सत्यन्धोपरिमेदिनी । श्वोपरिधत्तं परिगाय ।

विष्णुपत्नीं महीं देवीं माधवीं माधवप्रियाम् । लक्ष्मी प्रियसखीं देवीं नमाम्यच्युतवल्लभाम् ।

ॐ धनुर्धरायै विद्महे सर्वसिद्ध्यै च धीमहि । तन्नो धरा प्रचोदयात् । महीं देवीं विष्णुपत्नी-मजूर्याम् । प्रतीचीं मेनागं हविषा यजामः । त्रेधा विष्णुरुरुगायो विचक्रमे । महीं दिवं पृथिवीमन्तरिक्षम् । तच्छ्रोणैतिश्रवं-इच्छमाना । पुण्यग्ं श्लोकं यजमानाय कृण्वती ॥ ॐ शान्तिः शान्तिः शान्तिः ॥

## ॥ नीळासूक्तम् ॥

**तैत्तिरीय संहिता . काण्डम् - 4 प्रपाठकः - 4 अनुवाकः - 12**

ॐ ॥ गृणाहि । घृतवती सवितराधिपत्यैः पयस्वतीरन्तिराशानो अस्तु । ध्रुवा दिशां विष्णुपत्न्यघोराऽस्येशानासहसोया मनोता । बृहस्पतिं-र्मातरिश्वोत वायुस्संन्धुवानावाता अभि नो गृणन्तु । विष्टम्भो दिवोधरुणः पृथिव्या अस्येश्याना जगतो विष्णुपत्नी ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

---

यथा बिम्बमेकं रवेरम्बरस्थं
प्रतिच्छाययया तावदेकोदकेषु ।
समुद्भासतेऽनेकरूपं यथावत्
त्वमेका परब्रह्मरूपेण सिद्धा ॥

महाकालसंहिता

As the one sun, reflected in the different pools of water, appears as so many different suns, so Thou, too, O Mother, appear as many through delusion. But still Thou art the One without a second, known as the Brahman supreme.

# ॥ दुर्गासूक्तम् ॥

तैत्तिरीयारण्यकम् - 4 प्रपाठकः - 10 अनुवाकः - 2

ॐ ॥ जातवेदसे सुनवाम सोम मरातीयतो निदहाति वेदः । स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरिताऽत्यग्निः ॥ तामग्निवर्णां तपसा ज्वलन्तीं वैरोचनीं कर्मफलेषु जुष्टाम् । दुर्गां देवीग्ं शरणमहं प्रपद्ये सुतरसि तरसे नमः ॥ अग्ने त्वं पारया नव्यो अस्मान्थ्स्वस्तिभिरति दुर्गाणि विश्वा । पूश्च पृथ्वी बहुला न उर्वी भवा तोकाय तनयाय शंयोः ॥ विश्वानि नो दुर्गहा जातवेदः सिन्धुन्न नावा दुरिताऽतिपर्षि । अग्ने अत्रिवन्मनसा गृणानोऽस्माकं बोध्यविता तनूनाम् ॥ पृतना जितग्ं सहमानमुग्रमग्निग्ं हुवेम परमाथ्सधस्थात् । स नः पर्षदति दुर्गाणि विश्वा क्षामद्देवो अति दुरिताऽत्यग्निः ॥ प्रत्नोषि कमीड्यो अध्वरेषु सनाच्च होता नव्यश्च सत्सि । स्वाञ्चाऽग्ने तनुवं पिप्रयस्वास्मभ्यं च सौभगमायजस्व ॥ गोभिर्जुष्टमयुजो निषिक्तं तवेन्द्र विष्णो-रनुसंचरेम । नाकस्य पृष्ठमभि संवसानो वैष्णवीं लोक इह मादयन्ताम् ॥

[ॐ कात्यायनाय विद्महे कन्यकुमारि धीमहि । तन्नो दुर्गिः प्रचोदयात् ॥] ॐ शान्तिः शान्तिः शान्तिः ॥

# ॥ देवीसूक्तम् ॥

ऋग्वेद - संहिता . मण्डलम् - 10 अष्टकम् - 8 सूक्तम् - 125

ॐ ॥ अहं रुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुत विश्वदेवैः । अहं मित्रावरुणोभा बिभर्म्यहमिन्द्राग्नी अहमश्विनोभा ॥ १ ॥

अहं सोममाहनसं बिभर्म्यहं त्वष्टारमुत पूषणं भगम् । अहं दधामि द्रविणं हविष्मते सुप्राव्ये ए ३ यजमानाय सुन्वते ॥ २ ॥

अहं राष्ट्री संगमनी वसूनां चिकितुषी प्रथमा यज्ञियानाम् । तां मा देवा व्यदधुः पुरुत्रा भूरिस्थात्रां भूर्या वेशयन्तीम् ॥ ३ ॥

मया सोऽअन्नमत्ति यो विपश्यति यः प्राणिति यईं शृणोत्युक्तम् । अमन्तवोमान्त उपक्षियन्ति श्रुधिश्रुत श्रद्धिवं ते वदामि ॥ ४ ॥

अहमेव स्वयमिदं वदामि जुष्टं देवेभिरुत मानुषेभिः । यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम् ॥ ५ ॥

अहं रुद्राय धनुरातनोमि ब्रह्मद्विषे शरवेहन्त वा उं । अहं जनाय समदं कृणोम्यहं द्यावापृथिवी आविवेश ॥ ६ ॥

अहं सुवे पितरमस्य मूर्धन् मम योनिरप्स्व (अ) १न्तः समुद्रे । ततो वितिष्ठे भुवनानु विश्वो तामूं द्यां वर्ष्मणोपस्पृशामि ॥ ७ ॥

अहमेव वातऽइव प्रवाम्यारभमाणा भुवनानि विश्वा । परो दिवा परएना पृथिव्यै तावती महिना संबभूव ॥ ८ ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

# ॥ मेधासूक्तम् ॥

तैत्तिरीयारण्यकम् - 4 प्रपाठकः - 10 अनुवाकः - 41-44

ॐ यश्छन्दसामृषभो विश्वरूपः। छन्दोभ्योऽध्यमृतात्सम्बभूव। स मेन्द्रो मेधया स्पृणोतु। अमृतस्य देवधारणो भूयासम्। शरीरं मे विचर्षणम्। जिह्वा मे मधुमत्तमा। कर्णाभ्यां भूरिविश्रुवम्। ब्रह्मणः कोशोऽसि मेधया पिहितः। श्रुतं मे गोपाय॥

ॐ शान्तिः शान्तिः शान्तिः॥

ॐ मेधादेवी जुषमाणा न आगा-द्विश्वाची भद्रा सुमनस्यमाना। त्वया जुष्टा नुदमाना दुरुक्तान् बृहद्वदेम विदथे सुवीराः। त्वया जुष्ट ऋषि-र्भवति देवि त्वया ब्रह्माऽऽगतश्री-रुत त्वया। त्वया जुष्ट-श्चित्रं विन्दते वसु सानो जुषस्व द्रविणो न मेधे॥

मेधां म इन्द्रो ददातु मेधां देवी सरस्वती। मेधां मे अश्विनावुभा-वाधत्तां पुष्करस्रजा। अप्सरासु च या मेधा गन्धर्वेषु च यन्मनः। दैवी मेधा सरस्वती सा मां मेधा सुरभि-र्जुषताग् स्वाहा॥

आमां मेधा सुरभि-र्विश्वरूपा हिरण्यवर्णा जगती जगम्या। ऊर्जस्वती पयसा पिन्वमाना सा मां मेधा सुप्रतीका जुषन्ताम्॥

मयि मेधां मयि प्रजां मय्यग्निस्तेजो दधातु मयि मेधां मयि प्रजां मयीन्द्र इन्द्रियं दधातु मयि मेधां मयि प्रजां मयि सूर्यो भ्राजो दधातु॥

[ॐ हंस हंसाय विद्महे परमहंसाय धीमहि। तन्नो हंसः प्रचोदयात्॥] ॐ शान्तिः शान्तिः शान्तिः॥

# ॥ सरस्वतीसूक्तम् ॥

(ऋग्वेद संहिता)

ॐ इयमंददाद्रभसमृंणच्युतं दिवोंदासं वध्र्यश्वायं दाशुषें। या शश्वन्तमाचखादांवसं पणिं ता तें दात्राणिं तविषा संरस्वती ॥ १ ॥ इयं शुष्मेंभिर्बिसखा इंवारुजत्सानुं गिरीणां तंविषेभिंरूर्मिभिंः। पारावतघ्नीमवंसे सुवृक्तिभिंः सरंस्वती मा विंवासेमधीतिभिंः ॥ २ ॥ सरंस्वति देवनिदो नि बर्हय प्रजां विश्वंस्य बृसंयस्य मायिनंः। उत क्षितिभ्योऽवनींरविन्दो विषमेंभ्यो अस्रवो वाजिनीवति ॥ ३ ॥ प्रणों देवी सरंस्वती वाजेंभिर्वाजिनींवती। धीनामंवित्र्यंवतु ॥ ४ ॥

यस्त्वां देवि सरस्वत्युपब्रूते धनें हिते। इन्द्रं न वृंत्रतूर्यें ॥ ५ ॥ त्वं देंवि सरस्वत्यवा वाजेंषु वाजिनि। रदां पूषेवं नः सनिम् ॥ ६ ॥ उत स्या नः सरंस्वती घोरा हिरंण्यवर्तनिः। वृत्रघ्नी वंष्टि सुष्टुतिम् ॥ ७ ॥ यस्यां अनन्तो अहुंतस्त्वेषश्चंरिष्णुरंर्णवः। अमश्चरंति रोरुंवत् ॥ ८ ॥

सा नो विश्वा अति द्विषः स्वसॄंरन्या ऋतावंरी। अतन्नहेंव सूर्यः ॥ ९ ॥ उत नंः प्रिया प्रियासुं सप्तस्वंसा सुजुंष्टा। सरंस्वती स्तोम्यां भूत् ॥ १० ॥ आपप्रुषी पार्थिंवान्युरु रजों अन्तरिंक्षम्।

सरस्वती निदस्पातु ॥ ११ ॥ त्रिषधस्था सप्तधातुः पञ्च जाता वर्धयन्ती । वाजेवाजे हव्याभूत् ॥ १२ ॥

प्र या महिम्ना महिनासु चेकिते द्युम्नेभिरन्या अपसामपस्तमा । रथ इव बृहती विभ्वने कृतोपस्तुत्या चिकितुषा सरस्वती ॥ १३ ॥ सरस्वत्यभि नो नेषि वस्यो माप स्फरीः पयसा मा न आ धक् । जुषस्व नः सख्या वेश्या च मा त्वत् क्षेत्राण्यरणानि गन्म ॥ १४ ॥ प्र क्षोदसा धायसा सस्र एषा सरस्वती धरुणमायसी पूः । प्रबाबधाना रथ्येव याति विश्वा अपो महिना सिन्धुरन्याः ॥ १५ ॥ एकाचेतत् सरस्वती नदीनां शुचिर्यती गिरिभ्य आ समुद्रात् । रायश्चेतन्ती भुवनस्य भूरेर्घृतं पयो दुदुहे नाहुषाय ॥ १६ ॥

स वावृधे नर्यो योषणासु वृषा शिशुर्वृषभो यज्ञियासु । स वाजिनं मघवद्भ्यो दधाति वि सातये तन्वं मामृजीत ॥ १७ ॥ उत स्या नः सरस्वती जुषाणोप श्रवत् सुभगा यज्ञे अस्मिन् । मितज्ञुभिर्नमस्यैरियाना राया युजा चिदुत्तरा सखिभ्यः ॥ १८ ॥ इमा जुह्वाना युष्मदा नमोभिः प्रति स्तोमं सरस्वति जुषस्व । तव शर्मन् प्रियतमे दधाना उप स्थेयाम शरणं न वृक्षम् ॥ १९ ॥ अयमु ते सरस्वति वसिष्ठो द्वारावृतस्य सुभगे व्यावः । वर्ध शुभ्रे स्तुवते रासि वाजान् , यूयं पात स्वस्तिभिः सदा नः ॥ २० ॥

बृहदु गायिषे वचोऽसुर्या नदीनाम् । सरस्वतीमिन्महया सुवृक्तिभिः स्तोमैर्वसिष्ठ रोदसी ॥२१॥ उभे यत्ते महिना शुभ्रे अन्धसी अधिक्षियन्ति पूरवः । सा नो बोध्यवित्री मरुत्सखा चोद राधो मघोनाम् ॥२२॥ भद्रमिद् भद्रा कृणवत् सरस्वत्यकवारी चेतति वाजिनीवती । गृणाना जमदग्निवत् स्तुवाना च वसिष्ठवत् ॥२३॥ जनीयन्तो न्वग्रवः पुत्रीयन्तः सुदानवः । सरस्वन्तं हवामहे ॥२४॥

ये ते सरस्व ऊर्मयो मधुमन्तो घृतश्चुतः । तेभिर्नोऽविता भव ॥२५॥ पीपिवांसं सरस्वतः स्तनं यो विश्वदर्शतः । भक्षीमहि प्रजामिषम् ॥२६॥ अम्बितमे नदीतमे देवितमे सरस्वति । अप्रशस्ता इव स्मसि प्रशस्तिमम्ब नस्कृधि ॥२७॥ त्वे विश्वा सरस्वति श्रितायूंषि देव्याम् । शुनहोत्रेषु मत्स्व प्रजां देवि दिदिड्ढि नः ॥२८॥

इमा ब्रह्म सरस्वति जुषस्व वाजिनीवति । या ते मन्म गृत्समदा ऋतावरि प्रिया देवेषु जुह्वति ॥२९॥ पावका नः सरस्वती वाजेभिर्वाजिनीवती । यज्ञं वष्टु धियावसुः ॥३०॥ चोदयित्री सूनृतानां चेतन्ती सुमतीनाम् । यज्ञं दधे सरस्वती ॥३१॥ महो अर्णः सरस्वती प्र चेतयति केतुना । धियो विश्वा वि राजति ॥३२॥

सरस्वतीं देवयन्तो हवन्ते सरस्वतीमध्वरे तायमाने । सरस्वतीं सुकृतो अह्वयन्त सरस्वती दाशुषे वार्यं दात् ॥ ३३ ॥ सरस्वति या सरथं ययाथ स्वधाभिर्देवि पितृभिर्मदन्ती । आसद्यास्मिन् बर्हिषि मादयस्वानमीवा इष आ धेह्यस्मे ॥ ३४ ॥ सरस्वतीं यां पितरो हवन्ते दक्षिणा यज्ञमभिनक्षमाणाः । सहस्रार्घमिळो अत्र भागं रायस्पोषं यजमानेषु धेहि ॥ ३५ ॥ आ नो दिवो बृहतः पर्वतादा सरस्वती यजता गन्तु यज्ञम् । हवं देवी जुजुषाणा घृताची शग्मां नो वाचमुशती शृणोतु ॥ ३६ ॥

राकामहं सुहवां सुष्टुती हुवे शृणोतु नः सुभगा बोधतु त्मना । सीव्यत्वपः सूच्याच्छिद्यमानया ददातु वीरं शतदायमुक्थ्यम् ॥ ३७ ॥ यास्ते राके सुमतयः सुपेशसो याभिर्ददासि दाशुषे वसूनि । ताभिर्नो अद्य सुमना उपागहि सहस्रपोषं सुभगे रराणा ॥ ३८ ॥ सिनीवालि पृथुष्टुके या देवानामसि स्वसा । जुषस्व हव्यमाहुतं प्रजां देवि दिदिड्ढि नः ॥ ३९ ॥ या सुबाहुः स्वङ्गुरिः सुषूमा बहुसूवरी । तस्यै विश्पत्न्यै हविः सिनीवाल्यै जुहोतन ॥ ४० ॥ या गुङ्गूर्या सिनीवाली या राका या सरस्वती । इन्द्राणीमह्व ऊतये वरुणानीं स्वस्तये ॥ ४१ ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

# ॥ रात्रीसूक्तम् ॥

**ऋग्वेदसंहिता : मण्डलम् - 10 अष्टकम् - 8 सूक्तम् - 127**

ॐ रात्री व्यख्यदायती पुरुत्रा देव्य(अ)१ क्षभिः। विश्वा अधि श्रियोऽधित ॥ १ ॥ ओर्वप्रा अमर्त्या निवतो देव्यु(उ)१ द्वतः। ज्योतिषा बाधते तमः ॥ २ ॥ निरुस्वसारमस्कृतोषसं देव्यायती। अपेदु हासते तमः ॥ ३ ॥ सा नो अद्य यस्या वयं नि ते यामन्नविक्ष्महि। वृक्षेन वसतिं वयः ॥ ४ ॥ नि ग्रामासो अविक्षत नि पद्वन्तो नि पक्षिणः। नि श्येनासश्चिदर्थिनः ॥ ५ ॥ यावया वृक्यं(अं)१ वृकं यवयस्तेन-मूर्म्ये। अथा नः सुतरा भव ॥ ६ ॥ उपमा पेपिशत्तमः कृष्णं व्यक्तमस्थित। उष ऋणेव यातय ॥ ७ ॥ उप ते गा इवाकरं वृणीष्व दुहित-र्दिवः। रात्रिस्तोमं न जिग्युषे ॥ ८ ॥

आ रात्रि पार्थिवं रजः पितरः प्रायु धामभिः। दिवः सदांसि बृहती वि तिष्ठ स आत्वेषं वर्तते तमः ॥ १ ॥ ये ते रात्रि नृचक्षसो युक्तासो नवतिर्नव। अशीतिः संत्वष्टा उतो ते सप्त सप्ततीः ॥ २ ॥ रात्रीं प्रपद्ये जननीं सर्वभूतनिवेशनीम्। भद्रां भगवतीं कृष्णां विश्वस्य जगतो निशाम् ॥ ३ ॥ संवेशिनीं संयमिनीं ग्रहनक्षत्रमालिनीम्। प्रपन्नोऽहं शिवां रात्रीं भद्रे पारमशीमहि [भद्रे पारमशीमह्यो नमः] ॥ ४ ॥ स्तोष्यामि प्रयतो

देवी शरण्यां बह्वृचप्रियाम्। सहस्रसंमितां दुर्गां जातवेदसे सुनवाम सोमम् ॥ ५ ॥

शान्त्यर्थं तद् द्विजातीनामृषिभिः सोमपाश्रिताः। ऋग्वेदे त्वं संमुत्पन्नाऽरात्रीयतो नि दहाति वेदः ॥ ६ ॥ ये त्वां देवि प्र पद्यन्ति ब्राह्मणा हव्यवाहनीम्। अविद्या बहुविद्या वा सनः पर्षदति दुर्गाणि विश्वा ॥ ७ ॥ ये अग्निवर्णां शुभां सौम्यां कीर्तयिष्यन्ति ये द्विजाः। तांस्तारयति दुर्गाणि नावेव सिन्धुं दुरितात्यग्निः ॥ ८ ॥ दुर्गेषु विषमे घोरे संग्रामे रिपुसंकटे। अग्निचोरनिपातेषु दुष्टग्रहनिवारिणि ॥ ९ ॥ दुर्गेषु विषमेषु त्वं संग्रामेषु वनेषु च। मोहयित्वा प्रपद्यन्ते तेषां मे अभयं कुरु ॥ १० ॥

केशिनी सर्वभूतानां पञ्चमीति च नाम च। सा मां समा निशा देवी सर्वतः परि रक्षतु सर्वतः[परि रक्षत्वोन्नमः]॥ ११ ॥ तामग्निवर्णां तपसा ज्वलन्तीं वैरोचनीं कर्मफलेषु जुष्टाम्। दुर्गां देवीं शरणमहं प्रपद्ये सुतरसि तरसे नमः सुतरसि तरसे नमः ॥ १२ ॥ दुर्गा दुर्गेषु स्थानेषु शं नो देवीरभिष्टये। य इमं दुर्गास्तवं पुण्यं रात्रौरात्रौ सदा पठेत् ॥ १३ ॥ [रात्रिः कुशिकसोभरो रात्रिर्वा भारद्वाजी रात्रिस्तवोगायत्री।] रात्रीसूक्तं जपेन्नित्यं तत्कालमुप- पद्यते ॥ १४ ॥ उलूकयातुं शुशुलूकयातुं जहि श्वयातुमुत

कोकयातुम् । सुपर्णयातुमुत गृध्रयातुं दृषदेव प्रमृण रक्ष इन्द्र ॥ १५ ॥

पिशंगभृष्टिमम्भृणं पिशाचिमिन्द्र सं मृण । सर्वं रक्षो निबर्हय ॥ १६ ॥ हिमस्य त्वा जरायुणा शाले परि व्ययामसि । [ उत ह्रदो हि नो धियोऽग्निर्ददातु भेषजम् ] ॥ १७ ॥ शीतह्रदो हि नो धियोऽग्निर्ददातु भेषजम् । अन्तिकामग्निमजनय दूर्वाद: शशहागमत् ॥ १८ ॥ अजातपुत्रपक्षाया हृदयं मम दूयते । विपुलं वनं बह्वाकाशं चर जातवेद: कामाय ॥ १९ ॥ मां च रक्ष पुत्रांश्च शरणमभूत् तव । पिंगाक्ष लोहितग्रीव कृष्णवर्ण नमोऽस्तु ते ॥ २० ॥

अस्मान्निबर्हरस्येनां सागरस्योर्मयो यथा । इन्द्र: क्षत्रं ददातु वरुणमभि षिंचतु ॥ २१ ॥ शत्रवो निधनं यान्तु जय त्वं ब्रह्मतेजसा ॥ २२ ॥ कपिलजटी सर्वभक्षं चाग्निं प्रत्यक्ष-दैवतम् ॥ २३ ॥ वरुणं च वशाम्यग्रे मम पुत्रांश्च रक्षतु [ मम पुत्रांश्च रक्षत्वोन्नम: ] ॥ २४ ॥ साग्रं वर्षशतं जीव पिब खाद च मोदं च ॥ २५ ॥

दु:खितांश्च द्विजांश्चैव प्रजां च पशु पालय ॥ २६ ॥ यावदादित्यस्तपति यावद्भ्राजति चन्द्रमा: । यावद्वायु: प्लवायति तावज्जीव जया जय ॥ २७ ॥ येन केन प्रकारेण को हि नाम नु

जीवति । परेषामुपकारार्थं यज्जीवति स जीवति । एतां वैश्वानरीं सर्वदेवान्नमोऽस्तु ते ॥ २८ ॥ न चोरभयं न च सर्पभयं न च व्याघ्रभयं न च मृत्युभयम् । यस्यापमृत्युर्न च मृत्युः सर्वं लभते सर्वं जयते ॥ २९ ॥ ( इति परिशिष्टम् )

ॐ शान्तिः शान्तिः शान्तिः ॥

## ॥ अक्षीभ्यां ते सूक्तम् ॥

ऋग्वेदः मं-10, सू-163, ऋषिः विवृहा काश्यपः यक्ष्मनाशनम् अनुष्टुप्

अक्षीभ्यां ते नासिकाभ्यां कर्णाभ्यां छुबुकादधि ।
यक्ष्मं शीर्षण्यं मस्तिष्काज्जिह्वाया वि वृहामि ते ॥ १ ॥

ग्रीवाभ्यस्त उष्णिहाभ्यः कीकसाभ्यो अनूक्यात् ।
यक्ष्मं दोषण्य (अ)१ मंसाभ्यां बाहुभ्यां वि वृहामि ते ॥ २ ॥

आन्त्रेभ्यस्ते गुदाभ्यो वनिष्ठोर्हृदयादधि ।
यक्ष्मं मतस्नाभ्यां यक्नः प्लाशिभ्यो वि वृहामि ते ॥ ३ ॥

ऊरुभ्यां ते अष्ठीवद्भ्यां पार्ष्णिभ्यां प्रपदाभ्याम् ।
यक्ष्मं श्रोणिभ्यां भासदाद्भंससो वि वृहामि ते ॥ ४ ॥

मेहनाद्वनंकरणाल्लोमभ्यस्ते नखेभ्यः ।
यक्ष्मं सर्वस्मादात्मनस्तमिदं वि वृहामि ते ॥ ५ ॥

अङ्गादङ्गाल्लोम्नो लोम्नो जातं पर्वणि पर्वणि ।
यक्ष्मं सर्वस्मादात्मनस्तमिदं वि वृहामि ते ॥ ६ ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

# ॥ अग्निसूक्तम् ॥

ऋग्वेदसंहिता. मण्डलम् - 10, अष्टकम् - 8, सूक्तम् - 80

अग्निः सप्तिं वाजंभरं ददात्यग्निर्वीरं श्रुत्यं कर्मनिष्ठाम् ।
अग्नी रोदसी वि चरत् समञ्जन्नग्निर्नारीं वीरकुक्षिं पुरंधिम् ॥ १ ॥

अग्नेरप्नसः समिदस्तु भद्राऽग्निर्मही रोदसी आ विवेश ।
अग्निरेकं चोदयत् सम-त्स्वग्निर्वृत्राणि दयते पुरूणि ॥ २ ॥

अग्निर्ह त्यं जरतः कर्णमावाऽग्नि-रद्भ्यो निरदहज्जरूथम् ।
अग्निरत्रिं घर्म उरुष्यदन्त-रग्निर्नृमेधं प्रजयासृजत् सम् ॥ ३ ॥

अग्निर्दाद्-द्रविणं वीरपेशा अग्निर्ऋषिं यः सहस्रा सनोति ।
अग्निर्दिवि हव्यमा ततानाऽग्नेर्धामानि विभृता पुरुत्रा ॥ ४ ॥

अग्निमुक्थैर्ऋषयो वि ह्वयन्तेऽग्निं नरो यामनि बाधितासः ।
अग्निं वयो अन्तरिक्षे पतन्तोऽग्निः सहस्रा परि याति गोनाम् ॥ ५ ॥

अग्निं विश ईळते मानुषीर्या अग्निं मनुषो नहुषो वि जाताः ।
अग्निर्गान्धर्वीं पथ्यामृतस्याऽग्नेर्गव्यूतिर्घृत आ निषत्ता ॥ ६ ॥

अग्नये ब्रह्म ऋभवस्ततक्षु-रग्निं महामवोचामा सुवृक्तिम् ।
अग्ने प्राव जरितारं यविष्ठाऽग्ने महि द्रविणमा यजस्व ॥ ७ ॥

ॐ शान्तिः शान्तिः शान्तिः ॥



# ॥ आयुष्यसूक्तम् ॥

यो ब्रह्मा ब्रह्मण उंज्जहार प्राणैः शिरः कृत्तिवासाँः पिनाकी ।
ईशानो देवः स न आयुंर्दधातु तस्मै जुहोमि हविषां घृतेन ॥ १ ॥

विभ्राजमानः सरिरंस्य मध्या-द्रोचमानो घर्मरुचिंर्य आगात् ।
स मृत्युपाशानपनुंद्य घोरानिहायुषेणो घृतमंत्तु देवः ॥ २ ॥

ब्रह्मज्योति-र्ब्रह्म-पत्नीषु गर्भं यमादधात् पुरुरूपं जयन्तम् ।
सुवर्णरंभग्रह-मंर्कमर्च्यं तमायुषे वर्धयामों घृतेन ॥ ३ ॥

श्रियं लक्ष्मी-मौबला-मंबिकां गां षष्ठीं च यामिन्द्रसेनेँत्युदाहुः ।
तां विद्यां ब्रह्मयोनिगं सरूपामिहायुषे तर्पयामों घृतेन ॥ ४ ॥

दाक्षायण्यः सर्वयोन्यंः स योन्यः सहस्रशो विश्वरूपां विरूपाः ।
ससूनवः सपतयंः सयूथ्या आयुषेणो घृतमिदं जुषन्ताम् ॥ ५ ॥

दिव्या गणा बहुरूपाँः पुराणा आयुश्छिदो नः प्रमथ्नंन्तु वीरान् ।
तेभ्यो जुहोमि बहुधां घृतेन मा नः प्रजागं रीरिषो मोंत वीरान् ॥ ६ ॥

एकः पुरस्तात् य इदं बभूव यतो बभूव भुवनंस्य गोपाः ।
यमप्येति भुवनगं साँपराये स नो हविर्घृत-मिहायुषेँत्तु देवः ॥ ७ ॥

वसून् रुद्रां-नादित्यान् मरुतोंऽथ साध्यान् ऋभून् यक्षान्
गन्धर्वागश्च पितृगश्च विश्वान् । भृगून् सर्पागश्चांगिरसोंऽथ सर्वान्
घृतगं हुत्वा स्वायुष्या महयांम शश्वत् ॥ ८ ॥

विष्णो त्वं नो अन्तंमश्शर्मयच्छ सहन्त्य । प्रतेधारां मधुश्चुत
उथ्सं दुहते अक्षिंतम् ॥ ॐ शान्तिः शान्तिः शान्तिंः ॥

## ॥ आ नो भद्राः सूक्तम् ॥

ऋग्वेदसंहिता. मण्डलम् - 1, अष्टकम् 1, सूक्तम् - 89

आ नो भद्राः क्रतवो यन्तु विश्वतोऽदब्धासो अपरीतास उद्भिदः।
देवा नो यथा सदमिद् वृधे असन्नप्रायुवो रक्षितारो दिवेदिवे ॥ १ ॥

देवानां भद्रा सुमतिरृजूयतां देवानां रातिरभि नो नि वर्तताम्।
देवानां सख्यमुप सेदिमा वयं देवा न आयुः प्रतिरन्तु जीवसे ॥ २ ॥

तान् पूर्वया निविदा हूमहे वयं भगं मित्रमदितिं दक्षमस्रिधम्।
अर्यमणं वरुणं सोममश्विना सरस्वती नः सुभगा मयस्करत् ॥ ३ ॥

तन्नो वातो मयोभु वातु भेषजं तन्माता पृथिवी तत् पिता द्यौः।
तद् ग्रावाणः सोमसुतो मयोभुवस्तदश्विना शृणुतं धिष्ण्या युवम् ॥ ४ ॥

तमीशानं जगतस्तस्थुषस्पतिं धियंजिन्वमवसे हूमहे वयम्।
पूषा नो यथा वेदसामसद् वृधे रक्षिता पायुरदब्धः स्वस्तये ॥ ५ ॥

स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः। स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥ ६ ॥

पृषदश्वा मरुतः पृश्निमातरः शुभं यावानो विदथेषु जग्मयः।
अग्निजिह्वा मनवः सूरचक्षसो विश्वे नो देवा अवसा गमन्निह ॥ ७ ॥

भद्रं कर्णेभिः शृणुयाम देवाः भद्रं पश्येमाक्षभिर्यजत्राः।
स्थिरैरङ्गैस्तुष्टुवांसस्तनूभि-र्व्यशेम देवहितं यदायुः ॥ ८ ॥

शतमिन्नु शरदो अन्ति देवा यत्रा नश्चक्रा जरसं तनूनाम् ।
पुत्रासो यत्र पितरो भवन्ति मा नो मध्यारीरिषतायुर्गन्तोः ॥ ९ ॥

अदितिर्द्यौरदितिरन्तरिक्ष-मदितिर्माता स पिता स पुत्रः । विश्वे देवा अदितिः पञ्च जना अदितिर्जातमदितिर्जनित्वम् ॥ १० ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

## ॥ नवग्रहसूक्तम् ॥

ॐ शुक्लांबरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत्सर्व विघ्नोपशान्तये ॥

ॐ भूः ॐ भुवः ओग्ंसुवः ॐ महः ॐ जनः ॐ तपः ओग्ंसत्यम् । ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् । ओमापो ज्योतीरसोऽमृतं ब्रह्म भूर्भुवस्सुवरोम् ॥

ममोपात्तसमस्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं आदित्यादि-नवग्रहदेवता-प्रसादसिद्ध्यर्थं आदित्यादि-नवग्रहनमस्कारान् करिष्ये ॥

ॐ आसत्येन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यंच । हिरण्ययेन सविता रथेनाऽऽदेवो याति भुवना विपश्यन् । अग्निं दूतं वृणीमहे होतारं विश्ववेदसम् । अस्य यज्ञस्य सुक्रतुम् । येषामीशे पशुपतिः पशूनां चतुष्पदामुत च द्विपदाम् । निष्क्रीतोऽयं यज्ञियं भागमेतु रायस्पोषा यजमानस्य सन्तु ॥

ॐ अधिदेवता-प्रत्यधिदेवता-सहिताय आदित्याय नमः ॥ १ ॥

ॐ आप्यायस्व समेतु ते विश्वतस्सोम वृष्णियम् । भवा वाजस्य संगथे । अप्सुमे सोमो अब्रवीदन्तर्विश्वानि भेषजा । अग्निञ्च विश्वशंभुवमापश्च विश्वभेषजीः । गौरी मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी । अष्टापदी नवपदी बभूवुषी सहस्राक्षरा परमे व्योमन् ॥

ॐ अधिदेवता-प्रत्यधिदेवता-सहिताय सोमाय नमः ॥ २ ॥

ॐ अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या अयम् । अपागंरेतागंसि जिन्वति । स्योना पृथिवि भवाऽनृक्षरा निवेशनी । यच्छानश्शर्म सप्रथाः । क्षेत्रस्य पतिना वयगंहिते नेव जयामसि । गामश्वं पोषयित्न्वा स नो मृडातीदृशे ॥

ॐ अधिदेवता-प्रत्यधिदेवता-सहिताय अङ्गारकाय नमः ॥ ३ ॥

ॐ उद्बुध्यस्वाग्ने प्रतिजागृह्येनमिष्टापूर्ते सगंसृजेथामयञ्च । पुनः कृण्वग्गस्त्वा पितरं युवानमन्वातागंसीत्त्वयि तन्तुमेतम् । इदं विष्णु-र्विचक्रमे त्रेधा निदधे पदम् । समूढमस्यपागं सुरे । विष्णो रराटमसि विष्णोः पृष्ठमसि विष्णोश्श्नप्त्रेस्थो विष्णोस्स्यूरसि विष्णोर्ध्रुवमसि वैष्णवमसि विष्णवे त्वा ॥

ॐ अधिदेवता-प्रत्यधिदेवता-सहिताय बुधाय नमः ॥ ४ ॥

ॐ बृहस्पते अतियदर्यो अर्हाद्द्युमद्विभाति क्रतुमज्जनेषु । यद्दीदयच्चवसर्तप्रजात तदस्मासु द्रविणन्धेहि चित्रम् । इन्द्रमरुत्व

इह पांहि सोमं यथां शार्याते अपिंबस्सुतस्यं । तव प्रणींती तवं शूर शर्मन्नाविंवासन्ति कवयंस्सुयज्ञाः । ब्रह्मंजज्ञानं प्रंथमं पुरस्ताद्विसींमतस्सुरुचों वेन आंवः । सबुध्नियां उपमा अंस्य विष्ठास्सतश्च योनिमसंतश्च विवंः ॥

ॐ अधिदेवता-प्रत्यधिदेवता-सहिताय बृहस्पतंये नमंः ॥ ५ ॥

ॐ प्रवंश्शुक्रायं भानवें भरध्वम् । हव्यं मतिं चाग्नये सुपूंतम् । यो दैव्यांनि मानुंषा जनूंषिं । अन्तर्विश्वांनि विद्म ना जिगांति । इन्द्राणीमासु नारिंषु सुपत्नींमहमंश्रवम् । न ह्यंस्या अपरंचन जरसा मरंते पतिंः । इन्द्रं वो विश्वतस्परि हवांमहे जनेंभ्यः । अस्माकंमस्तु केवंलः ॥

ॐ अधिदेवता-प्रत्यधिदेवता-सहिताय शुक्रांय नमंः ॥ ६ ॥

ॐ शन्नों देवीरभिष्टंय आपों भवन्तु पीतयें । शंयोरभिस्रंवन्तु नः । प्रजांपते न त्वदेतान्यन्यो विश्वां जातानि परिता बंभूव । यत्कांमास्ते जुहुमस्तन्नों अस्तु वयग्ग्स्यांम पतंयो रयीणाम् । इमं यंमप्रस्तरमाहि सीदाऽङ्गिंरोभिः पितृभिंस्संविदानः । आत्वा मन्त्रांः कविशस्ता वंहन्त्वेना रांजन्, हविषां मादयस्व ॥

ॐ अधिदेवता-प्रत्यधिदेवता-सहिताय शनैश्चंराय नमंः ॥ ७ ॥

ॐ कयां नश्चित्र आभुंवदूती सदावृंधस्सखां । कया शचिंष्ठया वृता । आऽयज्ञैः पृश्निंरक्रमीदसंनन्मातरं पुनंः । पितरंञ्च

प्रयन्त्सुवः । यत्ते देवी निरृतिराबबन्ध दाम ग्रीवास्वविचर्त्यम् । इदन्ते तद्विष्याम्यायुषो न मध्यादथाजीवः पितुमद्धि प्रमुक्तः ॥
ॐ अधिदेवता-प्रत्यधिदेवता-सहिताय राहवे नमः ॥ ८ ॥

ॐ केतुङ्कृण्वन्नकेतवे पेशो मर्या अपेशसे । समुषद्भिरजायथाः । ब्रह्मा देवानां पदवीः कवीनामृषिर्विप्राणां महिषो मृगाणाम् । श्येनो गृध्राणाग्ग्स्वधितिर्वनानाग्ं सोमः पवित्रमत्येति रेभन् । सचित्र चित्रं चितयन्तमस्मे चित्रक्षत्र चित्रतमं वयोधाम् । चन्द्रं रयिं पुरुवीरं बृहन्तं चन्द्रचन्द्राभिर्गृणते युवस्व ॥
ॐ अधिदेवता-प्रत्यधिदेवता-सहितेभ्यः केतुभ्यो नमः ॥ ९ ॥

॥ ॐ आदित्यादि नवग्रह देवताभ्यो नमो नमः ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

## ॥ नक्षत्रसूक्तम् ॥

**तै. ब्रा : अष्टकम् - 3 प्रश्नः - 1 तै. संहिता : कां - 3 प्रपाठकः - 5 अनु - 1**

ॐ ॥ अग्निर्नः पातु कृत्तिकाः । नक्षत्रं देवमिन्द्रियम् । इदमासां विचक्षणम् । हविरासं जुहोतन । यस्य भान्ति रश्मयो यस्य केतवः । यस्येमा विश्वा भुवनानि सर्वा । स कृत्तिकाभि-रभिसंवसानः । अग्निर्नो देवस्सुविते दधातु ॥ १ ॥

प्रजापते रोहिणीवेतु पत्नी । विश्वरूपा बृहती चित्रभानुः । सा नो यज्ञस्य सुविते दधातु । यथा जीवेम शरदस्सवीराः । रोहिणी देव्युदगात्पुरस्तात् । विश्वा रूपाणि प्रतिमोदमाना । प्रजापतिग्ं

हविषां वर्धयंन्ती । प्रिया देवाना-मुपंयातु यज्ञम् ॥ २ ॥

सोमो राजां मृगशीर्‌षेण आगन्न् । शिवंनक्षंत्त्रं प्रियमंस्य धामं । आप्यायंमानो बहुधा जनेंषु । रेतंः प्रजां यजंमाने दधातु । यत्ते नक्षंत्त्रं मृगशीर्‌षमस्तिं । प्रियगं राजन् प्रियतंमं प्रियाणाँम् । तस्मैं ते सोम हविषां विधेम । शन्नं एधि द्विपदे शं चतुंष्पदे ॥ ३ ॥

आर्द्रयां रुद्रः प्रथंमा न एति । श्रेष्ठों देवाना पतिंरघ्नियानाँम् । नक्षंत्त्रमस्य हविषां विधेम । मा नंः प्रजागं रींरिषन्मोत वीरान् । हेती रुद्रस्य परिंणो वृणक्तु । आर्द्रानक्षंत्त्रं जुषतागं हविर्नः । प्रमुञ्चमांनौ दुरितानि विश्वाँ । अपाघशगंसन्नुदतामरांतिम् ॥ ४ ॥

पुनंर्नो देव्यदिंतिस्स्पृणोतु । पुनंर्वसू नः पुनरेताँ यज्ञम् । पुनंर्नो देवा अभियंन्तु सर्वे" । पुनंः पुनर्वो हविषां यजामः । एवा न देव्यदिंतिरनर्वा । विश्वंस्य भर्त्री जगंतः प्रतिष्ठा । पुनंर्वसू हविषां वर्धयंन्ती । प्रियं देवाना-मप्येंतु पाथंः ॥ ५ ॥

बृहस्पतिंः प्रथमं जायंमानः । तिष्यं नक्षंत्त्रमभि सम्बंभूव । श्रेष्ठों देवानां पृतंनासुजिष्णुः । दिशोऽनु सर्वा अभंयन्नो अस्तु । तिष्यंः पुरस्तांदुत मंध्यतो नंः । बृहस्पतिंर्नः परिंपातु पश्चात् । बाधेंतान्द्वेषो अभंयं कृणुताम् । सुवीर्यस्य पतंयस्स्याम ॥ ६ ॥

इदगं सर्पेभ्यों हविरंस्तु जुष्टम्ँ । आश्रेषा येषांमनुयन्ति चेतंः । ये अन्तरिंक्षं पृथिवीं क्षियन्तिं । ते नंस्सर्पासो हवमागंमिष्ठाः ।

ये रोचने सूर्यस्यापि सर्पाः। ये दिवं देवीमनुसञ्चरन्ति। येषामाश्रेषा अनुयन्ति कामम्। तेभ्यस्सर्पेभ्यो मधुमज्जुहोमि ॥ ७॥

उपहूताः पितरो ये मघासु। मनोजवसस्सुकृतस्सुकृत्याः। ते नो नक्षत्रे हवमागमिष्ठाः। स्वधाभिर्यज्ञं प्रयतं जुषन्ताम्। ये अग्निदग्धा येऽनग्निदग्धाः। येऽमुल्लोकं पितरः, क्षियन्ति। यागश्च विद्मयागं उ च न प्रविद्म। मघासु यज्ञगं सुकृतं जुषन्ताम् ॥ ८॥

गवां पतिः फल्गुनीनामसि त्वम्। तदर्यमन्वरुणमित्र चारु। तं त्वा वयगं सनितारगं सनीनाम्। जीवा जीवन्तमुप संविशेम। येनेमा विश्वा भुवनानि सञ्जिता। यस्य देवा अनुसंयन्ति चेतः। अर्यमा राजाऽजरस्तु विष्मान्। फल्गुनीनामृषभो रोरवीति ॥ ९॥

श्रेष्ठो देवानां भगवो भगासि। तत्त्वा विदुः फल्गुनीस्तस्य वित्तात्। अस्मभ्यं क्षत्रमजरगं सुवीर्यम्। गोमदश्ववदुपसन्नुदेह। भगोह दाता भग इत्प्रदाता। भगो देवीः फल्गुनीराविवेश। भगस्येत्तं प्रसवं गमेम। यत्र देवैस्सधमादं मदेम ॥ १०॥

आयातु देवस्सवितोपयातु। हिरण्ययेन सुवृता रथेन। वहन्, हस्तगं सुभगं विद्मनापसम्। प्रयच्छन्तं पपुरिं पुण्यमच्छ। हस्तः प्रयच्छ त्वमृतं वसीयः। दक्षिणेन प्रतिगृभ्णीम एनत्। दाता-रमद्य सविता विदेय। यो नो हस्ताय प्रसुवाति यज्ञम् ॥ ११॥

त्वष्टा नक्षत्रमभ्येति चित्राम्। सुभगं ससंयुवतिगं राचमानाम्। निवेशयन्नमृतान्मर्त्यागंश्च। रूपाणि पिगंशन्भुवनानि विश्वा।

तन्नस्त्वष्टा तदु चित्रा विचंष्टाम् । तन्नक्षत्रं भूरिदा अंस्तु मह्यम् । तन्नः प्रजां वीरवंतीग् सनोतु । गोभिर्नो अश्वैस्समंनक्तु यज्ञम् ॥ १२ ॥

वायुर्नक्षत्रमभ्येति निष्ट्याम् । तिग्मशृंगो वृषभो रोरुवाणः । समीरयन्भुवना मातरिश्वा । अप द्वेषाग्ंसि नुदतामरातीः । तन्नो वायुस्तदु निष्ट्या शृणोतु । तन्नक्षत्रं भूरिदा अंस्तु मह्यम् । तन्नो देवासो अनुंजानन्तु कामम् । यथा तरेम दुरितानि विश्वा ॥ १३ ॥

दूरमस्मच्छत्रवो यन्तु भीताः । तदिन्द्राग्नी कृणुतां तद्विशाखे । तन्नो देवा अनुंमदन्तु यज्ञम् । पश्चात् पुरस्तादभंयन्नो अस्तु । नक्षत्राणामधिंपत्नी विशाखे । श्रेष्ठाविन्द्राग्नी भुवनस्य गोपौ । विषूचश्शत्रूनपबाधंमानौ । अपक्षुधंन्नुदतामरातिम् ॥ १४ ॥

पूर्णा पश्चादुत पूर्णा पुरस्तात् । उन्मध्यतः पौर्णमासी जिंगाय । तस्यां देवा अधिसंवसन्तः । उत्तमे नाक इह मांदयन्ताम् । पृथ्वी सुवर्चा युवतिः सजोषाः । पौर्णमास्युदगाच्छोभंमाना । आप्यायंयन्ती दुरितानि विश्वा । उरुं दुहां यजमानाय यज्ञम् ॥ १५ ॥

ऋद्ध्यास्म हव्यैर्नमंसोपसद्यं । मित्रं देवं मित्रधेयं नो अस्तु । अनूराधान्, हविषां वर्धयंन्तः । शतं जीवेम शरदः सवीराः । चित्रं नक्षत्रमुदंगात्पुरस्तात् । अनूराधा स इति यद्वदन्ति । तन्मित्र एति पथिभिर्देवयानैः । हिरण्ययै-र्वितंतै-रन्तरिंक्षे ॥ १६ ॥

इन्द्रो ज्येष्ठामनु नक्षत्रमेति । यस्मिन् वृत्रं वृत्र तूर्ये ततार ।

तस्मिंन्वय-ममृतं दुहांनाः । क्षुधन्तरेम दुरिंतिं दुरिंष्टिम् । पुरन्दरायं वृषभायं धृष्णवें । अषांढाय सहंमानाय मीढुषें । इन्द्रांय ज्येष्ठा मधुंमद्दुहांना । उरुं कृणोतु यजंमानाय लोकम् ॥ १७ ॥

मूलं प्रजां वीरवंतीं विदेय । पराँच्येतु निर्ऋतिः पराचा । गोभिर्नक्षंत्त्रं पशुभिस्समंक्तम् । अहंर्भूयाद्यजंमानाय मह्यम् । अहंर्नो अद्य सुंविते दंधातु । मूलं नक्षंत्त्रमिति यद्वदंन्ति । परांचीं वाचा निर्ऋतिं नुदामि । शिवं प्रजायैं शिवमंस्तु मह्यम् ॥ १८ ॥

या दिव्या आपः पयंसा सम्बभूवुः । या अन्तरिंक्ष उत पार्थिवीर्याः । यासां-मषाढा अंनुयन्ति कामम् । ता न आपः शग्ग् स्योना भंवन्तु । याश्च कूप्या याश्चं नाद्याँस्समुद्रियाः । याश्चं वैशन्तीरुत प्रांसचीर्याः । यासांमषाढा मधुं भक्षयंन्ति । ता न आपः शग्ग् स्योना भंवन्तु ॥ १९ ॥

तन्नो विश्वे उपं शृण्वन्तु देवाः । तदंषाढा अभिसंयंन्तु यज्ञम् । तन्नक्षंत्त्रं प्रथतां पशुभ्यः । कृषिर्वृष्टि-र्यजंमानाय कल्पताम् । शुभ्राः कन्यां युवतयंस्सुपेशंसः । कर्मकृतं-स्सुकृतों वीर्यावतीः । विश्वाँन् देवान्, हविषां वर्धयंन्तीः । अषाढाः काममुपंयान्तु यज्ञम् ॥ २० ॥

यस्मिन्ब्रह्माभ्यजंयत्सर्वमेतत् । अमुञ्चं लोक-मिदमूंच सर्वम् । तन्नो नक्षंत्र-मभिजिद्विजित्यं । श्रियं दधात्वहृंणीयमानम् । उभौ लोकौ ब्रह्मंणा सञ्जिंतेमौ । तन्नो नक्षंत्त्रमभिजिद्विचंष्टाम् । तस्मिंन्वयं

पृतना॒स्सञ्ज॑येम । तन्नो॑ दे॒वासो॒ अनु॑जानन्तु॒ काम॑म्ँ ॥ २१ ॥

शृ॒ण्वन्ति॑ श्रो॒णा-म॒मृत॑स्य गो॒पाम् । पुण्या॑मस्या॒ उप॑शृणोमि॒ वाच॑म्ँ । म॒हीं दे॒वीं विष्णु॑पत्नी-मजू॒र्याम् । प्र॒तीचीं॑ मेना॑ग्ं ह॒विषा॑ यजामः । त्रे॒धा विष्णु॑-रुरुगा॒यो विच॑क्रमे । म॒हीं दिवं॑ पृथि॒वी-म॒न्तरि॑क्षम् । तच्छ्रो॒णैति॒श्रव॑-इ॒च्छमा॑ना । पुण्य॒ग्ग्॒ श्लोकं॑ यज॑मानाय कृण्व॒ती ॥ २२ ॥

अ॒ष्टौ दे॒वा वस॑वस्सो॒म्यास॑ः । चत॑स्रो दे॒वी-र॒जरा॒ः श्रवि॑ष्ठाः । ते य॒ज्ञं पा॑न्तु॒ रज॑सः पु॒रस्ता॑त् । सं॒व॒त्स॒रीण॑-म॒मृत॒ग्ग्॒ स्व॒स्ति । य॒ज्ञं न॑ः पान्तु॒ वस॑वः पु॒रस्ता॑त् । द॒क्षि॒ण॒तो॑ऽभियन्तु॒ श्रवि॑ष्ठाः । पुण्य॒न्नक्ष॑त्रम॒भि संवि॑शाम । मा नो॒ अरा॑ति-र॒घश॒ग्ं॒साऽग॑न्न् ॥ २३ ॥

क्ष॒त्त्रस्य॒ राजा॒ वरु॑णोऽधिरा॒जः । नक्ष॑त्राणाग्ं श॒तभि॑ष॒ग्वसि॑ष्ठः । तौ दे॒वेभ्य॑ः कृणुतो दी॒र्घमायु॑ः । श॒तग्ं स॒हस्रा॑ भेष॒जानि॑ धत्तः । य॒ज्ञन्नो॒ राजा॒ वरु॑ण॒ उप॑यातु । तन्नो॒ विश्वे॑ अ॒भि सय॑न्तु दे॒वाः । तन्नो॒ नक्ष॑त्रग्ं श॒तभि॑षग्जुषा॒णम् । दी॒र्घमायु॒ः प्रति॑रद्भेष॒जानि॑ ॥ २४ ॥

अ॒ज एक॑पा॒दुद॑गात्पु॒रस्ता॑त् । विश्वा॑ भू॒तानि॑ प्रति॒ मोद॑मानः । तस्य॑ दे॒वाः प्र॑स॒वं य॑न्ति॒ सर्वे॑ । प्रो॒ष्ठ॒प॒दासो॑ अ॒मृत॑स्य गो॒पाः । वि॒भ्राज॑मानस्समिधा॒न उ॒ग्रः । आऽन्तरि॑क्षमरुह॒द॒ग॒न्द्याम् । तग्ं सूर्यं॑ दे॒व-म॒जमेक॑पादम् । प्रो॒ष्ठ॒प॒दासो॒ अनु॑यन्ति॒ सर्वे॑ ॥ २५ ॥

अहि॑र्बु॒ध्नियः॒ प्रथ॑मान एति । श्रेष्ठो॑ दे॒वाना॑मु॒त मानु॑षाणाम् ।

तं ब्राँह्मणास्सोमपास्सोम्यासः । प्रोष्ठपदासोंअभिरंक्षन्ति सर्वे" । चत्वार एकंमभि कर्म देवाः । प्रोष्ठपदा स इति यान्, वदंन्ति । ते बुध्नियं परिषद्यग्ं स्तुवन्तः । अहिग्ं रक्षन्ति नमंसोपसद्यं ॥ २६ ॥

पूषा रेवत्यन्वेंति पन्थाँम् । पुष्टिपती पशुपा वाजंबस्त्यौ । इमानि हव्या प्रयंता जुषाणा । सुगैर्नो यानैरुपंयातां यज्ञम् । क्षुद्रान् पशून्रंक्षतु रेवती नः । गावों नो अश्वाग्ं अन्वेंतु पूषा । अन्नग्ं रक्षंन्तौ बहुधा विरूपम् । वाजग्ं सनुतां यजंमानाय यज्ञम् ॥ २७ ॥

तदश्विनांवश्वयुजोपंयाताम् । शुभङ्गमिंष्ठौ सुयमेंभिरश्वैः । स्वं नक्षंत्रग्ं हविषा यजंन्तौ । मध्वासम्पृंक्तौ यजुंषा समंक्तौ । यौ देवानाँ भिषजौ" हव्यवाहौ । विश्वंस्य दूता-वमृतंस्य गोपौ। तौ नक्षंत्रं जुजुषाणोपंयाताम् । नमोऽश्विभ्याँ कृणुमोऽश्वयुग्भ्याँम् ॥ २८ ॥

अपं पाप्मानं भरंणीर्भरन्तु । तद्यमो राजा भगंवान्, विचंष्टाम् । लोकस्य राजां महतो महान्, हि । सुगं नः पन्थामभंयं कृणोतु । यस्मिन्नक्षंत्रे यम एति राजाँ। यस्मिंन्नेन-मभ्यषिंचन्त देवाः । तदंस्य चित्रग्ं हविषां यजाम । अपं पाप्मानं भरंणीर्भरन्तु ॥ २९ ॥

निवेशंनी सङ्गमंनी वसूंनां विश्वां रूपाणि वसूँन्यावेशयंन्ती । सहस्र-पोषग्ं सुभगा ररांणा सा न आगन्वर्चसा संविदाना । यत्ते देवा अदंधुर्भागधेयममांवास्ये संवसंन्तो महित्वा । सा नों यज्ञं पिंपृहि विश्ववारे रयिन्नों धेहि सुभगे सुवीरम् ॥ ३० ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

# ॥ नासदीय सूक्तम् ॥

**ऋग्वेद संहिता.सूक्तम्.129,मण्डलम्.10,अष्टकम्.8,अ.7,अनु.11,वर्गम्.17,ऋक्.7**

**ऋषिः प्रजापतिः परमेष्ठी । भाववृत्तम् । त्रिष्टुप् ।**

नासदासीन्नो सदासीत् तदानीं नासीद्रजो नो व्योमा परो यत् ।
किमावरीवः कुह कस्य शर्मन्नम्भः किमासीद्गहनं गभीरम् ॥ १ ॥

न मृत्युरासीदमृतं न तर्हि न रात्र्या अह्न आसीत् प्रकेतः ।
आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किं चनास ॥ २ ॥

तम आसीत् तमसा गूळ्हमग्रेऽप्रकेतं सलिलं सर्वमा इदम् ।
तुच्छ्येनाभ्वपिहितं यदासीत् तपसस्तन्महिनाजायतैकम् ॥ ३ ॥

कामस्तदग्रे समवर्तताधि मनसो रेतः प्रथमं यदासीत् । सतो
बन्धुमसति निरविन्दन् हृदि प्रतीष्या कवयो मनीषा ॥ ४ ॥

तिरश्चीनो विततो रश्मिरेषा मधः स्विदासी३दुपरि
स्विदासी३त् । रेतोधा आसन् महिमान आसन्त्स्वधा अवस्तात्
प्रयतिः परस्तात् ॥ ५ ॥

को अद्धा वेद क इह प्रवोचत् कुत आजाता कुत इयं विसृष्टिः ।
अर्वाग्देवा अस्य विसर्जनेनाऽथा को वेद यत आबभूव ॥ ६ ॥

इयं विसृष्टिर्यत आबभूव यदि वा दधे यदि वा न । यो
अस्याध्यक्षः परमे व्योमन्त्सो अङ्ग वेद यदि वा न वेद ॥ ७ ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

# ॥ पुण्याहवाचनम् ॥

**तै. संहिता - काण्डम् - 5, प्रपाठक : 6, अनु - 1**
**तै. ब्राह्मणम् - अष्टकम् - 1, प्रश्नः 4, अनु - 8**

ॐ ॥ हिरण्यवर्णाः शुचयः पावका यासु जातः कश्यपो यास्विन्द्रः। अग्निं या गर्भं दधिरे विरूपास्तान आपश्शगग् स्योना भवन्तु ॥ यासागं राजा वरुणो याति मध्ये सत्यानृते अवपश्यं जनानाम्। मधुश्चुतश्शुचयो याः पावकास्ता न आपश्शगग् स्योना भवन्तु ॥ यासाँ देवा दिवि कृण्वन्ति भक्षं या अन्तरिक्षे बहुधा भवन्ति। याः पृथिवीं पयसोन्दन्ति शुक्रास्ता न आपश्शगग् स्योना भवन्तु ॥ शिवेन मा चक्षुषा पश्यतापश्शिवया तनुवोप स्पृशत त्वचं मे । सर्वागं अग्नीगं रप्सुषदो हुवे वो मयि वर्चो बलमोजो निधत्त॥१॥ पवमानस्सुवर्जनः। पवित्रेण विचर्षणिः। यः पोता स पुनातु मा। पुनन्तु मा देवजनाः। पुनन्तु मनवो धिया। पुनन्तु विश्व आयवः । जातवेदः पवित्रवत् । पवित्रेण पुनाहि मा । शुक्रेण देवदीद्यत् । अग्ने क्रत्वा क्रतूगं रनु । यत्ते पवित्रमर्चिषि । अग्ने विततमन्तरा । ब्रह्म तेन पुनीमहे । उभाभ्याँ देवसवितः । पवित्रेण सवेन च । इदं ब्रह्म पुनीमहे । वैश्वदेवी पुनती देव्यागात् । यस्यै बह्वीस्तनुवो वीतपृष्ठाः । तया मदन्तः सधमाद्येषु । वयगग् स्याम पतयो रयीणाम्। वैश्वानरो रश्मिभि-र्मा पुनातु। वातः प्राणेनेषिरो

मयो भूः। द्यावापृथिवी पयसा पयोभिः। ऋतावरी यज्ञिये मा पुनीताम्।

बृहद्भिः सवितस्तृभिः। वर्षिष्ठै-र्देवमन्मभिः। अग्ने दक्षैः पुनाहि मा। येन देवा अपुनत। येनापो दिव्यंकशः। तेन दिव्येन ब्रह्मणा। इदं ब्रह्म पुनीमहे। यः पावमानीरध्येति। ऋषिभि-स्संभृतग् रसम्। सर्वग् स पूतमश्नाति। स्वदितं मातरिश्वना। पावमानीर्यो अध्येति। ऋषिभिस्संभृतग् रसम्। तस्मै सरस्वती दुहे। क्षीरग् सर्पि-र्मधूदकम्॥ पावमानी-स्स्वस्त्ययनीः। सुदुघाहि पयस्वतीः। ऋषिभिस्संभृतो रसः। ब्राह्मणेष्वमृतग् हितम्। पावमानीर्दिशन्तु नः। इमं लोकमथो अमुम्। कामान्थ्समर्धयन्तु नः। देवी-र्देवैः समाभृताः। पावमानीस्स्वस्त्ययनीः। सुदुघाहि घृतश्चुतः। ऋषिभिः संभृतो रसः। ब्राह्मणेष्वमृतग् हितम्। येन देवाः पवित्रेण। आत्मानं पुनते सदा। तेन सहस्रधारेण। पावमान्यः पुनन्तु मा। प्राजापत्यं पवित्रम्। शतोद्यामग् हिरण्मयम्। तेन ब्रह्म विदो वयम्। पूतं ब्रह्म पुनीमहे। इन्द्रस्सुनीती सहमा पुनातु। सोमस्स्वस्त्या वरुणस्समीच्या। यमो राजा प्रमृणाभिः पुनातु मा। जातवेदा मोर्जयन्त्या पुनातु। भूर्भुवस्सुवः॥ २॥

ॐ तच्छं योरावृणीमहे। गातुं यज्ञाय। गातुं यज्ञपतये। दैवी-स्स्वस्तिरस्तु नः। स्वस्तिर्मानुषेभ्यः। ऊर्ध्वं जिगातु भेषजम्। शन्नो अस्तु द्विपदे। शं चतुष्पदे। ॐ शान्ति-श्शान्ति-श्शान्तिः॥

# ॥ अथर्वण वेदमन्त्राः ॥

## ॥ रोग निवारणसूक्तम् ॥

( काण्डम्. 1 प्रपाठकः 1 अनुवाकः 3 सूक्तम्. 12 )

जरायुजः प्रथम उस्रियो वृषा वातभ्रजा स्तनयन्नेति वृष्ट्या । स नो मृडाति तन्व ऋजुगो रुजन् य एकमोजस्त्रेधा विचक्रमे ॥ १ ॥

अङ्गे अङ्गे शोचिषा शिश्रियाणं नमस्यन्तस्त्वा हविषा विधेम । अङ्कान्त्समङ्कान् हविषा विधेम यो अग्रभीत् पर्वास्या ग्रभीता ॥ २ ॥

मुञ्च शीर्षक्त्या उत कास एनं परुष्परुराविवेशा यो अस्य । यो अभ्रजा वातजा यश्च शुष्मो वनस्पतीन्त्सचतां पर्वतांश्च ॥ ३ ॥

शं मे परस्मै गात्राय शमस्त्ववराय मे । शं मे चतुर्भ्यो अङ्गेभ्यः शमस्तु तन्वे३ मम ॥ ४ ॥

---

यस्मात्सर्वमिदं प्रपञ्चरचितं मायाजगज्जायते
यस्मिंस्तिष्ठति याति चान्तसमये कल्पानुकल्पे पुनः ।
यं ध्यात्वा मुनयः प्रपञ्चरहितं विन्दन्ति मोक्षं ध्रुवं
तं वन्दे पुरुषोत्तमाख्यममलं नित्यं विभुं निश्चलम् ॥

ब्रह्मपुराणम् - अध्यायः १

Adoration unto the supreme Being, pure, eternal and all-pervading, the changeless Reality, the one Being, meditating upon whom sages attain liberation, eternal and undifferentiated; the One out of whom the visible world, the scene of diversity, comes into existence, in whom it rests, and to whom it returns in the end when the world-cycles come to a close.

# ॥ हिरण्यगर्भः सूक्तम् ॥

ऋग्वेदसंहिता : मं - 10 अष्टकम् - 8 सूक्तम् - 121

ॐ हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् ।
स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥ १ ॥

य आत्मदा बलदा यस्य विश्व उपासते प्रशिषं यस्य देवाः ।
यस्य छायामृतं यस्य मृत्युः कस्मै देवाय हविषा विधेम ॥ २ ॥

यः प्राणतो निमिषतो महित्वैक इद्राजा जगतो बभूव ।
य ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम ॥ ३ ॥

यस्येमे हिमवन्तो महित्वा यस्य समुद्रं रसया सहाहुः ।
यस्येमाः प्रदिशो यस्य बाहू कस्मै देवाय हविषा विधेम ॥ ४ ॥

येन द्यौरुग्रा पृथिवी च दृळ्हा येन स्वः स्तभितं येन नाकः ।
यो अन्तरिक्षे रजसो विमानः कस्मै देवाय हविषा विधेम ॥ ५ ॥

यं क्रन्दसी अवसा तस्तभाने अभ्यैक्षेतां मनसा रेजमाने ।
यत्राधि सूर उदितो विभाति कस्मै देवाय हविषा विधेम ॥ ६ ॥

आपो ह यद्बृहतीर्विश्वमायन् गर्भं दधाना जनयन्तीरग्निम् ।
ततो देवानां समवर्ततासुरेकः कस्मै देवाय हविषा विधेम ॥ ७ ॥

यश्चिदापो महिना पर्यपश्यद् दक्षं दधाना जनयन्तीर्यज्ञम् ।
यो देवेष्वधि देव एक आसीत्कस्मै देवाय हविषा विधेम ॥ ८ ॥

मा नो हिंसीज्जनिता यः पृथिव्या यो वा दिवं सत्यधर्मा जजान ।
यश्चापश्चन्द्रा बृहतीर्जजान कस्मै देवाय हविषा विधेम ॥ ९ ॥

प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव ।
यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम् ॥ १० ॥

ॐ शान्तिः शान्तिः शान्तिः ॥



ॐ सं गच्छध्वं सं वदध्वं सं वो मनांसि जानताम् ।
देवा भागं यथा पूर्वे संजानाना उपासते ।
समानो मन्त्रः समितिः समानी समानं मनः सह चित्तमेषाम् ।
समानं मन्त्रमभि मन्त्रये वः समानेन वो हविषा जुहोमि ।
समानी व आकूतिः समाना हृदयानि वः ।
समानमस्तु वो मनो यथा वः सुसहासति ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

ऋग्वेदसंहिता : १०/१९१/२-४

यं ब्रह्मा वरुणेन्द्ररुद्रमरुतः स्तुन्वन्ति दिव्यैस्तवै-
र्वेदैः साङ्गपदक्रमोपनिषदैर्गायन्ति यं सामगाः ।
ध्यानावस्थिततद्गतेन मनसा पश्यन्ति यं योगिनो
यस्यान्तं न विदुः सुरासुरगणा देवाय तस्मै नमः ॥



श्रीमद्भागवतम् - १२, १३, १.

## ॥ भाग्यसूक्तम् ॥

तै. ब्राह्मणम् - अष्टकम् - 2, प्रश्नः - 8, अनु - 9

ॐ प्रातरग्निं प्रातरिन्द्रगं् हवामहे प्रातर्मित्रा वरुणा प्रातरश्विनाँ ।
प्रातर्भगं् पूषणं ब्रह्मणस्पतिं प्रातस्सोममुत रुद्रगं् हुवेम ॥ १ ॥
प्रातर्जितं भगमुग्रगं् हुवेम वयं पुत्र-मदितेर्यो विधर्ता ।
आद्ध्रश्चिद्यं मन्यमानस्तुरश्चिद्राजा चिद्यं भगं भक्षीत्याह ॥ २ ॥
भग प्रणेत-र्भग सत्यराधो भगेमां धियमुदवददन्नः ।
भगप्रणो जनय गोभि-रश्वैर्भगप्रनृभि-र्नृवन्तस्स्याम ॥ ३ ॥
उतेदानीं भगवन्तस्स्यामोत प्रपित्व उत मध्ये अह्नाँम् ।
उतोदिता मघवन्थ्सूर्यस्य वयं देवानागं् सुमतौ स्याम ॥ ४ ॥
भग एव भगवागं् अस्तु देवास्तेन वयं भगवन्तस्स्याम ।
तं त्वा भग सर्व इज्जोहवीमि सनो भग पुर एता भवेह ॥ ५ ॥
समध्वरायोषसोऽनमन्त दधिक्रावेव शुचये पदाय ।
अर्वाचीनं वसुविदं भगन्नो रथमिवाश्वावाजिन आवहन्तु ॥ ६ ॥
अश्वावती-र्गोमती-र्नउषासो वीरवतीस्सद-मुच्छन्तु भद्राः ।
घृतं दुहाना विश्वतः प्रपीनायूयं पात स्वस्तिभिस्सदा नः ॥ ७ ॥
यो माँऽग्ने भागिनगं् सन्त-मथाभागं चिकीऋषति ।
अभागमग्ने तं कुरु मामग्ने भागिनं कुरु ॥ ८ ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

## ॥ दशशान्तयः ॥

ॐ भद्रं कर्णेभिः शृणुयाम देवाः । भद्रं पश्येमाक्षभिर्यजत्राः । स्थिरैरङ्गैस्तुष्टुवाग्ंसस्तनूभिः । व्यशेम देवहितं यदायुः । स्वस्ति न इन्द्रो वृद्धश्रवाः । स्वस्ति नः पूषा विश्ववेदाः । स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः । स्वस्ति नो बृहस्पतिर्दधातु ॥

ॐ शान्तिः शान्तिः शान्तिः ॥ १ ॥

ॐ नमो ब्रह्मणे नमो अस्त्वग्नये नमः पृथिव्यै नम ओषधीभ्यः । नमो वाचे नमो वाचस्पतये नमो विष्णवे बृहते करोमि ॥

ॐ शान्तिः शान्तिः शान्तिः ॥ २ ॥

ॐ नमो वाचे या चोदिता या चानुदिता तस्यै वाचे नमो नमो वाचे नमो वाचस्पतये नम ऋषिभ्यो मन्त्रकृद्भ्यो मन्त्रपतिभ्यो मामामृषयो मन्त्रकृतो मन्त्रपतयः परादुर्मा ऽहमृषीन्मन्त्रकृतो मन्त्रपतीन्परादां वैश्वदेवीं वाचमुद्यासग् शिवामदस्तां जुष्टां देवेभ्यः शर्म मे द्यौः शर्मपृथिवी शर्म विश्वमिदं जगत् । शर्म चन्द्रश्च सूर्यश्च शर्म ब्रह्मप्रजापती । भूतं वदिष्ये भुवनं वदिष्ये तेजो वदिष्ये यशो वदिष्ये तपो वदिष्ये ब्रह्म वदिष्ये सत्यं वदिष्ये तस्मा अहमिदमुपस्तरण-मुपस्तृण उपस्तरणं मे प्रजायै पशूनां भूयादुपस्तरणमहं प्रजायै पशूनां भूयासं प्राणापानौ मृत्योर्मापातं प्राणापानौ मा मा हासिष्टं मधु मनिष्ये मधु जनिष्ये मधु वक्ष्यामि

मधुं वदिष्यामि मधुंमतीं देवेभ्यो वाचंमुद्यासगं शुश्रूषेण्यॉं मनुष्ये॑भ्यस्तं मां देवा अंवन्तु शोभायै पितरोऽनुंमदन्तु ॥

ॐ शान्तिः शान्तिः शान्तिः ॥ ३ ॥

ॐ शं नो वातं:पवतां मातरिश्वा शं नंस्तपतु सूर्यः। अहांनि शं भंवन्तु नश्शगं रात्रिः प्रतिंधीयताम्। शमुषानो व्युंच्छतु शमांदित्य उदेंतु नः। शिवा नश्शन्तंमाभव सुमृडीका सरंस्वति।

माते व्योंम सन्दृशिं। इडांयैवास्त्वंसि वास्तु मद्वाँस्तुमन्तों भूयास्म मा वास्तों-श्छिथ्स्मह्यवास्तुस्स भूंयाद्योंऽस्मान्द्वेष्टि यं चं वयं द्विष्मः।

प्रतिष्ठासिं प्रतिष्ठावंन्तो भूयास्ममा प्रंतिष्ठायाँ-श्छिथ्स्मह्य प्रतिष्ठस्स भूंयाद्योंऽस्मान्द्वेष्टि यं चं वयं द्विष्मः। आवांतवाहि भेषजं विवांतवाहि यद्रपंः। त्वगं हि विश्वभेंषजो देवानां दूत ईयंसे। द्वाविमौ वातौं वात आसिन्धोरापंरावतंः॥

दक्षं मे अन्य आवातु परान्योवांतु यद्रपंः। यददोवांतते गृहेंऽमृतंस्य निधिर् हितः। ततों नो देहि जीवसे ततों नो धेहि भेषजम्। ततों नो मह आवंह वात आवांतु भेषजम्।

शम्भूर्मयोभूर्नो हृदेप्रण आयूगंषि तारिषत्। इन्द्रंस्य गृहोंऽसि तं त्वा प्रपंद्ये सगुस्साश्वंः। सह यन्मे अस्ति तेनं। भूः प्रपंद्ये भुवः प्रपंद्ये सुवः प्रपंद्ये भूर्भुवस्सुवः प्रपंद्ये वायुं प्रपद्येनाँर्तां देवतां

प्रपद्येऽश्मानमाखणं प्रपद्ये प्रजापतेर्ब्रह्मकोशं ब्रह्मप्रपद्य ॐ प्रपद्ये ।

अन्तरिक्षं म उर्वन्तरं बृहदग्नयः पर्वताश्च यया वातः स्वस्त्या स्वस्तिमान्तयाँ स्वस्त्या स्वस्तिमानसानि ।

प्राणापानौ मृत्योर्मापातं प्राणापानौ मा मां हासिष्टं मयि मेधां मयि प्रजां मय्यग्निस्तेजो दधातु मयि मेधां मयि प्रजां मयीन्द्र इन्द्रियं दधातु मयि मेधां मयि प्रजां मयि सूर्यो भ्राजो दधातु ॥

द्युभि-रक्तुभिः परिपातमस्मानरिष्टेभिरश्विना सौभगेभिः । तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उतद्यौः । कयानश्चित्र आभुव दूती सदावृधस्सखा ।

कयाशचिष्ठया वृता । कस्त्वा सत्यो मदानां मगंहिष्ठो मथ्सदन्धसः । दृढा चिदारुजे वसु । अभीषुणस्सखीनामविता जरितॄणाम् ।

शतं भवास्यूतिभिः । वयस्सुपर्णा उपसेदुरिन्द्रं प्रियमेधा ऋषयो नाधमानाः । अपध्वान्तमूर्णुहि पूर्धिचक्षुर्मुमुग्ध्यस्मा-न्निधयेव बद्धान् ।

शं नो देवीरभिष्टय आपो भवन्तु पीतये । शंयोरभिस्रवन्तु नः ॥

ईशाना वार्याणां क्षयन्तीश्चर्षणीनाम् । अपो याचामि भेषजम् । सुमित्रान आप ओषधयः सन्तु दुर्मित्रास्तस्मै भूयासुर्यो ऽस्मान्द्वेष्टि यं च वयं द्विष्मः ।

आपो हिष्ठा मयोभुवस्ता न ऊर्जे दधातन। महेरणाय चक्षसे। यो वः शिवतमो रसस्तस्य भाजयते ह नः। उशतीरिव मातरः। तस्मा अरङ्गमामवो यस्य क्षयाय जिन्वथ। आपो जनयथा च नः।

पृथिवी शान्ता साग्निना शान्ता सा मे शान्ता शुचग्ं शमयतु। अन्तरिक्षग्ं शान्तं तद्वायुना शान्तं तन्मे शान्तग्ं शुचग्ं शमयतु। द्यौश्शान्ता सादित्येन शान्ता सा मे शान्ता शुचग्ं शमयतु।

पृथिवी शान्तिरन्तरिक्षग्ं शान्ति-द्यौ-श्शान्ति-र्दिश-श्शान्ति-रवान्तरदिशा-श्शान्ति-रग्नि-श्शान्ति-र्वायु-श्शान्ति-रादित्य-श्शान्ति-श्चन्द्रमा-श्शान्ति-र्नक्षत्राणि-शान्ति-राप-श्शान्ति-रोषधय-श्शान्ति-र्वनस्पतय-श्शान्ति-र्गौ-श्शान्ति-रजा-शान्ति-रश्व-श्शान्तिः पुरुष-श्शान्ति-र्ब्रह्म-शान्ति-र्ब्राह्मण-श्शान्ति-श्शान्ति-रेव शान्ति-श्शान्ति-र्मे अस्तु शान्तिः।

तयाहग्ं शान्त्या सर्वशान्त्या मह्यं द्विपदे चतुष्पदे च शान्तिं करोमि शान्तिर्मे अस्तु शान्तिः॥

एह श्रीश्च ह्रीश्च धृतिश्च तपो मेधा प्रतिष्ठा श्रद्धा सत्यं धर्मश्चैतानि मोत्तिष्ठन्त-मनूत्तिष्ठन्तु मा माग् श्रीश्च ह्रीश्च धृतिश्च तपो मेधा प्रतिष्ठा श्रद्धा सत्यं धर्मश्चैतानि मा मा हासिषुः।

उदायुंषा स्वायुषोदोषंधीनागं रसेनोत्पर्जन्यंस्य शुष्मेणो-दंस्थाममृतागं अनुं । तच्चक्षुंर्देवहिंतं पुरस्ताँच्छुक्रमुच्चरंत् ।

पश्येंम शरदंश्शतं जीवेंम शरदंश्शतं नन्दांम शरदंश्शतं मोदांम शरदंश्शतं भवांम शरदंश्शतगं शृणवांम शरदंश्शतं प्रब्रंवाम शरदंश्शतमजींतास्स्याम शरदंश्शतं ज्योक्च सूर्यं दृशे ।

य उदंगान्महतोऽर्णवाँद्विभ्राजंमानस्सरिरस्य मध्याथ्समां वृषभो लोंहिताक्षस्सूर्यों विपश्चिन्मनंसा पुनातु ॥

ब्रह्मंणश्चोतंन्यसि ब्रह्मंण आणीस्थो ब्रह्मंण आवपंनमसि धारितेयं पृंथिवी ब्रह्मंणा मही धांरितमेंनेन महदन्तरिंक्षं दिवं दाधार पृथिवीगं सदेंवां यदहं वेद तदहं धांरयाणि मामद्वेदोऽधि विस्रंसत् ।

मेधामनीषे माविंशतागं समीचीं भूतस्य भव्यस्यावंरुध्यै सर्वमायुंरयाणि सर्वमायुंरयाणि ।

आभिर्गीर्भिर्यदतोंन ऊनमाप्यांयय हरिवो वर्धमानः । यदा स्तोतृभ्यो महिं गोत्रा रुजासिं भूयिष्ठभाजो अधं ते स्याम । ब्रह्म प्रावांदिष्म तन्नो मा हांसीत् ॥

ॐ शान्तिः शान्तिः शान्तिंः ॥ ४ ॥

ॐ सं त्वां सिंचामि यजुंषा प्रजामायुर्धनं च ॥

ॐ शान्तिः शान्तिः शान्तिंः ॥ ५ ॥

ॐ शं नो मित्रः शं वरुणः । शं नो भवत्वर्यमा । शं न इन्द्रो बृहस्पतिः । शं नो विष्णुरुरुक्रमः । नमो ब्रह्मणे । नमस्ते वायो । त्वमेव प्रत्यक्षं ब्रह्मासि । त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि । ऋतं वदिष्यामि । सत्यं वदिष्यामि । तन्मामवतु । तद्वक्तारमवतु । अवतु माम् । अवतु वक्तारम् ॥

ॐ शान्तिः शान्तिः शान्तिः ॥ ६ ॥

ॐ तच्छं योरावृणीमहे । गातुं यज्ञाय । गातुं यज्ञपतये । दैवी स्वस्तिरस्तु नः । स्वस्तिर्मानुषेभ्यः । ऊर्ध्वं जिगातु भेषजम् । शं नो अस्तु द्विपदे । शं चतुष्पदे ॥

ॐ शान्तिः शान्तिः शान्तिः ॥ ७ ॥

ॐ सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्विनावधीतमस्तु मा विद्विषावहै ॥

ॐ शान्तिः शान्तिः शान्तिः ॥ ८ ॥

ॐ सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्विनावधीतमस्तु मा विद्विषावहै ॥

ॐ शान्तिः शान्तिः शान्तिः ॥ ९ ॥

ॐ सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्विनावधीतमस्तु मा विद्विषावहै ॥

ॐ शान्तिः शान्तिः शान्तिः ॥ १० ॥

  

## ॥ मन्त्रपुष्पम् ॥

ॐ भद्रङ्कर्णेभिः शृणुयाम देवाः । भद्रं पश्येमाक्षभिर्यजत्राः । स्थिरैरङ्गैस्तुष्टुवाग्ंसस्तनूभिः । व्यशेम देवहितं यदायुः । स्वस्ति न इन्द्रो वृद्धश्रवाः । स्वस्ति नः पूषा विश्ववेदाः । स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः । स्वस्ति नो बृहस्पतिर्दधातु ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

ॐ ॥ योऽपां पुष्पं वेद । पुष्पवान् प्रजावान् पशुमान् भवति । चन्द्रमा वा अपां पुष्पम् । पुष्पवान् प्रजावान् पशुमान् भवति । य एवं वेद । योऽपामायतनं वेद । आयतनवान् भवति । अग्निर्वा अपामायतनम् । आयतनवान् भवति । योऽग्नेरायतनं वेद ॥

आयतनवान् भवति । आपो वा अग्नेरायतनम् । आयतनवान् भवति । य एवं वेद । योऽपामायतनं वेद । आयतनवान् भवति । वायुर्वा अपामायतनम् । आयतनवान् भवति । यो वायोरायतनं वेद । आयतनवान् भवति ॥

आपो वै वायोरायतनम् । आयतनवान् भवति । य एवं वेद । योऽपामायतनं वेद । आयतनवान् भवति । असौ वै तपन्नपामायतनम् । आयतनवान् भवति । योऽमुष्य तपत आयतनं वेद । आयतनवान् भवति । आपो वा अमुष्य तपत आयतनम् ॥

आयतनवान् भवति । य एवं वेद । योऽपामायतनं वेद ।

आयतनवान् भवति । चन्द्रमा वा अपामायतनम् । आयतनवान् भवति । यश्चन्द्रमस आयतनं वेद । आयतनवान् भवति । आपो वै चन्द्रमस आयतनम् । आयतनवान् भवति ॥

य एवं वेद । योऽपामायतनं वेद । आयतनवान् भवति । नक्षत्राणि वा अपामायतनम् । आयतनवान् भवति । यो नक्षत्राणामायतनं वेद । आयतनवान् भवति । आपो वै नक्षत्राणामायतनम् । आयतनवान् भवति । य एवं वेद ॥

योऽपामायतनं वेद । आयतनवान् भवति । पर्जन्यो वा अपामायतनम् । आयतनवान् भवति । यः पर्जन्यस्यायतनं वेद । आयतनवान् भवति । आपो वै पर्जन्यस्याऽऽयतनम् । आयतनवान् भवति । य एवं वेद । योऽपामायतनं वेद ॥

आयतनवान् भवति । संवत्सरो वा अपामायतनम् । आयतनवान् भवति । यस्संवत्सरस्यायतनं वेद । आयतनवान् भवति । आपो वै संवत्सरस्यायतनम् । आयतनवान् भवति । य एवं वेद । योऽप्सु नावं प्रतिष्ठितां वेद । प्रत्येव तिष्ठति ॥

ॐ राजाधिराजाय प्रसह्यसाहिने । नमो वयं वैश्रवणाय कुर्महे । स मे कामान्कामकामाय मह्यम् । कामेश्वरो वैश्रवणो ददातु । कुबेराय वैश्रवणाय । महाराजाय नमः ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

हरिः ॐ तत्सत् ॥

## ॥ क्षमा प्रार्थना ॥

ॐ विसर्ग बिन्दुमात्राणि पदपादाक्षराणि च । न्यूनानि चातिरिक्तानि क्षमस्व परमेश्वर ॥ अपराध सहस्राणि क्रियन्तेऽहर्निशं मया । तानि सर्वाणि मे देव क्षमस्व पुरुषोत्तम ॥

मध्ये मन्त्रतन्त्र स्वरवर्ण ध्याननियम न्यूनातिरिक्त लोपदोष प्रायश्चित्तार्थं अच्युतानन्तगोविन्द नामत्रय महामन्त्रजपं करिष्ये ॥

अच्युताय नमः ।
अनन्ताय नमः ।
गोविन्दाय नमः । [ त्रिः ]

कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्यात्मना वा प्रकृतेस्स्वभावात् । करोमि यद्यत्सकलं परस्मै नारायणायेति समर्पयामि ॥

हरिः ॐ तत्सत् ॥



## ॥ वेदान्त महावाक्यम् ॥

१. **प्रज्ञानं ब्रह्म** (ऋग्वेदः ऐतरेयोपनिषत् अ.३ खण्डः१ मं.३)
Consciousness is Brahman (Rigvedah)

२. **अहं ब्रह्मास्मि** (यजुर्वेदः बृहदारण्यकोपनिषत् अ.१ ब्रा.४ मं.१०)
I am Brahman (Yajurvedah)

३. **तत्त्वमसि** (सामवेदः छान्दोग्योपनिषत् अ.६ खण्डः ८ मं.७)
Thou art That (Samavedah)

४. **अयमात्मा ब्रह्म** (अथर्वण वेदः माण्डूक्योपनिषत् प्रथमः खण्डः१-२)*
This self is Brahman (Atharvanavedah)

*Also for अयमात्मा ब्रह्म refer बृहदारण्यकोपनिषत् (अ.२ ब्रा.५ मं.१९)*



श्री गायत्री देवी

## [ गायत्रीमन्त्रः ]

ॐ भूर्भुव॒स्सुवः॑ ।
तत्स॑वि॒तुर्वरे॑ण्यं॒ भर्गो॑ दे॒वस्य॑ धीमहि ।
धियो॒ यो नः॑ प्रचो॒दया॑त् ॥

(यजुर्वेदः)



# श्री शारदा देवी

श्री शारदा देवी मन्दिरम् - रामकृष्ण मठ, खार (पश्चिम), मुम्बई

जननीं शारदां देवीं रामकृष्णं जगद्गुरुम् ।
पादपद्मे तयोः श्रित्वा प्रणमामि मुहुर्मुहुः ॥

- स्वामी अभेदानन्दः

**To the Universal Mother Sarada devi and to Ramakrishna, the Teacher of the world, in bosom holding your Lotus Feet, I offer my Salutations to you again and again.**



## रामकृष्णनमनम्

श्रीरामाय श्रीकृष्णाय रामकृष्णाय ते नमः ।
सच्चिदानन्दरूपाय शारदापतये नमः ।।

I offer my salutation to Sri Rama, my salutation to Sri Krishna (-the previous divine incarnations of God); I offer my salutation to Ramakrishna (-Sri Ramakrishna clearly said "He who came as Rama and as Krishna has come now in this body-pointing to himself "). Sri Ramakrishna is known as great divine incarnation of God.

I offer my salutation to Him (Sri Ramakrishna) who is the embodiment of Existence-Knowledge-Bliss, my salutation to Him (Sri Ramakrishna) whose spiritual consort is Sarada Devi - the embodiment of divine power.

---

# दिव्यस्तोत्रम्

## त्वमेव माता च पिता

त्वमेव माता च पिता त्वमेव, त्वमेव बन्धुश्च सखा त्वमेव ।
त्वमेव विद्या द्रविणं त्वमेव, त्वमेव सर्वं मम देवदेव ।।

**Prapanna Gita 28.**

You are my Mother, you are my Father, you are my Friend, you are my Eternal Companion, you are my Knowledge, you are my Wealth, you are my All-in-All, O God of gods.

---

॥ श्रीः ॥

# श्री महागणेशपञ्चरत्नस्तोत्रम् [1]

(श्री शङ्कराचार्य कृतम्)

मुदाकरात्त मोदकं सदा विमुक्तिसाधकम् । कलाधरावतंसकं विलासि लोकरक्षकम् । अनायकैक नायकं विनाशितेभदैत्यकम् । नताशुभाशुनाशकं नमामि तं विनायकम् ॥ १ ॥

नतेतरातिभीकरं नवोदितार्कभास्वरम् । नमत्सुरारि निर्जरं नताधिकापदुद्धरम् । सुरेश्वरं निधीश्वरं गजेश्वरं गणेश्वरम् । महेश्वरं तमाश्रये परात्परं निरन्तरम् ॥ २ ॥

समस्त लोकशङ्करं निरस्तदैत्यकुञ्जरम् । दरेतरोदरं वरं वरेभवक्त्रमक्षरम् । कृपाकरं क्षमाकरं मुदाकरं यशस्करम् । मनस्करं नमस्कृतां नमस्करोमि भास्वरम् ॥ ३ ॥

अकिञ्चनार्तिमार्जनं चिरन्तनोक्ति भाजनम् । पुरारिपूर्व नन्दनं सुरारि गर्वचर्वणम् । प्रपञ्च नाशभीषणं धनञ्जयादि भूषणम् । कपोलदानवारणं भजे पुराणवारणम् ॥ ४ ॥

नितान्तकान्तदन्तकान्ति-मन्तकान्तकात्मजम् । अचिन्त्य-रूपमन्तहीन-मन्तरायकृन्तनम् । हृदन्तरे निरन्तरं वसन्तमेव योगिनाम् । तमेकदन्तमेव तं विचिन्तयामि सन्ततम् ॥ ५ ॥

महागणेश पञ्चरत्नमादरेण योऽन्वहम् । प्रजल्पति प्रभातके हृदि स्मरन् गणेश्वरम् । अरोगितामदोषतां सुसाहितीं सुपुत्रताम् । समाहितायु-रष्टभूतिमभ्युपैति सोऽचिरात् ॥ ६ ॥

## श्रीगणेशपञ्चरत्नम् [2]

सरागलोक दुर्लभं विरागिलोकपूजितम् । सुरासुरैर्नमस्कृतं जरापमृत्युनाशकम् । गिरागुरुं श्रियाहरिं जयन्ति यत्पदार्चकाः । नमामि तं गणाधिपं कृपापयः पयोनिधिम् ॥ १ ॥

गिरीन्द्रजामुखाम्बुज प्रमोददान भास्करम् । करीन्द्रवक्त्र मानताघ संघ वारणोद्यतम् । सरीसृपेशबद्धकुक्षिमाश्रयामि सन्ततम् । शरीरकान्ति निर्जिताब्ज बन्धुबालसन्ततिम् ॥ २ ॥

शुकादिमौनिवन्दितं गकारवाच्यमक्षरम् । प्रकाममिष्टदायिनं सकामनम्रपंक्तये । चकास तं चतुर्भुजैर्विकासपद्म पूजितम् । प्रकाशितात्मतत्त्वकं नमाम्यहं गणाधिपम् ॥ ३ ॥

नराधिपत्वदायकं स्वरादिलोकदायकम् । ज्वरादिरोगवारकं निराकृतासुरव्रजम् । कराम्बुजोल्लसत्सृणिं विकारशून्यमानसैः । हृदा सदा विभावितं मुदा नमामि विघ्नपम् ॥ ४ ॥

श्रमापनोदनक्षमं समाहितान्तरात्मनाम् । सुमादिभिस्सदार्चितं क्षमानिधिं गणाधिपम् । रमाधवादि पूजितं यमान्तकात्मसम्भवम् । शमादि षड्गुणप्रदं नमामि तं विभूतये ॥ ५ ॥

गणाधिपस्य पञ्चकं नृणामभीष्टदायकम् । प्रणामपूर्वकं जनाः पठन्ति ये मुदायुताः । भवन्ति ते विदां पुरः प्रगीत वैभवा जवात् । चिरायुषोधिक श्रियस्सुसूनवोनसंशयः ॥ ६ ॥

## गणपति स्तोत्रम् [3]

अगजानन पद्मार्कं गजानन महर्निशम् । अनेकदं तं भक्तानामेकदन्तमुपास्महे ॥ १ ॥

शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् । प्रसन्नवदनं ध्यायेत् सर्व विघ्नोपशान्तये ॥ २ ॥

वक्रतुण्ड महाकाय कोटिसूर्य समप्रभ । अविघ्नं कुरु मे देव सर्व कार्येषु सर्वदा ॥ ३ ॥

गजाननं भूत गणाधि सेवितं कपित्थ जम्बू फलसार भक्षकम् । उमासुतं शोकविनाश कारणं नमामि विघ्नेश्वर पाद पङ्कजम् ॥ ४ ॥

## गुरुस्तोत्रम् [4]

गुरुर्ब्रह्मा गुरुर्विष्णुः गुरुर्देवो महेश्वरः । गुरुरेव परं ब्रह्म तस्मै श्रीगुरवे नमः ॥ १ ॥

अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया । चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ॥ २ ॥

अखण्डमण्डलाकारं व्याप्तं येन चराचरम् । तत्पदं दर्शितं येन तस्मै श्रीगुरवे नमः ॥ ३ ॥

अनेकजन्म-संप्राप्तकर्मबन्धविदाहिने । आत्मज्ञानप्रदानेन तस्मै श्रीगुरवे नमः ॥ ४ ॥

मन्नाथः श्रीजगन्नाथो मद्गुरुः श्रीजगद्गुरुः । ममात्मा सर्वभूतात्मा तस्मै श्रीगुरवे नमः ॥ ५ ॥

ब्रह्मानन्दं परमसुखदं केवलं ज्ञानमूर्तिम् । द्वन्द्वातीतं गगनसदृशं तत्त्वमस्यादिलक्ष्यम् ॥ ६ ॥

एकं नित्यं विमलमचलं सर्वधीसाक्षिभूतं । भावातीतं त्रिगुणरहितं सद्गुरुं तं नमामि ॥ ७ ॥

- विश्वसारतन्त्रम्

## गुर्वष्टकम् [5]

(श्री शङ्कराचार्य कृतम्)

शरीरं सुरूपं तथा वा कलत्रं
यशश्चारु चित्रं धनं मेरुतुल्यम् ।
मनश्चेन्न लग्नं गुरोरंघ्रिपद्मे
ततः किं ततः किं ततः किं ततः किम् ॥ १ ॥

कलत्रं धनं पुत्रपौत्रादि सर्वं
गृहं बान्धवाः सर्वमेतद्धि जातम् ।
मनश्चेन्न लग्नं गुरोरंघ्रिपद्मे
ततः किं ततः किं ततः किं ततः किम् ॥ २ ॥

षडङ्गादिवेदो मुखे शास्त्रविद्या
कवित्वादि गद्यं सुपद्यं करोति ।
मनश्चेन्न लग्नं गुरोरंघ्रिपद्मे
ततः किं ततः किं ततः किं ततः किम् ॥ ३ ॥

विदेशेषु मान्यः स्वदेशेषु धन्यः
सदाचारवृत्तेषु मत्तो न चान्यः ।
मनश्चेन्न लग्नं गुरोरंघ्रिपद्मे
ततः किं ततः किं ततः किं ततः किम् ॥ ४ ॥

क्षमामण्डले भूपभूपालवृन्दैः
सदा सेवितं यस्य पादारविन्दम् ।
मनश्चेन्न लग्नं गुरोरंघ्रिपद्मे
ततः किं ततः किं ततः किं ततः किम् ॥ ५ ॥

यशो मे गतं दिक्षु दानप्रतापा-
ज्जगद्वस्तु सर्वं करे यत्प्रसादात् ।
मनश्चेन्न लग्नं गुरोरंघ्रिपद्मे
ततः किं ततः किं ततः किं ततः किम् ॥ ६ ॥

न भोगे न योगे न वा वाजिराजौ
न कान्तामुखे नैव वित्तेषु चित्तम् ।
मनश्चेन्न लग्नं गुरोरंघ्रिपद्मे
ततः किं ततः किं ततः किं ततः किम् ॥ ७ ॥

अरण्ये न वा स्वस्य गेहे न कार्ये
न देहे मनो वर्तते मे त्वनर्घ्ये ।
मनश्चेन्न लग्नं गुरोरंघ्रिपद्मे
ततः किं ततः किं ततः किं ततः किम् ॥ ८ ॥

गुरोरष्टकं यः पठेत्पुण्यदेही
यतिर्भूपतिर्ब्रह्मचारी च गेही ।
लभेद्वाञ्छितार्थं पदं ब्रह्मसंज्ञं
गुरोरुक्तवाक्ये मनो यस्य लग्नम् ॥ ९ ॥

## सुवर्णमालास्तुतिः [6]

(श्री शङ्कराचार्य कृतम्)

ईश गिरीश नरेश परेश – महेश बिलेशय भूषण भो ।
साम्ब सदाशिव शम्भो शङ्कर – शरणं मे तव चरणयुगम् ॥ १ ॥
उमया दिव्य सुमङ्गल विग्रह – यालिङ्गित वामाङ्ग विभो ।
साम्ब सदाशिव शम्भो शङ्कर – शरणं मे तव चरणयुगम् ॥ २ ॥
ऊरी कुरु मामज्ञमनाथं – दूरी कुरु मे दुरितं भो ।
साम्ब सदाशिव शम्भो शङ्कर – शरणं मे तव चरणयुगम् ॥ ३ ॥
ऋषिवर मानस हंस चराचर – जनन स्थिति लय कारण भो ।
साम्ब सदाशिव शम्भो शङ्कर – शरणं मे तव चरणयुगम् ॥ ४ ॥
अन्तःकरण विशुद्धिं भक्तिं – च त्वयि सतीं प्रदेहि विभो ।
साम्ब सदाशिव शम्भो शङ्कर – शरणं मे तव चरणयुगम् ॥ ५ ॥
करुणा वरुणालय मयिदास – उदासस्तवोचितो न हि भो ।
साम्ब सदाशिव शम्भो शङ्कर – शरणं मे तव चरणयुगम् ॥ ६ ॥

जय कैलास निवास प्रमथ — गणाधीश भू सुरार्चित भो ।
साम्ब सदाशिव शम्भो शङ्कर — शरणं मे तव चरणयुगम् ॥ ७ ॥

झनुतक झङ्किणु झनुतत्किट तक — शब्दैर्नटसि महानट भो ।
साम्ब सदाशिव शम्भो शङ्कर — शरणं मे तव चरणयुगम् ॥ ८ ॥

धर्मस्थापन दक्ष त्र्यक्ष गुरो — दक्ष यज्ञशिक्षक भो ।
साम्ब सदाशिव शम्भो शङ्कर — शरणं मे तव चरणयुगम् ॥ ९ ॥

बलमारोग्यं चायुस्त्वद्गुण — रुचितां चिरं प्रदेहि विभो ।
साम्ब सदाशिव शम्भो शङ्कर — शरणं मे तव चरणयुगम् ॥ १० ॥

भगवन् भर्ग भयापह भूत-पते भूतिभूषिताङ्ग विभो ।
साम्ब सदाशिव शम्भो शङ्कर — शरणं मे तव चरणयुगम् ॥ ११ ॥

शर्व देव सर्वोत्तम सर्वद — दुर्वृत्त गर्वहरण विभो ।
साम्ब सदाशिव शम्भो शङ्कर — शरणं मे तव चरणयुगम् ॥ १२ ॥

षड्रिपु षडूर्मि षड्विकार हर — सन्मुख षण्मुख जनक विभो ।
साम्ब सदाशिव शम्भो शङ्कर — शरणं मे तव चरणयुगम् ॥ १३ ॥

सत्यं ज्ञानमनन्तं ब्रह्मे — त्येतल्लक्षण लक्षित भो ।
साम्ब सदाशिव शम्भो शङ्कर — शरणं मे तव चरणयुगम् ॥ १४ ॥

हाऽहाऽहूऽहू मुख सुरगायक — गीता पदान पद्य विभो ।
साम्ब सदाशिव शम्भो शङ्कर — शरणं मे तव चरणयुगम् ॥ १५ ॥



## शिवपञ्चाक्षरस्तोत्रम् [7]

(श्री शङ्कराचार्य कृतम्)

नागेन्द्रहाराय त्रिलोचनाय – भस्माङ्गरागाय महेश्वराय।
नित्याय शुद्धाय दिगम्बराय – तस्मै नकाराय नमः शिवाय ॥ १ ॥
मन्दाकिनी सलिल चन्दन चर्चिताय–नन्दीश्वर प्रमथनाथ महेश्वराय।
मन्दारपुष्पबहुपुष्पसुपूजिताय–तस्मै मकाराय नमः शिवाय ॥ २ ॥
शिवाय गौरीवदनाब्जबाल-सूर्याय दक्षाध्वरनाशकाय।
श्रीनीलकण्ठाय वृषध्वजाय–तस्मै शिकाराय नमः शिवाय ॥ ३ ॥
वसिष्ठकुम्भोद्भवगौतमार्य-मुनीन्द्रदेवार्चितशेखराय।
चन्द्रार्कवैश्वानरलोचनाय – तस्मै वकाराय नमः शिवाय ॥ ४ ॥
यज्ञस्वरूपाय जटाधराय – पिनाकहस्ताय सनातनाय।
दिव्याय देवाय दिगम्बराय – तस्मै यकाराय नमः शिवाय ॥ ५ ॥
पञ्चाक्षरमिदं पुण्यं यः पठेच्छिवसंनिधौ।
शिवलोकमवाप्नोति शिवेन सह मोदते ॥ ६ ॥

## शिवषडक्षरस्तोत्रम् [8]

ॐकारं बिन्दु संयुक्तं नित्यं ध्यायन्ति योगिनः।
कामदं मोक्षदं चैव ॐकाराय नमो नमः ॥ १ ॥
नमन्ति ऋषयो देवा नमन्त्यप्सरसां गणाः।
नरा नमन्ति देवेशं नकाराय नमो नमः ॥ २ ॥

महादेवं महात्मानं महाध्यानं परायणम् ।
महापापहरं देवं मकाराय नमो नमः ॥ ३ ॥

शिवं शान्तं जगन्नाथं लोकानुग्रहकारकम् ।
शिवमेकपदं नित्यं शिकाराय नमो नमः ॥ ४ ॥

वाहनं वृषभो यस्य वासुकिः कण्ठभूषणम् ।
वामे शक्तिधरं देवं वाकाराय नमो नमः ॥ ५ ॥

यत्र यत्र स्थितो देवः सर्वव्यापी महेश्वरः ।
यो गुरुः सर्वदेवानां यकाराय नमो नमः ॥ ६ ॥

षडक्षरमिदं स्तोत्रं यः पठेच्छिव सन्निधौ ।
शिवलोकमवाप्नोति शिवेन सह मोदते ॥ ७ ॥

इति श्री रुद्रयामले उमामहेश्वरसंवादे शिवषडक्षरस्तोत्रं सम्पूर्णम्

## शिवाष्टकम् [9]

(श्री शङ्कराचार्य कृतम्)

तस्मै नमः परमकारणकारणाय—दीप्तोज्ज्वलज्वलितपिङ्गल-लोचनाय । नागेन्द्रहारकृतकुण्डलभूषणाय – ब्रह्मेन्द्रविष्णु-वरदाय नमः शिवाय ॥ १ ॥

श्रीमत्प्रसन्नशशिपन्नगभूषणाय – शैलेन्द्रजा वदन चुम्बित-लोचनाय । कैलासमन्दिरमहेन्द्रनिकेतनाय – लोकत्रयार्ति-हरणाय नमः शिवाय ॥ २ ॥

पद्मावदातमणिकुण्डलगोवृषाय – कृष्णागरुप्रचुरचन्दन-चर्चिताय । भस्मानुषक्तविकचोत्पलमल्लिकाय – नीलाब्ज-कण्ठसदृशाय नमः शिवाय ॥ ३ ॥

लम्बत्सपिङ्गल जटामुकुटोत्कटाय – दंष्ट्राकरालविकटोत्कट भैरवाय । व्याघ्राजिनाम्बरधराय मनोहराय – त्रैलोक्यनाथ नमिताय नमः शिवाय ॥ ४ ॥

दक्षप्रजापतिमहामखनाशनाय – क्षिप्रं महात्रिपुरदानव-घातनाय । ब्रह्मोर्जितोर्ध्वगकरोटिनिकृन्तनाय – योगाय योगनमिताय नमः शिवाय ॥ ५ ॥

संसारसृष्टिघटनापरिवर्तनाय – रक्षः पिशाचगणसिद्धसमा-कुलाय । सिद्धोरगग्रह गणेन्द्रनिषेविताय – शार्दूल चर्मवसनाय नमः शिवाय ॥ ६ ॥

भस्माङ्गरागकृतरूपमनोहराय – सौम्यावदातवनमाश्रित-माश्रिताय । गौरीकटाक्षनयनार्ध निरीक्षणाय–गोक्षीरधारधवलाय नमः शिवाय ॥ ७ ॥

आदित्यसोमवरुणानिलसेविताय – यज्ञाग्निहोत्रवरधूम-निकेतनाय । ऋक्सामवेदमुनिभिः स्तुतिसंयुताय – गोपाय गोपनमिताय नमः शिवाय ॥ ८ ॥

शिवाष्टकमिदं पुण्यं यः पठेच्छिवसन्निधौ । शिवलोक-मवाप्नोति शिवेन सह मोदते ॥ ९ ॥

## द्वादशज्योतिर्लिङ्गस्तोत्रम् [10]

(श्री शङ्कराचार्य कृतम्)

सौराष्ट्रदेशे वसुधावकाशे । ज्योतिर्मयं चन्द्रकलावतंसम् ।
भक्तिप्रदानाय कृतावतारं । तं सोमनाथं शरणं प्रपद्ये ॥ १ ॥

श्रीशैलशृङ्गे विविधप्रसङ्गे शेषाद्रिशृङ्गेऽपि सदा वसन्तम् ।
तमर्जुनं मल्लिकपूर्वमेनं नमामि संसारसमुद्रसेतुम् ॥ २ ॥

अवन्तिकायां विहितावतारं । मुक्तिप्रदानाय च सज्जनानाम् ।
अकालमृत्योः परिरक्षणार्थं । वन्दे महाकालमहंसुरेशम् ॥ ३ ॥

कावेरिका नर्मदयोः पवित्रे । समागमे सज्जनतारणाय ।
सदैव मान्धातृपुरे वसन्त - मोङ्कारमीशं शिवमेकमीडे ॥ ४ ॥

पूर्वोत्तरे पारलिकाभिधाने । सदाशिवं तं गिरिजासमेतम् ।
सुरासुराराधितपादपद्मं श्रीवैद्यनाथं सततं नमामि ॥ ५ ॥

आमर्द संज्ञे नगरे च रम्ये । विभूषिताङ्गं विविधैश्च भोगैः ।
सद्भक्तिमुक्तिप्रदमीशमेकं श्रीनागनाथं शरणं प्रपद्ये ॥ ६ ॥

हिमाद्रिपार्श्वेऽपि तटे रमन्तं । सम्पूज्यमानं सततं मुनीन्द्रैः ।
सुरासुरैर्यक्षमहोरगाद्यैः । केदारमीशं शिवमेकमीडे ॥ ७ ॥

सह्याद्रिशीर्षे विमले वसन्तं । गोदावरीतीरपवित्रदेशे ।
यद्दर्शनात्पातकमाशु नाशं । प्रयाति तं त्र्यम्बकमीशमीडे ॥ ८ ॥

श्रीताम्रपर्णीजलराशियोगे । निबध्य सेतुं निशि बिल्वपत्रैः ।

श्रीरामचन्द्रेण समर्पितं तं रामेश्वराख्यं सततं नमामि ॥ ९ ॥

यं डाकिनीशाकिनिकासमाजे – निषेव्यमाणं पिशिताशनैश्च ।
सदैव भीमादिपदप्रसिद्धं – तं शङ्करं भक्तहितं नमामि ॥ १० ॥

सानन्दमानन्दवने वसन्त-मानन्दकन्दं हतपापवृन्दम् ।
वाराणसीनाथमनाथनाथं श्रीविश्वनाथं शरणं प्रपद्ये ॥ ११ ॥

इलापुरे रम्यविशालकेऽस्मिन्–समुल्लसन्तं च जगद्वरेण्यम् ।
वन्दे महोदारतरस्वभावं–घृष्णेश्वराख्यं शरणं प्रपद्ये ॥ १२ ॥

ज्योतिर्मयद्वादशलिङ्गकानां–शिवात्मनां प्रोक्तमिदं क्रमेण । स्तोत्रं
पठित्वा मनुजोऽतिभक्त्या–फलं तदालोक्य निजं भजेच्च ॥ १३ ॥

## द्वादशज्योतिर्लिङ्गस्मरणम् [11]

सौराष्ट्रे सोमनाथं च श्रीशैले मल्लिकार्जुनम् ।
उज्जयिन्यां महाकालमोङ्कारममलेश्वरम् ॥ १ ॥

परल्यां वैद्यनाथं च डाकिन्यां भीमशङ्करम् ।
सेतुबन्धे तु रामेशं नागेशं दारुकावने ॥ २ ॥

वाराणस्यां तु विश्वेशं त्र्यम्बकं गौतमीतटे ।
हिमालये तु केदारं घुश्मेशं च शिवालये ॥ ३ ॥

एतानि ज्योतिर्लिङ्गानि सायं प्रातः पठेन्नरः ।
सप्तजन्मकृतं पापं स्मरणेन विनश्यति ॥ ४ ॥



## वेदसारशिवस्तोत्रम् [12]

(श्री शङ्कराचार्य कृतम्)

पशूनां पतिं पापनाशं परेशं—गजेन्द्रस्य कृत्तिं वसानं वरेण्यम्।
जटाजूटमध्ये स्फुरद्गाङ्गवारिं—महादेवमेकं स्मरामि स्मरारिम्॥ १॥

महेशं सुरेशं सुरारातिनाशं—विभुं विश्वनाथं विभूत्यङ्गभूषम्।
विरूपाक्षमिन्द्वर्कवह्नित्रिनेत्रं—सदानन्दमीडे प्रभुं पञ्चवक्त्रम्॥ २॥

गिरीशं गणेशं गले नीलवर्णं – गवेन्द्राधिरूढं गुणातीतरूपम्।
भवं भास्वरं भस्मना भूषिताङ्गं – भवानीकलत्रं भजे पञ्चवक्त्रम् ॥ ३॥

शिवाकान्त शम्भो शशाङ्कार्धमौले – महेशान शूलिन् जटाजूटधारिन्। त्वमेको जगद्व्यापको विश्वरूपः – प्रसीद प्रसीद प्रभो पूर्णरूप ॥ ४॥

परात्मानमेकं जगद्बीजमाद्यं – निरीहं निराकारमोङ्कारवेद्यम्।
यतो जायते पाल्यते येन विश्वं – तमीशं भजे लीयते यत्र विश्वम् ॥ ५॥

न भूमिर्न चापो न वह्निर्न वायु-र्न चाकाशमास्ते न तन्द्रा न निद्रा। न ग्रीष्मो न शीतं न देशो न वेषो – न यस्यास्ति मूर्तिस्त्रिमूर्तिं तमीडे ॥ ६॥

अजं शाश्वतं कारणं कारणानां – शिवं केवलं भासकं भासकानाम्। तुरीयं तमःपारमाद्यन्तहीनं – प्रपद्ये परं पावनं द्वैतहीनम् ॥ ७॥

नमस्ते नमस्ते विभो विश्वमूर्ते—नमस्ते नमस्ते चिदानन्दमूर्ते। नमस्ते नमस्ते तपोयोगगम्य—नमस्ते नमस्ते श्रुतिज्ञानगम्य ॥ ८ ॥

प्रभो शूलपाणे विभो विश्वनाथ—महादेव शम्भो महेश त्रिनेत्र। शिवाकान्त शान्त स्मरारे पुरारे—त्वदन्यो वरेण्यो न मान्यो न गण्यः ॥ ९ ॥

शम्भो महेश करुणामय शूलपाणे—गौरीपते पशुपते पशुपाशनाशिन्। काशीपते करुणया जगदेतदेक-स्त्वं हंसि पासि विदधासि महेश्वरोऽसि ॥ १० ॥

त्वत्तो जगद्भवति देव भव स्मरारे—त्वय्येव तिष्ठति जगन्मृड विश्वनाथ। त्वय्येव गच्छति लयं जगदेतदीश—लिङ्गात्मकं हर चराचरविश्वरूपिन् ॥ ११ ॥

## शिवजयजयकारध्यानस्तोत्रम् [13]

स्फटिकप्रतिभटकान्ते विरचितकलिमलशान्ते।
शिव शङ्कर शिव शङ्कर जय कैलासपते ॥ १ ॥

गङ्गाधरपिङ्गलजट हृतशरणागत सङ्कट।
शिव शङ्कर शिव शङ्कर जय कैलासपते ॥ २ ॥

बालसुधाकर शेखर भाललसद्वैश्वानर।
शिव शङ्कर शिव शङ्कर जय कैलासपते ॥ ३ ॥

पद्मदलायतलोचन दृढभवबन्धनमोचन।
शिव शङ्कर शिव शङ्कर जय कैलासपते ॥ ४ ॥

मन्दमधुरहासवदन निर्जितदुर्लसितमदन ।
शिव शङ्कर शिव शङ्कर जय कैलासपते ॥ ५ ॥
सनकादिक वन्द्यचरण दुस्तरभवसिन्धुतरण ।
शिव शङ्कर शिव शङ्कर जय कैलासपते ॥ ६ ॥
ललितबालगजानन कलितमहापितृकानन ।
शिव शङ्कर शिव शङ्कर जय कैलासपते ॥ ७ ॥
सच्चिद्घनसुखसागर लीलापीतमहागर ।
शिव शङ्कर शिव शङ्कर जय कैलासपते ॥ ८ ॥
गिरिजाश्लिष्टार्धतनो कल्पितगिरिराजधनो ।
शिव शङ्कर शिव शङ्कर जय कैलासपते ॥ ९ ॥

## दारिद्र्यदहनशिवस्तोत्रम् [14]

(श्री वसिष्ठ कृतम्)

विश्वेश्वराय नरकार्णवतारणाय कर्णामृताय शशिशेखर-भूषणाय । कर्पूरकुन्दधवलाय जटाधराय दारिद्र्यदुःख दहनाय नमः शिवाय ॥ १ ॥

गौरीप्रियाय रजनीशकलाधराय कालान्तकाय भुजगाधिप-कङ्कणाय । गङ्गाधराय गजराजविमर्दनाय दारिद्र्यदुःख दहनाय नमः शिवाय ॥ २ ॥

भक्तिप्रियाय भवरोगभयापहाय उग्राय दुर्गभवसागरतारणाय ।

ज्योतिर्मयाय पुनरुद्भववारणाय दारिद्र्यदुःख दहनाय नमः शिवाय ॥ ३ ॥

चर्माम्बराय शवभस्मविलेपनाय भालेक्षणाय फणिकुण्डल-मण्डिताय । मञ्जीरपादयुगलाय जटाधराय दारिद्र्यदुःख दहनाय नमः शिवाय ॥ ४ ॥

पञ्चाननाय फणिराजविभूषणाय हेमांशुकाय भुवनत्रयमण्डनाय । आनन्दभूमिवरदाय तमोहराय दारिद्र्यदुःख दहनाय नमः शिवाय ॥ ५ ॥

भानुप्रियाय दुरितार्णवतारणाय कालान्तकाय कमलासन-पूजिताय । नेत्रत्रयाय शुभलक्षणलक्षिताय दारिद्र्यदुःख दहनाय नमः शिवाय ॥ ६ ॥

रामप्रियाय रघुनाथवरप्रदाय नागप्रियाय नागराज निकेतनाय । पुण्याय पुण्यचरिताय सुरार्चिताय दारिद्र्यदुःख दहनाय नमः शिवाय ॥ ७ ॥

मुक्तीश्वराय फलदाय गणेश्वराय गीतप्रियाय वृषभेश्वरवाहनाय । मातङ्गचर्मवसनाय महेश्वराय दारिद्र्यदुःख दहनाय नमः शिवाय ॥ ८ ॥

गौरीविलास भुवनाय महोदयाय पञ्चाननाय शरणागत रक्षकाय । शर्वाय सर्वजगतामधिपाय तस्मै दारिद्र्यदुःख दहनाय नमः शिवाय ॥ ९ ॥

## शिवताण्डवस्तोत्रम् [15]

(श्री रावण कृतम्)

जटाटवीगलज्जलप्रवाहपावितस्थले गलेऽवलम्ब्य लम्बितां भुजङ्गतुङ्गमालिकाम्। डमड्डमड्डमड्डमन्निनादवड्डमर्वयं चकार चण्डताण्डवं तनोतु नः शिवः शिवम् ॥ १ ॥

जटाकटाहसम्भ्रमभ्रमन्निलिम्पनिर्झरी-विलोलवीचिवल्लरीविराज-मानमूर्द्धनि । धगद्धगद्धगज्ज्वलल्ललाटपट्टपावके किशोरचन्द्रशेखरे रतिः प्रतिक्षणं मम ॥ २ ॥

धराधरेन्द्रनन्दिनीविलासबन्धुबन्धुर-स्फुरद्दिगन्तसन्ततिप्रमोद-मानमानसे । कृपाकटाक्षधोरणीनिरुद्धदुर्धरापदि क्वचिद्दिगम्बरे मनो विनोदमेतु वस्तुनि ॥ ३ ॥

जटाभुजङ्गपिङ्गलस्फुरत्फणामणिप्रभा-कदम्बकुङ्कुमद्रवप्रलिप्त-दिग्वधूमुखे । मदान्धसिन्धुरस्फुरत्त्वगुत्तरीयमेदुरे मनो विनोदमद्भुतं बिभर्तु भूतभर्तरि ॥ ४ ॥

सहस्रलोचनप्रभृत्यशेषलेखशेखर-प्रसूनधूलिधोरणीविधूसराङ्घ्रि-पीठभूः । भुजङ्गराजमालया निबद्धजाटजूटकः श्रियै चिराय जायतां चकोरबन्धुशेखरः ॥ ५ ॥

ललाटचत्वरज्वलद्धनञ्जयस्फुलिङ्गभा - निपीतपञ्चसायकं नमन्निलिम्पनायकम् । सुधामयूखलेखया विराजमानशेखरं महा-

कपालि सम्पदे शिरो जटालमस्तु नः ॥ ६ ॥

करालभालपट्टिकाधगद्धगद्धगज्ज्वल-द्धनञ्जयाहुतीकृतप्रचण्ड-पञ्चसायके। धराधरेन्द्रनन्दिनीकुचाग्रचित्रपत्रक-प्रकल्पनैक-शिल्पिनि त्रिलोचने रतिर्मम ॥ ७ ॥

नवीनमेघमण्डलीनिरुद्धदुर्धरस्फुर-त्कुहूनिशीथिनीतमः प्रबन्ध-बद्धकन्धरः । निलिम्पनिर्झरीधरस्तनोतु कृत्तिसिन्धुरः कला-निधानबन्धुरः श्रियं जगद्धुरन्धरः ॥ ८ ॥

प्रफुल्लनीलपङ्कजप्रपञ्चकालिमप्रभा-वलम्बिकण्ठकन्दलीरुचि-प्रबद्धकन्धरम् । स्मरच्छिदं पुरच्छिदं भवच्छिदं मखच्छिदं गजच्छिदान्धकच्छिदं तमन्तकच्छिदं भजे ॥ ९ ॥

अखर्वसर्वमङ्गलाकलाकदम्बमञ्जरी-रसप्रवाहमाधुरीविजृम्भ-णामधुव्रतम् । स्मरान्तकं पुरान्तकं भवान्तकं मखान्तकं-गजान्तकान्धकान्तकं तमन्तकान्तकं भजे ॥ १० ॥

जयत्वदभ्रविभ्रमभ्रमद्भुजङ्गमश्वस-द्विनिर्गमत्क्रमस्फुरत्कराल-भालहव्यवाट् । धिमिद्धिमिद्धिमिद्ध्वनन्मृदङ्गतुङ्गमङ्गल-ध्वनि-क्रमप्रवर्तितप्रचण्डताण्डवः शिवः ॥ ११ ॥

दृषद्विचित्रतल्पयोर्भुजङ्गमौक्तिकस्रजो - र्गरिष्ठरत्नलोष्ठयोः सुहृद्विपक्षपक्षयोः । तृणारविन्दचक्षुषोः प्रजामहीमहेन्द्रयोः समप्रवृत्तिकः कदा सदाशिवं भजाम्यहम् ॥ १२ ॥

कदा निलिम्पनिर्झरीनिकुञ्जकोटरे वसन्–विमुक्तदुर्मतिः सदा शिरःस्थमञ्जलिं वहन् । विलोललोललोचनो ललामभाल-लग्नकः शिवेति मन्त्रमुच्चरन् कदा सुखी भवाम्यहम् ॥ १३ ॥

इमं हि नित्यमेवमुक्तमुत्तमोत्तमं स्तवं–पठन्स्मरन्ब्रुवन्नरो विशुद्धिमेति सन्ततम् । हरे गुरौ सुभक्तिमाशु याति नान्यथा गतिं विमोहनं हि देहिनां सुशङ्करस्य चिन्तनम् ॥ १४ ॥

पूजावसानसमये दशवक्त्रगीतं – यः शम्भुपूजनपरं पठति प्रदोषे । तस्य स्थिरां रथगजेन्द्रतुरङ्गयुक्तां – लक्ष्मीं सदैव सुमुखीं प्रददाति शम्भुः ॥ १५ ॥

## शिवमानसपूजा [16]

(श्री शङ्कराचार्य कृतम्)

रत्नैः कल्पितमासनं हिमजलैः स्नानं च दिव्याम्बरं – नानारत्नविभूषितं मृगमदामोदाङ्कितं चन्दनम् । जातीचम्पक-बिल्वपत्ररचितं पुष्पं च धूपं तथा–दीपं देव दयानिधे पशुपते हृत्कल्पितं गृह्यताम् ॥ १ ॥

सौवर्णे नवरत्नखण्डरचिते पात्रे घृतं पायसं–भक्ष्यं पञ्चविधं पयोदधियुतं रम्भाफलं पानकम् । शाकानामयुतं जलं रुचिकरं कर्पूरखण्डोज्ज्वलं–ताम्बूलं मनसा मया विरचितं भक्त्या प्रभो स्वीकुरु ॥ २ ॥

छत्रं चामरयोर्युगं व्यजनकं चादर्शकं निर्मलं—वीणाभेरिमृदङ्ग-काहलकलागीतं च नृत्यं तथा । साष्टाङ्गं प्रणतिः स्तुतिर्बहुविधा ह्येतत्समस्तं मया—सङ्कल्पेन समर्पितं तव विभो पूजां गृहाण प्रभो ॥ ३ ॥

आत्मा त्वं गिरिजा मतिः सहचराः प्राणाः शरीरं गृहं—पूजा ते विषयोपभोगरचना निद्रा समाधिस्थितिः । सञ्चारः पदयोः प्रदक्षिणविधिः स्तोत्राणि सर्वा गिरो—यद्यत्कर्म करोमि तत्तदखिलं शम्भो तवाराधनम् ॥ ४ ॥

करचरणकृतं वाक्कायजं कर्मजं वा—श्रवणनयनजं वा मानसं वाऽपराधम् । विदितमविदितं वा सर्वमेतत्क्षमस्व—जय जय करुणाब्धे श्रीमहादेव शम्भो ॥ ५ ॥

## श्री कैलासपति प्रार्थना [17]

कैलासे कमनीयरत्नखचिते कल्पद्रुमूले स्थितम् ।
कर्पूरस्फटिकेन्दु सुन्दरतनुं कात्यायनी सेवितम् ॥
गङ्गातुङ्ग तरङ्ग रञ्जित ज़टाभारं कृपासागरम् ।
कण्ठालङ्कृत शेषभूषणमजं मृत्युञ्जयं भावये ॥
आगच्छ मृत्युञ्जय चन्द्रमौले व्याघ्राजिनालङ्कृत शूलपाणे ।
स्वभक्त संरक्षण कामधेनो प्रसीद विश्वेश्वर पार्वतीश ॥
श्री उमामहेश्वराभ्यां नमः ॥

# उमामहेश्वरस्तोत्रम् [18]

(श्री शङ्कराचार्य कृतम्)

नमः शिवाभ्यां नवयौवनाभ्यां – परस्पराश्लिष्ट वपुर्धराभ्याम् ।
नगेन्द्रकन्यावृषकेतनाभ्यां – नमो नमः शङ्करपार्वतीभ्याम् ॥ १ ॥

नमः शिवाभ्यां सरसोत्सवाभ्यां – नमस्कृताभीष्टवरप्रदाभ्याम् ।
नारायणेनार्चितपादुकाभ्यां – नमो नमः शङ्करपार्वतीभ्याम् ॥ २ ॥

नमः शिवाभ्यां वृषवाहनाभ्यां–विरिञ्चिविष्णिवन्द्रसुपूजिताभ्याम् ।
विभूतिपाटीरविलेपनाभ्यां – नमो नमः शङ्करपार्वतीभ्याम् ॥ ३ ॥

नमः शिवाभ्यां जगदीश्वराभ्यां–जगत्पतिभ्यां जयविग्रहाभ्याम् ।
जम्भारिमुख्यैरभिवन्दिताभ्यां–नमो नमः शङ्करपार्वतीभ्याम् ॥ ४ ॥

नमः शिवाभ्यां परमौषधाभ्यां–पञ्चाक्षरी पञ्जररञ्जिताभ्याम् ।
प्रपञ्च सृष्टिस्थिति संहृताभ्यां–नमो नमः शङ्करपार्वतीभ्याम् ॥ ५ ॥

नमः शिवाभ्यामतिसुन्दराभ्याम्–अत्यन्तमासक्तहृदम्बुजाभ्याम् ।
अशेषलोकैकहितङ्कराभ्यां – नमो नमः शङ्करपार्वतीभ्याम् ॥ ६ ॥

नमः शिवाभ्यां कलिनाशनाभ्यां–कङ्कालकल्याणवपुर्धराभ्याम् ।
कैलासशैलस्थितदेवताभ्यां – नमो नमः शङ्करपार्वतीभ्याम् ॥ ७ ॥

नमः शिवाभ्यामशुभापहाभ्याम्–अशेषलोकैकविशेषिताभ्याम् ।
अकुण्ठिताभ्यां स्मृतिसंभृताभ्यां–नमो नमः शङ्करपार्वतीभ्याम् ॥ ८ ॥

नमः शिवाभ्यां रथवाहनाभ्यां – रवीन्दुवैश्वानरलोचनाभ्याम् ।
राका शशाङ्काभ मुखाम्बुजाभ्यां–नमो नमः शङ्करपार्वतीभ्याम् ॥ ९ ॥

नमः शिवाभ्यां जटिलन्धराभ्यां – जरामृतिभ्यां च विवर्जिताभ्याम् ।
जनार्दनाब्जोद्भवपूजिताभ्यां–नमो नमः शङ्करपार्वतीभ्याम् ॥ १० ॥

नमः शिवाभ्यां विषमेक्षणाभ्यां–बिल्वच्छदामल्लिकदामभृद्भ्याम् ।
शोभावती शान्तवतीश्वराभ्यां–नमो नमः शङ्करपार्वतीभ्याम् ॥ ११ ॥

नमः शिवाभ्यां पशुपालकाभ्यां – जगत्त्रयीरक्षण बद्धहृद्भ्याम् ।
समस्त देवासुरपूजिताभ्यां–नमो नमः शङ्करपार्वतीभ्याम् ॥ १२ ॥

स्तोत्रं त्रिसन्ध्यं शिवपार्वतीभ्यां–भक्त्या पठेद्द्वादशकं नरो यः ।
स सर्वसौभाग्य फलानि भुङ्क्ते शतायुरन्ते शिवलोकमेति ॥ १३ ॥

॥ इति उमामहेश्वरस्तोत्रम् सम्पूर्णम् ॥

## अर्धनारीश्वरस्तोत्रम् [19]

(श्री शङ्कराचार्य कृतम्)

चाम्पेयगौरार्धशरीरकायै कर्पूरगौरार्धशरीरकाय ।
धम्मिल्लकायै च जटाधराय नमः शिवायै च नमः शिवाय ॥ १ ॥

कस्तूरिकाकुङ्कुमचर्चितायै चितारजः पुञ्जविचर्चिताय ।
कृतस्मरायै विकृतस्मराय नमः शिवायै च नमः शिवाय ॥ २ ॥

झणत्क्वणत्कङ्कणनूपुरायै पादाब्जराजत्फणिनूपुराय ।
हेमाङ्गदायै भुजगाङ्गदाय नमः शिवायै च नमः शिवाय ॥ ३ ॥

विशालनीलोत्पललोचनायै विकासिपङ्केरुहलोचनाय।
समेक्षणायै विषमेक्षणाय नमः शिवायै च नमः शिवाय ॥ ४ ॥

मन्दारमालाकलितालकायै कपालमालाङ्कितकन्धराय।
दिव्याम्बरायै च दिगम्बराय नमः शिवायै च नमः शिवाय ॥ ५ ॥

अम्भोधरश्यामलकुन्तलायै तटित्प्रभाताम्रजटाधराय।
निरीश्वरायै निखिलेश्वराय नमः शिवायै च नमः शिवाय ॥ ६ ॥

प्रपञ्चसृष्ट्युन्मुखलास्यकायै समस्तसंहारकताण्डवाय।
जगज्जनन्यै जगदेकपित्रे नमः शिवायै च नमः शिवाय ॥ ७ ॥

प्रदीप्तरत्नोज्ज्वलकुण्डलायै स्फुरन्महापन्नगभूषणाय।
शिवान्वितायै च शिवान्विताय नमः शिवायै च नमः शिवाय ॥ ८ ॥

एतत्पठेदष्टकमिष्टदं यो भक्त्या स मान्यो भुवि दीर्घजीवी।
प्राप्नोति सौभाग्यमनन्तकालं भूयात्सदा तस्य समस्तसिद्धिः ॥ ९ ॥



## महामृत्युञ्जयस्तोत्रम् [20]

ॐ अस्य श्रीमहामृत्युञ्जयस्तोत्रमन्त्रस्य श्री मार्कण्डेय ऋषिः अनुष्टुप् छन्दः। श्रीमृत्युञ्जयो देवता। गौरी शक्तिः। मम सर्वारिष्ट समस्त मृत्युशान्त्यर्थं सकलैश्वर्य प्राप्त्यर्थं च जपे विनियोगः॥

॥ अथ ध्यानम् ॥

चन्द्रार्काग्नि विलोचनं स्मितमुखं पद्मद्वयान्तः स्थितं, मुद्रापाश-मृगाक्ष-सूत्रविलसत्पाणिं हिमांशुप्रभं । कोटीन्दु-प्रगलत्सुधाप्लुत तनुं हारादि भूषोज्ज्वलं, कान्तं विश्वविमोहनं पशुपतिं मृत्युञ्जयं भावये ॥

ॐ रुद्रं पशुपतिं स्थाणुं नीलकण्ठमुमापतिं ।
नमामि शिरसा देवं किं नो मृत्युः करिष्यति ॥ १ ॥

नीलकण्ठं कालमूर्तिं कालज्ञं कालनाशनं ।
नमामि शिरसा देवं किं नो मृत्युः करिष्यति ॥ २ ॥

नीलकण्ठं विरूपाक्षं निर्मलं निलयप्रभं ।
नमामि शिरसा देवं किं नो मृत्युः करिष्यति ॥ ३ ॥

वामदेवं महादेवं लोकनाथं जगद्गुरुं ।
नमामि शिरसा देवं किं नो मृत्युः करिष्यति ॥ ४ ॥

देवदेवं जगन्नाथं देवेशं वृषभध्वजं ।
नमामि शिरसा देवं किं नो मृत्युः करिष्यति ॥ ५ ॥

गङ्गाधरं महादेवं सर्वाभरण भूषितं ।
नमामि शिरसा देवं किं नो मृत्युः करिष्यति ॥ ६ ॥

अनाथः परमानन्दं कैवल्यपदगामिनं ।
नमामि शिरसा देवं किं नो मृत्युः करिष्यति ॥ ७ ॥

स्वर्गापवर्गदातारं सृष्टिस्थितिविनाशकं ।
नमामि शिरसा देवं किं नो मृत्युः करिष्यति ॥ ८ ॥

उत्पत्तिस्थिति संहारकर्तारमीश्वरं गुरुं।
नमामि शिरसा देवं किं नो मृत्युः करिष्यति ॥ ९ ॥
मार्कण्डेयकृतं स्तोत्रं यः पठेच्छिवसन्निधौ।
तस्य मृत्युभयं नास्ति नाग्निचोरभयं क्वचित् ॥ १० ॥
शतावृत्तं प्रकर्तव्यं संकटे कष्टनाशनं।
शुचिर्भूत्वा पठेत् स्तोत्रं सर्वसिद्धिप्रदायकं ॥ ११ ॥
मृत्युञ्जय महादेव त्राहि मां शरणागतं।
जन्ममृत्युजरारोगैः पीडितं कर्मबन्धनैः ॥ १२ ॥
तावकस्त्वद्गत प्राणस्त्वच्चित्तोऽहं सदा मृड।
इति विज्ञाप्य देवेशं त्र्यम्बकाख्यमनुं जपेत् ॥ १३ ॥
नमःशिवाय साम्बाय हरये परमात्मने।
प्रणत क्लेशनाशाय योगिनां पतये नमः ॥ १४ ॥

## शताङ्गायुर्मन्त्रः

ॐ ह्रीं श्रीं ह्रीं ह्रौं ह्रैं ह्रः हन हन दह दह पच पच गृहाण गृहाण मारय मारय मर्दय मर्दय महा महा भैरव भैरवरूपेण धूनय धूनय कम्पय कम्पय विघ्नय विघ्नय विश्वेश्वर क्षोभय क्षोभय कटु कटु मोहय हुं फट् स्वाहा। इति मन्त्रमत्रेण समाभीष्टो भवति ॥

इति श्रीमार्कण्डेयपुराणे मार्कण्डेयकृत महामृत्युञ्जयस्तोत्रं सम्पूर्णम् ॥

## मृतसञ्जीवनस्तोत्रम् [21]

॥ वसिष्ठकृतम् ॥

एवमाराध्य गौरीशं देवं मृत्युञ्जयेश्वरं ।
मृतसञ्जीवनं नाम्ना कवचं प्रजपेत् सदा ॥ १ ॥
सारात् सारतरं पुण्यं गुह्याद्गुह्यतरं शुभं ।
महादेवस्य कवचं मृतसञ्जीवनामकं ॥ २ ॥
समाहितमना भूत्वा शृणुष्व कवचं शुभं ।
शृत्वैतद्दिव्य कवचं रहस्यं कुरु सर्वदा ॥ ३ ॥
वराभयकरो यज्वा सर्वदेवनिषेवितः ।
**मृत्युञ्जयो** महादेवः प्राच्यां मां पातु सर्वदा ॥ ४ ॥
दधानः शक्तिमभयां त्रिमुखं षड्भुजः प्रभुः ।
सदाशिवोऽग्निरूपी मामाग्नेय्यां पातु सर्वदा ॥ ५ ॥
अष्टादशभुजोपेतो दण्डाभयकरो विभुः ।
यमरूपी महादेवो दक्षिणस्यां सदावतु ॥ ६ ॥
खड्गाभयकरो धीरो रक्षोगणनिषेवितः ।
रक्षोरूपी महेशो मां नैर्ऋत्यां सर्वदावतु ॥ ७ ॥
पाशाभयभुजः सर्वरत्नाकरनिषेवितः ।
वरुणात्मा महादेवः पश्चिमे मां सदावतु ॥ ८ ॥
गदाभयकरः प्राणनायकः सर्वदागतिः ।
वायव्यां मारुतात्मा मां शङ्करः पातु सर्वदा ॥ ९ ॥
शङ्खाभयकरस्थो मां नायकः परमेश्वरः ।

सर्वात्मान्तरदिग्भागे पातु मां शङ्करः प्रभुः ॥ १० ॥
शूलाभयकरः सर्वविद्यानामधिनायकः ।
ईशानात्मा तथैशान्यां पातु मां परमेश्वरः ॥ ११ ॥
ऊर्ध्वभागे ब्रह्मरूपी विश्वात्माऽधः सदावतु ।
शिरो मे शङ्करः पातु ललाटं चन्द्रशेखरः ॥ १२ ॥
भ्रूमध्यं सर्वलोकेशस्त्रिणेत्रो लोचनेऽवतु ।
भ्रूयुग्मं गिरिशः पातु कर्णौ पातु महेश्वरः ॥ १३ ॥
नासिकां मे महादेव ओष्ठौ पातु वृषध्वजः ।
जिह्वां मे दक्षिणामूर्तिर्दन्तान्मे गिरिशोऽवतु ॥ १४ ॥
मृत्युञ्जयो मुखं पातु कण्ठं मे नागभूषणः ।
पिनाकी मत्करौ पातु त्रिशूली हृदयं मम ॥ १५ ॥
पञ्चवक्त्रः स्तनौ पातु उदरं जगदीश्वरः ।
नाभिं पातु विरूपाक्षः पार्श्वौ मे पार्वतीपतिः ॥ १६ ॥
कटद्वयं गिरीशो मे पृष्ठं मे प्रमथाधिपः ।
गुह्यं महेश्वरः पातु ममोरू पातु भैरवः ॥ १७ ॥
जानुनी मे जगद्धर्ता जङ्घे मे जगदम्बिका ।
पादौ मे सततं पातु लोकवन्द्यः सदाशिवः ॥ १८ ॥
गिरिशः पातु मे भार्यां भवः पातु सुतान्मम ।
मृत्युञ्जयो ममायुष्यं चित्तं मे गणनायकः ॥ १९ ॥
सर्वाङ्गं मे सदा पातु कालकालः सदाशिवः ।

एतत्ते कवचं पुण्यं देवतानां च दुर्लभम् ॥ २० ॥
मृतसञ्जीवनं नाम्ना महादेवेन कीर्तितम् ।
सहस्रावर्तनं चास्य पुरश्चरणमीरितम् ॥ २१ ॥
यः पठेच्छृणुयान्नित्यं श्रावयेत्सु समाहितः ।
सकालमृत्युं निर्जित्य सदायुष्यं समश्नुते ॥ २२ ॥
हस्तेन वा यदा स्पृष्ट्वा मृतं सञ्जीवयत्यसौ ।
आधयोव्याधयस्तस्य न भवन्ति कदाचन ॥ २३ ॥
कालमृत्युमपि प्राप्तमसौ जयति सर्वदा ।
अणिमादिगुणैश्वर्यं लभते मानवोत्तमः ॥ २४ ॥
युद्धारम्भे पठित्वेदमष्टाविंशतिवारकं ।
युद्धमध्ये स्थितः शत्रुः सद्यः सर्वैर्न दृश्यते ॥ २५ ॥
न ब्रह्मादीनि चास्त्राणि क्षयं कुर्वन्ति तस्य वै ।
विजयं लभते देवयुद्धमध्येऽपि सर्वदा ॥ २६ ॥
प्रातरुत्थाय सततं यः पठेत्कवचं शुभं ।
अक्षय्यं लभते सौख्यमिह लोके परत्र च ॥ २७ ॥
सर्वव्याधिविनिर्मुक्तः सर्वरोगविवर्जितः ।
अजरामरणो भूत्वा सदा षोडशवार्षिकः ॥ २८ ॥
विचरव्यखिलान् लोकान् प्राप्य भोगांश्च दुर्लभान् ।
तस्मादिदं महागोप्यं कवचं समुदाहृतम् ॥ २९ ॥
मृतसञ्जीवनं नाम्ना दैवतैरपि दुर्लभम् ॥ ३० ॥

## शिवस्तोत्रम् [22]

( स्वामी विवेकानन्दः )

निखिलभुवनजन्मस्थेमभङ्गप्ररोहाः — अकलितमहिमानः कल्पिता यत्र तस्मिन् । सुविमलगगनाभे ईशसंस्थेऽप्यनीशे — मम भवतु भवेऽस्मिन् भासुरो भावबन्धः ॥ १ ॥

निहतनिखिलमोहेऽधीशता यत्र रूढा — प्रकटितपरप्रेम्ना यो महादेवसंज्ञः । अशिथिलपरिरंभः प्रेमरूपस्य यस्य—हृदि प्रणयति विश्वं व्याजमात्रं विभुत्वम् ॥ २ ॥

वहति विपुलवातः पूर्वसंस्काररूपः — विदलति बलवृन्दं घूर्णितेवोर्मिमाला । प्रचलति खलु युग्मं — युष्मदस्मत्प्रतीतं अतिविकलितरूपं नौमि चित्तं शिवस्थम् ॥ ३ ॥

जनकजनितभावो वृत्तयः संस्कृताश्च — अगणनबहुरूपो यत्र चैको यथार्थः । शमितविकृतिवाते यत्र नान्तर्बहिश्च — तमहह हरमीडे चित्तवृत्तेर्निरोधम् ॥ ४ ॥

गलिततिमिरमालः शुभ्रतेजः प्रकाशः — धवलकमलशोभः ज्ञानपुञ्जाट्टहासः । यमिजनहृदिगम्यो निष्कलो ध्यायमानः — प्रणतमवतु मां सः मानसो राजहंसः ॥ ५ ॥

दुरितदलनदक्षं दक्षजादत्तदोषं—कलितकलिकलङ्कं कम्रकह्ला-रकान्तम् । परहितकरणाय प्राणप्रच्छेदप्रीतं — नतनयननियुक्तं नीलकण्ठं नमामः ॥ ६ ॥

## निर्वाणषट्कम् [23]

(श्री शङ्कराचार्य कृतम्)

मनोबुद्ध्यहङ्कारचित्तानि नाहं
न च श्रोत्रजिह्वे न च घ्राणनेत्रे ।
न च व्योमभूमी न तेजो न वायु-
श्चिदानन्दरूपः शिवोऽहं शिवोऽहम् ॥ १ ॥

न च प्राणसंज्ञो न वै पञ्चवायु-
र्न वा सप्तधातुर्न वा पञ्चकोषाः ।
न वाक्पाणिपादं न चोपस्थपायू
चिदानन्दरूपः शिवोऽहं शिवोऽहम् ॥ २ ॥

न मे द्वेषरागौ न मे लोभमोहौ
मदो नैव मे नैव मात्सर्यभावः ।
न धर्मो न चार्थो न कामो न मोक्ष-
श्चिदानन्दरूपः शिवोऽहं शिवोऽहम् ॥ ३ ॥

न पुण्यं न पापं न सौख्यं न दुःखं
न मन्त्रो न तीर्थं न वेदा न यज्ञाः ।
अहं भोजनं नैव भोज्यं न भोक्ता
चिदानन्दरूपः शिवोऽहं शिवोऽहम् ॥ ४ ॥

न मृत्युर्न शङ्का न मे जातिभेदः
पिता नैव मे नैव माता न जन्म ।

न बन्धुर्न मित्रं गुरुर्नैव शिष्य-

श्चिदानन्दरूपः शिवोऽहं शिवोऽहम् ॥ ५ ॥

अहं निर्विकल्पो निराकाररूपो

विभुत्वाच्च सर्वत्र सर्वेन्द्रियाणाम् ।

न चासङ्गतं नैव मुक्तिर्न मेय-

श्चिदानन्दरूपः शिवोऽहं शिवोऽहम् ॥ ६ ॥



## कालभैरवाष्टकम् [24]

देवराज-सेव्यमान-पावनाङ्घ्रि-पङ्कजं

व्यालयज्ञसूत्र-मिन्दुशेखरं कृपाकरम् ।

नारदादि-योगिवृन्द-वन्दितं दिगम्बरं

काशिकापुराधिनाथ-कालभैरवं भजे ॥ १ ॥

भानु-कोटि-भास्वरं भवाब्धि-तारकं परं

नीलकण्ठ-मीप्सितार्थ-दायकं त्रिलोचनम् ।

कालकालमम्बुजाक्ष-मक्षशूल-मक्षरं

काशिकापुराधिनाथ-कालभैरवं भजे ॥ २ ॥

शूलटङ्क-पाशदण्डपाणि-मादिकारणं

श्यामकाय-मादिदेव-मक्षरं निरामयम् ।

भीमविक्रमं प्रभुं विचित्रताण्डवप्रियं

काशिकापुराधिनाथ-कालभैरवं भजे ॥ ३ ॥

भुक्ति-मुक्ति-दायकं प्रशस्त-चारुविग्रहं

भक्तवत्सलं स्थितं समस्त-लोक-विग्रहम् ।

विनिक्वणन्मनोज्ञ-हेमकिङ्किणी-लसत्कटिं

काशिकापुराधिनाथ-कालभैरवं भजे ॥ ४ ॥

धर्मसेतु-पालकं त्वधर्म-मार्ग-नाशकं

कर्मपाश-मोचकं सुशर्मदायकं विभुम् ।

स्वर्णवर्ण-शेषपाश-शोभिताङ्गमण्डलं

काशिकापुराधिनाथ-कालभैरवं भजे ॥ ५ ॥

रत्नपादुका-प्रभाभिराम-पादयुग्मकं

नित्यमद्वितीय-मिष्टदैवतं निरञ्जनम् ।

मृत्यु-दर्प-नाशनं करालदंष्ट्र-मोक्षणं

काशिकापुराधिनाथ-कालभैरवं भजे ॥ ६ ॥

अट्टहास-भिन्नपद्म-जाण्डकोश-सन्ततिं

दृष्टिपात-नष्टपाप-जालमुग्र-शासनम् ।

अष्टसिद्धि-दायकं कपाल-मालिकन्धरं

काशिकापुराधिनाथ-कालभैरवं भजे ॥ ७ ॥

भूतसंघ-नायकं विशालकीर्ति-दायकं

काशिवासलोक-पुण्यपाप-शोधकं विभुम् ।

नीतिमार्ग-कोविदं पुरातनं जगत्पतिं
काशिकापुराधिनाथ-कालभैरवं भजे ॥ ८ ॥
कालभैरवाष्टकं पठन्ति ये मनोहरं
ज्ञान-मुक्ति-साधनं विचित्र-पुण्य-वर्धनम् ।
शोक-मोह-दैन्य-लोभ-कोप-ताप-नाशनम्
ते प्रयान्ति कालभैरवाङ्घ्रि-सन्निधिं ध्रुवम् ॥ ९ ॥

**इति श्रीमच्छंकराचार्यविरचितं कालभैरवाष्टकं सम्पूर्णम् ॥**

## आदित्यहृदयम् [25]

**( वाल्मीकि रामायणे युद्धकाण्डे ११३ सर्गः )**

ततो युद्धपरिश्रान्तं समरे चिन्तया स्थितम् ।
रावणं चाग्रतो दृष्ट्वा युद्धाय समुपस्थितम् ॥ १ ॥
दैवतैश्च समागम्य द्रष्टुमभ्यागतो रणम् ।
उपागम्याब्रवीद्राम-मगस्त्यो भगवान् ऋषिः ॥ २ ॥
राम राम महाबाहो शृणु गुह्यं सनातनम् ।
येन सर्वानरीन् वत्स समरे विजयिष्यसि ॥ ३ ॥
आदित्यहृदयं पुण्यं सर्वशत्रुविनाशनम् ।
जयावहं जपेन्नित्य-मक्षय्यं परमं शिवम् ॥ ४ ॥
सर्वमङ्गल-माङ्गल्यं सर्वपापप्रणाशनम् ।
चिन्ताशोक-प्रशमन-मायुर्वर्धन-मुत्तमम् ॥ ५ ॥

रश्मिमन्तं समुद्यन्तं देवासुर-नमस्कृतम् ।

पूजयस्व विवस्वन्तं भास्करं भुवनेश्वरम् ॥ ६ ॥

सर्वदेवात्मको ह्येष तेजस्वी रश्मि-भावनः ।

एष देवासुरगणान् लोकान् पाति गभस्तिभिः ॥ ७ ॥

एष ब्रह्मा च विष्णुश्च शिवः स्कन्दः प्रजापतिः ।

महेन्द्रो धनदः कालो यमः सोमो ह्यपांपतिः ॥ ८ ॥

पितरो वसवः साध्या ह्यश्विनौ मरुतो मनुः ।

वायु-र्वह्निः प्रजाप्राण ऋतुकर्ता प्रभाकरः ॥ ९ ॥

आदित्यः सविता सूर्यः खगः पूषा गभस्तिमान् ।

सुवर्णसदृशो भानु-र्हिरण्यरेता दिवाकरः ॥ १० ॥

हरिदश्वः सहस्रार्चिः सप्तसप्ति-र्मरीचिमान् ।

तिमिरोन्मथनः शम्भुस्त्वष्टा मार्ताण्ड अंशुमान् ॥ ११ ॥

हिरण्यगर्भः शिशिरस्तपनो भास्करो रविः ।

अग्निगर्भोऽदितेः पुत्रः शंखः शिशिरनाशनः ॥ १२ ॥

व्योमनाथस्तमोभेदी ऋग्यजुस्सामपारगः ।

घनवृष्टिरपां मित्रो विन्ध्यवीथीप्लवङ्गमः ॥ १३ ॥

आतपी मण्डली मृत्युः पिङ्गलः सर्वतापनः ।

कविर्विश्वो महातेजाः रक्तः सर्वभवोद्भवः ॥ १४ ॥

नक्षत्रग्रहताराणा-मधिपो विश्वभावनः ।

तेजसामपि तेजस्वी द्वादशात्मन्नमोऽस्तु ते ॥ १५ ॥

नमः पूर्वाय गिरये पश्चिमायाद्रये नमः ।
ज्योति-र्गणानां पतये दिनाधिपतये नमः ॥ १६ ॥

जयाय जयभद्राय हर्यश्वाय नमो नमः ।
नमो नमः सहस्रांशो आदित्याय नमो नमः ॥ १७ ॥

नम उग्राय वीराय सारङ्गाय नमो नमः ।
नमः पद्मप्रबोधाय मार्ताण्डाय नमो नमः ॥ १८ ॥

ब्रह्मेशानाच्युतेशाय सूर्यायादित्यवर्चसे ।
भास्वते सर्वभक्षाय रौद्राय वपुषे नमः ॥ १९ ॥

तमोघ्नाय हिमघ्नाय शत्रुघ्नायामितात्मने ।
कृतघ्नघ्नाय देवाय ज्योतिषां पतये नमः ॥ २० ॥

तप्तचामीकराभाय वह्नये विश्वकर्मणे ।
नमस्तमोऽभिनिघ्नाय रुचये लोकसाक्षिणे ॥ २१ ॥

नाशयत्येष वै भूतं तदेव सृजति प्रभुः ।
पायत्येष तपत्येष वर्षत्येष गभस्तिभिः ॥ २२ ॥

एष सुप्तेषु जागर्ति भूतेषु परिनिष्ठितः ।
एष एवाग्निहोत्रं च फलं चैवाग्निहोत्रिणाम् ॥ २३ ॥

वेदाश्च ऋतवश्चैव ऋतूनां फलमेव च ।
यानि कृत्यानि लोकेषु सर्व एष रविः प्रभुः ॥ २४ ॥

**फलश्रुतिः**

एन-मापत्सु कृच्छ्रेषु कान्तारेषु भयेषु च ।
कीर्तयन् पुरुषः कश्चिन्नावसीदति राघव ॥ २५ ॥

पूजयस्वैन-मेकाग्रो देवदेवं जगत्पतिम् ।
एतत् त्रिगुणितं जप्त्वा युद्धेषु विजयिष्यसि ॥ २६ ॥
अस्मिन् क्षणे महाबाहो रावणं त्वं वधिष्यसि ।
एवमुक्त्वा तदागस्त्यो जगाम च यथागतम् ॥ २७ ॥
एतच्छ्रुत्वा महातेजा नष्टशोकोऽभवत्तदा ।
धारयामास सुप्रीतो राघवः प्रयतात्मवान् ॥ २८ ॥
आदित्यं प्रेक्ष्य जप्त्वा तु परं हर्षमवाप्तवान् ।
त्रिराचम्य शुचिर्भूत्वा धनुरादाय वीर्यवान् ॥ २९ ॥
रावणं प्रेक्ष्य हृष्टात्मा युद्धाय समुपागमत् ।
सर्वयत्नेन महता वधे तस्य धृतोऽभवत् ॥ ३० ॥
अथ रवि-रवद-न्निरीक्ष्य रामं मुदितमनाः परमं प्रहृष्यमाणः ।
निशिचरपति-संक्षयं विदित्वा सुरगण-मध्यगतो वचस्त्वरेति ॥ ३१ ॥

## नवग्रहदेवता प्रार्थना [26]

सूर्यः शौर्यमथेन्दुरुच्चपदवीं सन्मङ्गलं मङ्गलः ।
सद्बुद्धिं च बुधो गुरुश्च गुरुतां शुक्रः सुखं शं शनिः ।
राहुर्बाहुबलं करोतु विपुलं केतुः कुलस्योन्नतिम् ।
नित्यं प्रीतिकरा भवन्तु भवतां सर्वे प्रसन्ना ग्रहाः ॥
आदित्यादि नवग्रह देवताभ्यो नमः ॥

## श्रीरामचन्द्रस्तवः [27]

( गोस्वामिश्रीतुलसीदास कृतम् )

उद्भवस्थितिसंहारकारिणीं क्लेशहारिणीम् । सर्वश्रेयस्करीं सीतां नतोऽहं रामवल्लभाम् ॥ १ ॥

यन्मायावशवर्ति विश्वमखिलं ब्रह्मादिदेवासुराः — यत्सत्त्वादमृषैव भाति सकलं रज्जौ यथाऽहेर्भ्रमः । यत्पादः प्लवमेव भाति हि भवाम्भोधेस्तितीर्षावताम् — वन्देऽहं तमशेषकारणपरं रामाख्यमीशं हरिम् ॥ २ ॥

प्रसन्नतां या न गताभिषेकत-स्तथा न मम्लौ वनवास दुःखतः । मुखाम्बुजश्री रघुनन्दनस्य मे—सदाऽस्तु सा मञ्जुलमङ्गलप्रदा ॥ ३ ॥

नीलाम्बुजश्यामलकोमलाङ्गं—सीतासमारोपितवामभागम् । पाणौ महासायकचारुचापं नमामि रामं रघुवंशनाथम् ॥ ४ ॥

मूलं धर्मतरोर्विवेकजलधेः पूर्णेन्दुमानन्ददं—वैराग्याम्बुजभास्करं त्वघहरं ध्वान्तापहं तापहम् । मोहाम्भोधरपुञ्जपाटनविधौ खे सम्भवं शङ्करम् । वन्दे ब्रह्मकुलकलङ्कशमनं श्रीरामभूपं प्रियम् ॥ ५ ॥

सान्द्रानन्दपयोदसौभगतनुं पीताम्बरं सुन्दरं—पाणौ बाणशरासनं कटिलसत्तूणीरभारं वरम् । राजीवायतलोचनं धृतजटाजूटेन संशोभितं — सीतालक्ष्मणसंयुतं पथिगतं रामाभिरामं भजे ॥ ६ ॥

कुन्देन्दीवर-सुन्दरावतिबलौ विज्ञान-धामावुभौ — शोभाढ्यौ

वरधन्विनौ श्रुतिनुतौ गोविप्रवृन्दप्रियौ । मायामानुषरूपिणौ रघुवरौ सद्धर्मवर्मौ हि तौ – सीतान्वेषणतत्परौ पथिगतौ भक्तिप्रदौ तौ हि नः ॥ ७ ॥

ब्रह्माम्भोधिसमुद्भवं कलिमलप्रध्वंसनं चाव्ययं श्रीमच्छम्भु-मुखेन्दुसुन्दरवरे संशोभितं सर्वदा । संसारामय-भेषजं सुमधुरं श्रीजानकीजीवनं – धन्यास्ते कृतिनः पिबन्ति सततं श्रीरामनामामृतम् ॥ ८ ॥

शान्तं शाश्वतमप्रमेयमनघं निर्वाणशान्तिप्रदं ब्रह्माशम्भु-फणीन्द्रसेव्यमनिशं वेदान्तवेद्यं विभुम् । रामाख्यं जगदीश्वरं सुरगुरुं मायामनुष्यं हरिं – वन्देऽहं करुणाकरं रघुवरं भूपाल-चूडामणिम् ॥ ९ ॥

केकीकण्ठाभनीलम् सुरवरविलसद्विप्रपादाब्जचिह्नम् । शोभाढ्यं पीतवस्त्रं सरसिजनयनं सर्वदा सुप्रसन्नम् । पाणौ नाराचचापं कपिनिकरयुतं बन्धुना सेव्यमानम् – नौमीड्यं जानकीशं रघुवरमनिशं पुष्पकारूढरामम् ॥ १० ॥

आर्तानामार्तिहन्तारं भीतानां भयनाशनम् । द्विषतां कालदण्डं तं रामचन्द्रं नमाम्यहम् ॥ ११ ॥

श्रीराघवं दशरथात्मजमप्रमेयं – सीतापतिं रघुकुलान्वय-रत्नदीपम् । आजानुबाहुमरविन्ददलायताक्षं – रामं निशाचर-विनाशकरं नमामि ॥ १२ ॥

वैदेहीसहितं सुरद्रुमतले हैमे महामण्डपे – मध्ये पुष्पकमासने मणिमये वीरासने सुस्थितम् । अग्रे वाचयति प्रभञ्जनसुते तत्त्वं मुनिभ्यः परं – व्याख्यान्तं भरतादिभिः परिवृतं रामं भजे श्यामलम् ॥ १३ ॥

नान्या स्पृहा रघुपते हृदयेऽस्मदीये – सत्यं वदामि च भवानखिलान्तरात्मा । भक्तिं प्रयच्छ रघुपुङ्गव निर्भरां मे कामादिदोषरहितं कुरु मानसं च ॥ १४ ॥

आपदामपहर्तारं दातारं सर्वसम्पदाम् । लोकाभिरामं श्रीरामं भूयो भूयो नमाम्यहम् ॥ १५ ॥

रामाय रामचन्द्राय रामभद्राय वेधसे । रघुनाथाय नाथाय सीतायाः पतये नमः ॥ १६ ॥

## कृष्णाष्टकम् [28]

(श्री शङ्कराचार्य कृतम्)

श्रियाश्लिष्टो विष्णुः स्थिरचरगुरुर्वेदविषयो
धियां साक्षी शुद्धो हरिरसुरहन्ताब्जनयनः ।
गदी शङ्खी चक्री विमलवनमाली स्थिररुचिः
शरण्यो लोकेशो मम भवतु कृष्णोऽक्षिविषयः ॥ १ ॥

यतः सर्वं जातं वियदनिलमुख्यं जगदिदं
स्थितौ निःशेषं योऽवति निजसुखांशेन मधुहा ।
लये सर्वं स्वस्मिन् हरति कलया यस्तु स विभुः
शरण्यो लोकेशो मम भवतु कृष्णोऽक्षिविषयः ॥ २ ॥

असूनायम्यादौ यमनियममुख्यैः सुकरणै-
निरुद्ध्येदं चित्तं हृदि विलयमानीय सकलम् ।
यमीड्यं पश्यन्ति प्रवरमतयो मायिनमसौ
शरण्यो लोकेशो मम भवतु कृष्णोऽक्षिविषयः ॥ ३ ॥

पृथिव्यां तिष्ठन् यो यमयति महीं वेद न धरा
यमित्यादौ वेदो वदति जगतामीशममलम् ।
नियन्तारं ध्येयं मुनिसुरनृणां मोक्षदमसौ
शरण्यो लोकेशो मम भवतु कृष्णोऽक्षिविषयः ॥ ४ ॥

महेन्द्रादिर्देवो जयति दितिजान् यस्य बलतो
न कस्य स्वातन्त्र्यं क्वचिदपि कृतौ यत्कृतिमृते ।
बलारातेर्गर्वं परिहरति योऽसौ विजयिनः
शरण्यो लोकेशो मम भवतु कृष्णोऽक्षिविषयः ॥ ५ ॥

विना यस्य ध्यानं व्रजति पशुतां सूकरमुखां
विना यस्य ज्ञानं जनिमृतिभयं याति जनता ।
विना यस्य स्मृत्या कृमिशतजनिं याति स विभुः
शरण्यो लोकेशो मम भवतु कृष्णोऽक्षिविषयः ॥ ६ ॥

नरातङ्कोट्टङ्कः शरणशरणो भ्रान्तिहरणो
घनश्यामो वामो व्रजशिशुवयस्योऽर्जुनसखः ।
स्वयम्भूर्भूतानां जनक उचिताचारसुखदः
शरण्यो लोकेशो मम भवतु कृष्णोऽक्षिविषयः ॥ ७ ॥

यदा धर्मग्लानिर्भवति जगतां क्षोभकरणी
तदा लोकस्वामी प्रकटितवपुः सेतुधृगजः ।
सतां धाता स्वच्छो निगमगणगीतो व्रजपतिः
शरण्यो लोकेशो मम भवतु कृष्णोऽक्षिविषयः ॥ ८ ॥

## जगन्नाथाष्टकम् [29]

कदाचित्कालिन्दीतटविपिनसङ्गीतकवरो
मुदा गोपीनारीवदनकमलास्वादमधुपः ।
रमाशंभुब्रह्मामरपतिगणेशार्चितपदो
जगन्नाथः स्वामी नयनपथगामी भवतु मे ॥ १ ॥
भुजे सव्ये वेणुं शिरसि शिखिपिच्छं कटितटे
दुकूलं नेत्रान्ते सहचरकटाक्षं विदधत् ।
सदा श्रीमद्वृन्दावनवसतिलीलापरिचयो
जगन्नाथः स्वामी नयनपथगामी भवतु मे ॥ २ ॥
महाम्भोधेस्तीरे कनकरुचिरे नीलशिखरे
वसन् प्रासादान्तः सहजबलभद्रेण बलिना ।
सुभद्रामध्यस्थः सकलसुरसेवावसरदो
जगन्नाथः स्वामी नयनपथगामी भवतु मे ॥ ३ ॥
कृपापारावारः सजलजलदश्रेणिरुचिरो
रमावाणीसोम स्फुरदमलपद्मोद्भवमुखैः ।

सुरेन्द्रैराराध्यः श्रुतिगणशिखागीतचरितो
जगन्नाथः स्वामी नयनपथगामी भवतु मे ॥ ४ ॥

रथारूढो गच्छन् पथि मिलितभूदेवपटलैः
स्तुतिप्रादुर्भावं प्रतिपदमुपाकर्ण्य सदयः ।
दयासिन्धुर्बन्धुः सकलजगतां सिन्धुसुतया
जगन्नाथः स्वामी नयनपथगामी भवतु मे ॥ ५ ॥

परब्रह्मापीडः कुवलयदलोत्फुल्लनयनो
निवासी नीलाद्रौ निहितचरणोऽनन्तशिरसि ।
रसानन्दो राधासरसवपुरालिङ्गनसुखो
जगन्नाथः स्वामी नयनपथगामी भवतु मे ॥ ६ ॥

न वै प्रार्थ्यं राज्यं न च कनकता भोगविभवे
न याचेऽहं रम्यां निखिलजनकाम्यां वरवधूम् ।
सदा काले काले प्रमथपतिना गीतचरितो
जगन्नाथः स्वामी नयनपथगामी भवतु मे ॥ ७ ॥

हर त्वं संसारं द्रुततरमसारं सुरपते
हर त्वं पापानां विततिमपरां यादवपते ।
अहो दीनानाथं निहितमचलं पातुमनिशं
जगन्नाथः स्वामी नयनपथगामी भवतु मे ॥ ८ ॥

जगन्नाथाष्टकं पुण्यं यः पठेत् प्रयतः शुचिः ।
सर्वपापविशुद्धात्मा विष्णुलोकं स गच्छति ॥ ९ ॥

## श्रीमदनमोहनाष्टकम् [30]

जय शंखगदाधर नीलकलेवर पीतपटाम्बर देहि पदम् ।
जय चन्दनचर्चित कुण्डलमण्डित कौस्तुभशोभित देहि पदम् ॥ १ ॥

जय पङ्कजलोचन मारविमोहन पापविखण्डन देहि पदम् ।
जय वेणुनिनादक रासविहारक वङ्किम सुन्दर देहि पदम् ॥ २ ॥

जय धीरधुरन्धर अद्भुतसुन्दर दैवतसेवित देहि पदम् ।
जय विश्वविमोहन मानसमोहन संस्थितिकारण देहि पदम् ॥ ३ ॥

जय भक्तजनाश्रय नित्यसुखालय अन्तिमबान्धव देहि पदम् ।
जय दुर्जनशासन केलिपरायण कालियमर्दन देहि पदम् ॥ ४ ॥

जय नित्यनिरामय दीनदयामय चिन्मय माधव देहि पदम् ।
जय पामरपावन धर्मपरायण दानवसूदन देहि पदम् ॥ ५ ॥

जय वेदविदांवर गोपवधूप्रिय वृन्दावनधन देहि पदम् ।
जय सत्यसनातन दुर्गतिभञ्जन सज्जनरञ्जन देहि पदम् ॥ ६ ॥

जय सेवकवत्सल करुणासागर वाञ्छितपूरक देहि पदम् ।
जय पूतधरातल देवपरात्पर सत्त्वगुणाकर देहि पदम् ॥ ७ ॥

जय गोकुलभूषण कंसनिषूदन सात्वतजीवन देहि पदम् ।
जय योगपरायण संसृतिवारण ब्रह्मनिरञ्जन देहि पदम् ॥ ८ ॥



श्रीः

## श्रीवेङ्कटेशप्रपत्तिः [31]

ईशानां जगतोऽस्य वेङ्कटपतेर्विष्णोः परां प्रेयसीं। तद्वक्षस्थलनित्यवासरसिकां तत्क्षान्तिसंवर्धिनीम् । पद्मालङ्कृत-पाणिपल्लवयुगां पद्मासनस्थां श्रियं वात्सल्यादिगुणोज्ज्वलां भगवतीं वन्दे जगन्मातरम् ॥ १ ॥

श्रीमन् कृपाजलनिधे कृतसर्वलोक । सर्वज्ञ शक्त नतवत्सल सर्वशेषिन् । स्वामिन् सुशील सुलभाश्रितपारिजात । श्रीवेङ्कटेश चरणौ शरणं प्रपद्ये ॥ २ ॥

आनूपुरार्पितसुजातसुगन्धिपुष्प–सौरभ्यसौरभकरौ समसन्नि-वेशौ । सौम्यौसदाऽनुभवनेऽपि नवानुभाव्यौ । श्रीवेङ्कटेश चरणौ शरणं प्रपद्ये ॥ ३ ॥

सद्योविकासिसमुदित्वरसान्द्ररागौ सौरभ्यनिर्भरसरोरुहसाम्य-वार्ताम् । सम्यक्षु साहसपदेषु विलेखयन्तौ । श्रीवेङ्कटेश चरणौ शरणं प्रपद्ये ॥ ४ ॥

रेखामयध्वजसुधाकलशातपत्र।वज्राङ्कुशाम्बुरुहकल्पकशङ्ख-चक्रैः । भव्यैरलङ्कृततलौ परतत्त्वचिह्नैः । श्रीवेङ्कटेश चरणौ शरणं प्रपद्ये ॥ ५ ॥

ताम्रोदरद्युतिपराजितपद्मरागौ । बाह्यैर्महोभिरभि भूत महेन्द्र-

नीलौ । उद्यन्नखांशुभिरुदस्त शशाङ्कभासौ । श्रीवेङ्कटेश चरणौ शरणं प्रपद्ये ॥ ६ ॥

सप्रेमभीति कमलाकरपल्लवाभ्यां । संवाहनेऽपि सपदि क्लममादधानौ । कान्तावावाङ्मन सगोचर सौकुमार्यौ । श्रीवेङ्कटेश चरणौ शरणं प्रपद्ये ॥ ७ ॥

लक्ष्मीमहीतदनुरूपनिजानुभाव । नीलादिदिव्यमहिषीकरपल्लवानाम् । आरुण्यसंक्रमणतः किल सान्द्ररागौ । श्रीवेङ्कटेश चरणौ शरणं प्रपद्ये ॥ ८ ॥

नित्यानमद्विधिशिवादिकिरीटकोटि । प्रत्युप्तदीप्तनवरत्नमहः प्ररोहैः । नीराजनाविधिमुदारमुपाददानौ । श्रीवेङ्कटेश चरणौ शरणं प्रपद्ये ॥ ९ ॥

विष्णोः पदे परम इत्युदितप्रशंसौ यौमध्व उत्स इति भोग्यतयाऽप्युपात्तौ । भूयस्तथेति तव पाणितलप्रदिष्टौ । श्रीवेङ्कटेश चरणौ शरणं प्रपद्ये ॥ १० ॥

पार्थाय तत्सदृशसारथिना त्वयैव । यौ दर्शितौ स्वचरणौ शरणं व्रजेति । भूयोऽपि मह्यमिह तौ करदर्शितौ ते । श्रीवेङ्कटेश चरणौ शरणं प्रपद्ये ॥ ११ ॥

मन्मूर्ध्नि कालियफणे विकटाटवीषु । श्रीवेङ्कटाद्रिशिखरे शिरसि श्रुतीनाम् । चित्तेऽप्यनन्यमनसां सममाहितौ ते ।

श्रीवेङ्कटेश चरणौ शरणं प्रपद्ये ॥ १२ ॥

अम्लानहृष्यदवनीतलकीर्णपुष्पौ। श्रीवेङ्कटाद्रिशिखराभरणाय-मानौ । आनन्दिताखिलमनोनयनौ तवैतौ। श्रीवेङ्कटेश चरणौ शरणं प्रपद्ये ॥ १३ ॥

प्रायः प्रपन्नजनताप्रथमावगाह्यौ । मातुस्स्तनाविव शिशोर-मृतायमानौ । प्राप्तौ परस्परतुलामतुलान्तरौ ते । श्रीवेङ्कटेश चरणौ शरणं प्रपद्ये ॥ १४ ॥

सत्त्वोत्तरैस्सततसेव्यपदाम्बुजेन। संसारतारकदयार्द्रदृगञ्चलेन। सौम्योपयन्तृमुनिना मम दर्शितौ ते । श्रीवेङ्कटेश चरणौ शरणं प्रपद्ये ॥ १५ ॥

श्रीश श्रिया घटिकया त्वदुपायभावे । प्राप्ये त्वयि स्वयमुपेयतया स्फुरन्त्या । नित्याश्रिताय निरवद्यगुणाय तुभ्यं स्यां किङ्करो वृषगिरीश न जातु मह्यम् ॥ १६ ॥

॥ इति श्रीवेङ्कटेशप्रपत्तिः ॥

## श्रीवेङ्कटेशमङ्गलाशासनम् [32]

श्रियःकान्ताय कल्याणनिधये निधयेऽर्थिनाम् ।
श्रीवेङ्कटनिवासाय श्रीनिवासाय मङ्गलम् ॥ १ ॥

लक्ष्मीसविभ्रमालोक सुभ्रूविभ्रमचक्षुषे ।
चक्षुषे सर्वलोकानां वेङ्कटेशाय मङ्गलम् ॥ २ ॥

श्रीवेङ्कटाद्रिशृङ्गाग्र मङ्गलाभरणाङ्घ्रये ।
मङ्गलानां निवासाय श्रीनिवासाय मङ्गलम् ॥ ३ ॥

सर्वावयवसौन्दर्यसम्पदा सर्वचेतसाम् ।
सदा संमोहनायास्तु वेङ्कटेशाय मङ्गलम् ॥ ४ ॥

नित्याय निरवद्याय सत्यानन्दचिदात्मने ।
सर्वान्तरात्मने श्रीमद्वेङ्कटेशाय मङ्गलम् ॥ ५ ॥

स्वतस्सर्वविदे सर्वशक्तये सर्वशेषिणे ।
सुलभाय सुशीलाय वेङ्कटेशाय मङ्गलम् ॥ ६ ॥

परस्मै ब्रह्मणे पूर्णकामाय परमात्मने ।
प्रयुञ्जे परतत्त्वाय वेङ्कटेशाय मङ्गलम् ॥ ७ ॥

आकालतत्त्वमश्रान्तमात्मनामनुपश्यताम् ।
अतृप्त्यमृतरूपाय वेङ्कटेशाय मङ्गलम् ॥ ८ ॥

प्रायस्स्वचरणौ पुंसां शरण्यत्वेन पाणिना ।
कृपयाऽऽदिशते श्रीमद्वेङ्कटेशाय मङ्गलम् ॥ ९ ॥

दयामृततरङ्गिण्यास्तरङ्गैरिव शीतलैः ।
अपाङ्गैः सिञ्चते विश्वं वेङ्कटेशाय मङ्गलम् ॥ १० ॥

स्रग्भूषाम्बरहेतीनां सुषमावहमूर्तये ।
सर्वार्तिशमनायास्तु वेङ्कटेशाय मङ्गलम् ॥ ११ ॥

श्रीवैकुण्ठविरक्ताय स्वामिपुष्करिणीतटे ।
रमया रममाणाय वेङ्कटेशाय मङ्गलम् ॥ १२ ॥

श्रीमत्सुन्दरजामातृमुनिमानसवासिने ।
सर्वलोकनिवासाय श्रीनिवासाय मङ्गलम् ॥ १३ ॥

मङ्गलाशासनपरैर्मदाचार्यपुरोगमैः ।
सर्वैश्च पूर्वैराचार्यैस्सत्कृतायास्तु मङ्गलम् ॥ १४ ॥

॥ इति श्रीवेङ्कटेशमङ्गलाशासनम् ॥

## श्रीजगद्धात्रीस्तोत्रम् [33]

(श्रीजगद्धात्री कल्पः)

आधारभूते चाधेये धृतिरूपे धुरन्धरे ।
ध्रुवे ध्रुवपदे धीरे जगद्धात्रि नमोऽस्तु ते ॥ १ ॥

शवाकारे शक्तिरूपे शक्तिस्थे शक्तिविग्रहे ।
शाक्ताचारप्रिये देवि जगद्धात्रि नमोऽस्तु ते ॥ २ ॥

जयदे जगदानन्दे जगदेकप्रपूजिते ।
जय सर्वगते दुर्गे जगद्धात्रि नमोऽस्तु ते ॥ ३ ॥

सूक्ष्मातिसूक्ष्मरूपे च प्राणापानादिरूपिणि ।
भावाभावस्वरूपे च जगद्धात्रि नमोऽस्तु ते ॥ ४ ॥

कालादिरूपे कालेशे कालाकाल विभेदिनि ।
सर्वस्वरूपे सर्वज्ञे जगद्धात्रि नमोऽस्तु ते ॥ ५ ॥

महाविघ्ने महोत्साहे महामाये वरप्रदे ।
प्रपञ्चसारे साध्वीशे जगद्धात्रि नमोऽस्तु ते ॥ ६ ॥

अगम्ये जगतामाद्ये माहेश्वरि वराङ्गने ।
अशेषरूपे रूपस्थे जगद्धात्रि नमोऽस्तु ते ॥ ७ ॥

द्विसप्तकोटिमन्त्राणां शक्तिरूपे सनातनि ।
सर्वशक्तिस्वरूपे च जगद्धात्रि नमोऽस्तु ते ॥ ८ ॥

तीर्थयज्ञतपोदानयोगसारे जगन्मयि ।
त्वमेव सर्वं सर्वस्थे जगद्धात्रि नमोऽस्तु ते ॥ ९ ॥

दयारूपे दयादृष्टे दयार्द्रे दुःखमोचनि ।
सर्वापत्तारिके दुर्गे जगद्धात्रि नमोऽस्तु ते ॥ १० ॥

अगम्यधामधामस्थे महायोगीशहृत्पुरे ।
अमेयभावकूटस्थे जगद्धात्रि नमोऽस्तु ते ॥ ११ ॥

## मीनाक्षीपञ्चरत्नम् [34]

(श्री शङ्कराचार्य कृतम्)

उद्यद्भानुसहस्रकोटिसदृशां केयूरहारोज्ज्वलां ।
बिम्बोष्ठीं स्मितदन्तपङ्क्तिरुचिरां पीताम्बरालङ्कृताम् ।
विष्णुब्रह्मसुरेन्द्रसेवितपदां तत्त्वस्वरूपां शिवां ।
मीनाक्षीं प्रणतोऽस्मि सन्ततमहं कारुण्यवारांनिधिम् ॥ १ ॥

मुक्ताहारलसत्किरीटरुचिरां पूर्णेन्दुवक्त्रप्रभां ।
शिञ्जन्नूपुरकिङ्किणीमणिधरां पद्मप्रभाभासुराम् ।
सर्वाभीष्टफलप्रदां गिरिसुतां वाणीरमासेविताम् ।
मीनाक्षीं प्रणतोऽस्मि सन्ततमहं कारुण्यवारांनिधिम् ॥ २ ॥

श्रीविद्यां शिववामभागनिलयां ह्रींकारमन्त्रोज्ज्वलां ।
श्रीचक्राङ्कितबिन्दुमध्यवसतिं श्रीमत्सभानायिकाम् ।
श्रीमत्षण्मुखविघ्नराजजननीं श्रीमज्जगन्मोहिनीम् ।
मीनाक्षीं प्रणतोऽस्मि सन्ततमहं कारुण्यवारांनिधिम् ॥ ३ ॥

श्रीमत्सुन्दरनायिकां भयहरां ज्ञानप्रदां निर्मलां ।
श्यामाभां कमलासनार्चितपदां नारायणस्यानुजाम् ।
वीणावेणुमृदङ्ग वाद्यरसिकां नानाविधामम्बिकाम् ।
मीनाक्षीं प्रणतोऽस्मि सन्ततमहं कारुण्यवारांनिधिम् ॥ ४ ॥

नानायोगिमुनीन्द्रहृत्सुवसतिं नानार्थसिद्धिप्रदां ।
नानापुष्पविराजिताङ्घ्रियुगलां नारायणेनार्चिताम् ।
नादब्रह्ममयीं परात्परतरां नानार्थतत्त्वात्मिकाम् ।
मीनाक्षीं प्रणतोऽस्मि सन्ततमहं कारुण्यवारांनिधिम् ॥ ५ ॥



# मीनाक्षीस्तोत्रम् [35]

(श्री शङ्कराचार्य कृतम्)

श्रीविद्ये शिववामभागनिलये श्रीराजराजार्चिते
श्रीनाथादिगुरुस्वरूपविभवे चिन्तामणीपीठिके ।
श्रीवाणीगिरिजानुताङ्घ्रिकमले श्रीशाम्भवि श्रीशिवे
मध्याह्ने मलयध्वजाधिपसुते मां पाहि मीनाम्बिके ॥ १ ॥

चक्रस्थेऽचपले चराचरजगन्नाथे जगत्पूजिते
आर्तालीवरदे नताभयकरे वक्षोजभारान्विते ।
विद्ये वेदकलापमौलिविदिते विद्युल्लताविग्रहे
मातः पूर्णसुधारसार्द्रहृदये मां पाहि मीनाम्बिके ॥ २ ॥

कोटीराङ्गदरत्नकुण्डलधरे कोदण्डबाणाञ्चिते
कोकाकारकुचद्वयोपरिलसत्प्रालम्बिहाराञ्चिते ।
शिञ्जन्नूपुरपादसारसमणिश्रीपादुकालङ्कृते
मद्दारिद्र्यभुजङ्गगारुडखगे मां पाहि मीनाम्बिके ॥ ३ ॥

ब्रह्मेशाच्युतगीयमानचरिते प्रेतासनान्तःस्थिते
पाशोदङ्कुशचापबाणकलिते बालेन्दुचूडाञ्चिते ।
बाले बालकुरङ्गलोलनयने बालार्ककोट्युज्ज्वले
मुद्राराधितदेवते मुनिनुते मां पाहि मीनाम्बिके ॥ ४ ॥

गन्धर्वामरयक्षपन्नगनुते गङ्गाधरालिङ्गिते
गायत्रीगरुडासने कमलजे सुश्यामले सुस्थिते ।

खातीते खलदारुपावकशिखे खद्योतकोट्युज्ज्वले
मन्त्राराधितदेवते मुनिनुते मां पाहि मीनाम्बिके ॥ ५ ॥
नादे नारदतुम्बुराद्यविनुते नादान्तनादात्मिके
नित्ये नीललतात्मिके निरुपमे नीवारशूकोपमे ।
कान्ते कामकले कदम्बनिलये कामेश्वराङ्कस्थिते
मद्विद्ये मदभीष्टकल्पलतिके मां पाहि मीनाम्बिके ॥ ६ ॥
वीणानादनिमीलितार्धनयने विस्रस्तचूलीभरे
ताम्बूलारुणपल्लवाधरयुते ताटङ्कहारान्विते ।
श्यामे चन्द्रकलावतंसकलिते कस्तूरिकाफालके
पूर्णे पूर्णकलाभिरामवदने मां पाहि मीनाम्बिके ॥ ७ ॥
शब्दब्रह्ममयी चराचरमयी ज्योतिर्मयी वाङ्मयी
नित्यानन्दमयी निरञ्जनमयी तत्त्वंमयी चिन्मयी ।
तत्त्वातीतमयी परात्परमयी मायामयी श्रीमयी
सर्वैश्वर्यमयी सदाशिवमयी मां पाहि मीनाम्बिके ॥ ८ ॥

## अम्बास्तोत्रम् [36]

(स्वामी विवेकानन्दः)

का त्वं शुभे शिवकरे सुखदुःखहस्ते
आघूर्णितं भवजलं प्रबलोर्मिभङ्गैः ।
शान्तिं विधातुमिह किं बहुधा विभग्नाम्
मातः प्रयत्नपरमासि सदैव विश्वे ॥ १ ॥

सम्पादयन्त्यविरतं त्वविरामवृत्ता
या वै स्थिता कृतफलं त्वकृतस्य नेत्री ।
सा मे भवत्वनुदिनं वरदा भवानी
जानाम्यहं ध्रुवमियं धृतकर्मपाशा ॥ २ ॥

किं वा कृतं किमकृतं क्व कपाललेखः
किं कर्म वा फलमिहास्ति हि यां विना भोः ।
इच्छागुणैर्नियमिता नियमाः स्वतन्त्रै-
र्यस्याः सदा भवतु सा शरणं ममाद्या ॥ ३ ॥

सन्तानयन्ति जलधिं जनिमृत्युजालम्
सम्भावयन्त्यविकृतं विकृतं विभग्नम् ।
यस्या विभूतय इहामितशक्तिपालाः
नाश्रित्य तां वद कुतः शरणं व्रजामः ॥ ४ ॥

मित्रे रिपौ त्वविषमं तव पद्मनेत्रम्
स्वस्थेऽसुखे त्ववितथस्तव हस्तपातः ।
छाया मृतेस्तव दया त्वमृतं च मात-
र्मुञ्चन्तु मां न परमे शुभदृष्टयस्ते ॥ ५ ॥

क्वाम्बा शिवा क्व गृणनं मम हीनबुद्धे-
र्दोर्भ्यां विधर्तुमिव यामि जगद्विधात्रीम् ।

चिन्त्यं श्रिया सुचरणं त्वभयप्रतिष्ठम्
सेवापरैरभिनुतं शरणं प्रपद्ये ॥ ६ ॥

या मा चिराय विनयत्यतिदुःखमार्गे-
रासिद्धितः स्वकलितैर्ललितैर्विलासैः ।
या मे मतिं सुविदधे सततं धरण्यां
साम्बा शिवा मम गतिः सफलेऽफले वा ॥ ७ ॥

## अन्नपूर्णास्तोत्रम् [37]

(श्री शङ्कराचार्य कृतम्)

नित्यानन्दकरी वराभयकरी सौन्दर्यरत्नाकरी
निर्धूताखिलघोरपावनकरी प्रत्यक्षमाहेश्वरी ।
प्रालेयाचलवंशपावनकरी काशीपुराधीश्वरी
भिक्षां देहि कृपावलम्बनकरी मातान्नपूर्णेश्वरी ॥ १ ॥

नानारत्नविचित्रभूषणकरी हेमाम्बराडम्बरी
मुक्ताहारविलम्बमानविलसद्वक्षोजकुम्भान्तरी ।
काश्मीरागुरुवासिता रुचिकरी काशीपुराधीश्वरी
भिक्षां देहि कृपावलम्बनकरी मातान्नपूर्णेश्वरी ॥ २ ॥

योगानन्दकरी रिपुक्षयकरी धर्मार्थनिष्ठाकरी
चन्द्रार्कानलभासमानलहरी त्रैलोक्यरक्षाकरी ।

सर्वैश्वर्यसमस्तवाञ्छितकरी काशीपुराधीश्वरी
भिक्षां देहि कृपावलम्बनकरी मातान्नपूर्णेश्वरी ॥ ३ ॥

कैलासाचलकन्दरालयकरी गौरी उमा शङ्करी
कौमारी निगमार्थगोचरकरी ओङ्कारबीजाक्षरी
मोक्षद्वारकपाटपाटनकरी काशीपुराधीश्वरी
भिक्षां देहि कृपावलम्बनकरी मातान्नपूर्णेश्वरी ॥ ४ ॥

दृश्यादृश्यप्रभूतपावनकरी ब्रह्माण्डभाण्डोदरी
लीलानाटकसूत्रभेदनकरी विज्ञानदीपाङ्कुरी ।
श्रीविश्वेशमनःप्रसादनकरी काशीपुराधीश्वरी
भिक्षां देहि कृपावलम्बनकरी मातान्नपूर्णेश्वरी ॥ ५ ॥

उर्वीसर्वजनेश्वरी भगवती मातान्नपूर्णेश्वरी
वेणीनीलसमानकुन्तलहरी नित्यान्नदानेश्वरी ।
सर्वानन्दकरी दशाशुभकरी काशीपुराधीश्वरी
भिक्षां देहि कृपावलम्बनकरी मातान्नपूर्णेश्वरी ॥ ६ ॥

आदिक्षान्तसमस्तवर्णनकरी शम्भोस्त्रिभावाकरी
काश्मीरा त्रिजनेश्वरी त्रिलहरी नित्याङ्कुरा शर्वरी ।
कामाकाङ्क्षकरी जनोदयकरी काशीपुराधीश्वरी
भिक्षां देहि कृपावलम्बनकरी मातान्नपूर्णेश्वरी ॥ ७ ॥

दर्वी स्वर्णविचित्ररत्नखचिता दक्षे करे संस्थिता
वामे स्वादुपयोधरी सहचरी सौभाग्यमाहेश्वरी ।
भक्ताभीष्टकरी दृशा शुभकरी काशीपुराधीश्वरी
भिक्षां देहि कृपावलम्बनकरी मातान्नपूर्णेश्वरी ॥ ८ ॥

चन्द्रार्कानलकोटिकोटिसदृशा चन्द्रांशुबिम्बाधरी
चन्द्रार्काग्निसमानकुण्डलधरी चन्द्रार्कवर्णेश्वरी ।
मालापुस्तकपाशाकाङ्कुशधरी काशीपुराधीश्वरी
भिक्षां देहि कृपावलम्बनकरी मातान्नपूर्णेश्वरी ॥ ९ ॥

क्षत्रत्राणकरी महाभयकरी माता कृपासागरी
साक्षान्मोक्षकरी सदा शिवकरी विश्वेश्वरश्रीधरी ।
दक्षाक्रन्दकरी निरामयकरी काशीपुराधीश्वरी
भिक्षां देहि कृपावलम्बनकरी मातान्नपूर्णेश्वरी ॥ १० ॥

अन्नपूर्णे सदापूर्णे शङ्करप्राणवल्लभे ।
ज्ञानवैराग्यसिद्ध्यर्थं भिक्षां देहि च पार्वति ॥ ११ ॥

माता मे पार्वती देवी पिता देवो महेश्वरः ।
बांन्धवाः शिवभक्ताश्च स्वदेशो भुवनत्रयम् ॥ १२ ॥



## इन्द्राक्षी स्तोत्रम् [38]

ॐ अस्य इन्द्राक्षी स्तोत्रमहामन्त्रस्य शचीपुरंदर ऋषिः अनुष्टुप् छन्दः। इन्द्राक्षी देवता। महालक्ष्मिर्बीजम्। भुवनेश्वरी शक्तिः। महेश्वरी कीलकम्। इन्द्राक्षी देवी प्रसाद सिद्ध्यर्थे जपे विनियोगः।

अथ करन्यासः

ॐ इन्द्राक्षीं अंगुष्टाभ्यां नमः।

ॐ महालक्ष्मी तर्जनीभ्यां नमः।

ॐ महेश्वरीं मध्यमाभ्यां नमः।

ॐ अम्बुजाक्षीं अनामिकाभ्यां नमः।

ॐ कात्यायनीं कनिष्ठिकाभ्यां नमः।

ॐ कौमारीं करतलकरपृष्ठाभ्यां नमः।

अथ अंगन्यासः

ॐ इन्द्राक्षीं हृदयाय नमः।

ॐ महालक्ष्मीं शिरसे स्वाहा।

ॐ महेश्वरीं शिखायै वषट्।

ॐ अम्बुजाक्षीं कवचाय हुं।

ॐ कात्यायनीं नेत्रत्रयाय वौषट्।

ॐ कौमारीं अस्त्राय फट्।

॥ भू-र्भुवस्सुवरोमिति दिग्बन्धः ॥

॥ अथ ध्यानम् ॥

नेत्राणां दशभिश्शतैः परिवृतामत्युग्र चर्माम्बरां ।
हेमाभां महतीं विलम्बित शिखा मा मुक्तकेशान्वितां
घन्टामण्डित पादपद्मयुगलां नागेन्द्रकुम्भस्तनीं ।
इन्द्राक्षीं परिचिन्तयामि सततं प्रत्यक्ष सिद्धिप्रदाम् ॥
इन्द्राक्षीं द्विभुजां देवीं पीतवस्त्रद्वयान्वितां ।
वामहस्ते वज्रधरां दक्षिणेन वरप्रदाम् ।
इन्द्राक्षीं नौमि युवतीं नानालंकार भूषितां ।
प्रसन्न वदनाम्भोजामप्सरो-गणसेविताम् ॥

॥ अथ इन्द्राक्षी स्तोत्र प्रारम्भः ॥

॥ इन्द्र उवाच ॥

इन्द्राक्षी पूर्वतः पातु पात्वाग्नेय्यां तथेश्वरी ।
कौमारी दक्षिणे पातु नैर्ऋत्यां पातु पार्वती ॥
वाराही पश्चिमे पातु वायव्ये नारसिंह्यपि ।
उदीच्यां कालरात्रिर्मामीशान्यां सर्वशक्तयः ॥
भैरव्यूर्ध्वं सदा पातु पात्वधो वैष्णवी तथा ।
एवं दशदिशो रक्षेत्सर्वाङ्गं भुवनेश्वरी ॥
इन्द्राक्षी नाम सा देवी दैवतैः समुदाहृता ।
गौरी शाकम्भरी देवी दुर्गानाम्नीति विश्रुता ॥
कात्यायनी महादेवी चण्डघंटा महातपा ।

सावित्री सा च गायत्री ब्रह्माणी ब्रह्मवादिनी ॥
नारायणी भद्रकाली रुद्राणी कृष्ण पिङ्गला ।
अग्निज्वाला रौद्रमुखी कालरात्री तपस्विनी ॥
मेघस्वना सहस्राक्षी विकटाङ्गी जडोदरी ।
महोदरी मुक्तकेशी घोररूपा महाबला ॥
अजिता भद्रदाऽनन्ता रोगहर्त्री शिवप्रिया ।
शिवदूती कराली च शक्तिश्च परमेश्वरी ॥
आर्या दाक्षायणी चैव गिरिजा मेनकात्मजा ।
महिषासुर संहारी चामुण्डा सप्तमातृका ॥
सर्वरोग प्रशमनी नारायणी नमोऽस्तुते ।
इन्द्राणी चेन्द्ररूपा च इन्द्रशक्तिः परायणी ॥
वाराही नारसिंही च भीमा भैरव नादिनी ।
सदा संमोहिनी देवी सुन्दरी भुवनेश्वरी ।
एकाक्षरी महामायी एकाङ्गी एकनायकी ॥
कोमल श्यामलारूपी कोटिसूर्यप्रकाशिनी ।
श्रुतिः स्मृतिर्धृतिर्मेधा विद्या लक्ष्मीः सरस्वती ॥
अनन्ता विजयाऽपर्णा मानस्तोकाऽपराजिता ।
भवानी पार्वती दुर्गा हैमवत्यम्बिका जया ॥
शिवा भवानी रुद्राणी शङ्करार्धशरीरिणी ।
ऐरावत गजारूढा वज्रहस्ता धनुर्धरा ॥

ऐन्द्री देवी सदाकालं शान्तिमाशु करोतु मे ।
एतैर्नाम पदैर्दिव्यैः स्तुता शक्रेण धीमता ।
आयुरारोग्यमैश्वर्यमपमृत्युभयापहं ।
क्षयाऽपस्मारकुष्ठादि तापज्वर निवारणं ।
शीतज्वर निवारणं उष्णज्वर निवारणं ।
सन्निज्वर निवारणं सर्वज्वर निवारणं ।
सर्वरोग निवारणं सर्वशत्रु निवारणं ।
महाभय निवारणं मनःक्लेश निवारणं ।
शतमावर्तयेद्यस्तु मुच्यते व्याधिबन्धनात् ।
आवर्तयन् सहस्रं तु लभते वाञ्छितं फलं ।
एतत् स्तोत्रं जपेन्नित्यं सर्वव्याधिविनाशनं ।
रणे राजभये चोरे सर्वत्र विजयी भवेत् ॥
सर्व मङ्गल माङ्गल्ये शिवे सर्वार्थ साधिके ।
शरण्ये त्र्यम्बिके गौरि नारायणि नमोऽस्तुते ॥
त्रिपाद्भस्म प्रहरणस्त्रिशिरा रक्तलोचनः ।
स मे प्रीतः सुखं दद्यात् सर्वामय पतिर्ज्वरः ।
ज्वरं च ज्वरसारं च ज्वरातीसारमेव च ।
सन्निपात ज्वरं चैव शीतोष्ण ज्वरमेव च ।
कौबेरन्ते मुखं रौद्रं नन्दिमन्नन्दिमावह ।
ज्वरं मृत्युभयं घोरं ज्वरं नाशये मे ज्वर ।

भस्मायुधाय विद्महे रक्तनेत्राय धीमहि।
तन्नो ज्वरः प्रचोदयात्॥
ज्वरराजाय विद्महे त्रिशिरस्काय धीमहि।
तन्नस्त्रिपात् प्रचोदयात्॥
मृत्योस्तुल्यं त्रिलोकीं ग्रसितु-
मतिरसान्निस्सृताः किंनु जिह्वाः
किं वा कृष्णांघ्रिपद्मद्युतिभि-
ररुणिता विष्णुपद्याः पदव्यः।
प्राप्ताः संध्याः स्मरारेः स्वयमुत
नुतिभिस्तिस्र इत्यूह्यमानाः
दिव्यैर्देव्या स्त्रिशूलक्षत-
महिषजुषो रक्तधारा जयन्ति॥

मातर्मे मधुकैटभघ्नि महिषप्राणापहारोद्यमे
हेला-निर्मित-धूम्रलोचन-वधे हे चण्डमुण्डार्दिनि।
निःशेषीकृत-रक्तबीजदनुजे नित्ये निशुम्भापहे
शुम्भध्वंसिनि संहराशु दुरितं दुर्गे नमस्तेऽम्बिके॥

अष्टौ भुजाङ्गीं महिषस्य मर्दिनीं
सशंखचक्रां शरशूलधारिणीं।
तां दिव्ययोगीं सहजातवेदसीं
दुर्गां सदाऽहं शरणं प्रपद्ये॥

महिषमस्तकनृत्तविनोदन-

स्फुटरणन्मणिनूपुरमेखला ।

जननरक्षणमोक्षविधायिनी

जयतु शुम्भनिशुम्भनिषूदिनी ॥

ब्रह्माणी कमलेन्दुसौम्यवदना माहेश्वरी लीलया

कौमारी रिपुदर्पनाशनकरी चक्रायुधा वैष्णवी ।

वाराही घनघोरघर्घरमुखी दंष्ट्री च चक्रायुधा

चामुण्डा गणनाथरुद्रसहिता रक्षन्तु मां मातरः ॥

उद्धतौ मधुकैटभौ महिषासुरं तु निहत्य तं

धूम्रलोचन- चण्डमुण्डक- रक्तबीजमुखांश्च तान् ।

दुष्ट-शुम्भनिशुम्भमर्दिनि नन्दितामरवन्दिते

विष्टपत्रय-पुष्टिकारिणि भद्रकालि नमोऽस्तुते ॥

लक्ष्मी-प्रदान-समये नवविद्रुमाभां

विद्या-प्रदान-समये शरदिन्दु शुभ्रां ।

विद्वेषि वर्गविजयेऽपि तमाल-नीलां

देवीं त्रिलोक-जननीं शरणं प्रपद्ये ॥

श्री महादेव्यै नमः ॥

इन्द्राक्षीस्तोत्रं सम्पूर्णम् ॥

(श्रीमार्कण्डेयपुराणम्)

# कनकधारास्तोत्रम् [39]

( कनकलक्ष्मी स्तवः )

(श्री शङ्कराचार्य कृतम्)

अङ्गं हरेः पुलक-भूषणमाश्रयन्ती । भृङ्गाङ्गनेव मुकुलाभरणं तमालम् । अङ्गीकृताखिल-विभूतिरपाङ्गलीला । माङ्गल्यदाऽस्तु मम मङ्गलदेवतायाः ॥ १ ॥

मुग्धा मुहुर्विदधती वदने मुरारेः । प्रेमत्रपाप्रणिहितानि गतागतानि । मालादृशोर्मधुकरीव महोत्पले या । सा मे श्रियं दिशतु सागरसम्भवायाः ॥ २ ॥

विश्वामरेन्द्र–पदविभ्रमदानदक्षमानन्द –हेतुरधिकं मधुविद्विषोऽपि । ईषन्निषीदतु मयि क्षणमीक्षणार्धमिन्दीवरोदर–सहोदर-मिन्दिरायाः ॥ ३ ॥

आमीलिताक्षमधिगम्य मुदा मुकुन्दमानन्दकन्दमनिमेष-मनङ्गतन्त्रम् । आकेकरस्थितकनीनिकपक्ष्मनेत्रम् भूत्यै भवेन्मम भुजङ्गशयाङ्गनायाः ॥ ४ ॥

बाह्वन्तरे मुरजितःश्रितकौस्तुभे या । हारावलीव हरिनीलमयी विभाति । कामप्रदा भगवतोऽपि कटाक्षमाला । कल्याणमावहतु मे कमलालयायाः ॥ ५ ॥

कालाम्बुदालि ललितोरसि कैटभारेः । धाराधरे स्फुरति या

तडिदङ्गनेव । मातुस्समस्तजगतां महनीय मूर्तिः । भद्राणि मे दिशतु भार्गवनन्दनायाः ॥ ६ ॥

प्राप्तं पदं प्रथमतः खलु यत्प्रभावान्माङ्गल्यभाजि मधुमाथिनि मन्मथेन । मय्यापतेत्तदिह मन्थरमीक्षणार्धम् । मन्दालसं च मकराकर- कन्यकायाः ॥ ७ ॥

दद्याद्दयानुपवनो द्रविणाम्बुधारामस्मिन्नकिञ्चन विहङ्गशिशौ विषण्णे । दुष्कर्मघर्ममपनीय चिराय दूरम् । नारायणप्रणयिनी नयनाम्बुवाहः ॥ ८ ॥

इष्टा विशिष्टमतयोऽपि नरा यया द्राक् । दृष्टास्त्रिविष्टपपदं सुलभं भजन्ते । दृष्टिः प्रहृष्टकमलोदर-दीप्तिरिष्टाम् । पुष्टिं कृषीष्ट मम पुष्कर- विष्टरायाः ॥ ९ ॥

गीर्देवतेति गरुडध्वजसुन्दरीति । शाकम्भरीति शशिशेखर-वल्लभेति । सृष्टिस्थितिप्रलय-केलिषु संस्थितायै । तस्यै नमस्त्रिभुवनैक गुरोस्तरुण्यै ॥ १० ॥

श्रुत्यै नमोऽस्तु शुभकर्मफलप्रसूत्यै । रत्यै नमोऽस्तु रमणीय गुणार्णवायै । शक्त्यै नमोऽस्तु शतपत्रनिकेतनायै । पुष्ट्यै नमोऽस्तु पुरुषोत्तम- वल्लभायै ॥ ११ ॥

नमोऽस्तु नालीकनिभाननायै । नमोऽस्तु दुग्धोदधि जन्मभूम्यै । नमोऽस्तु सोमामृतसोदरायै । नमोऽस्तु नारायण-वल्लभायै ॥ १२ ॥

नमोऽस्तु हेमाम्बुजपीठिकायै । नमोऽस्तु भूमण्डलनायिकायै । नमोऽस्तु देवादि- दयापरायै । नमोऽस्तु शार्ङ्गायुधवल्लभायै ॥ १३ ॥

नमोऽस्तु देव्यै भृगुनन्दनायै । नमोऽस्तु विष्णोरुरसि स्थितायै । नमोऽस्तु लक्ष्म्यै कमलालयायै । नमोऽस्तु दामोदर -वल्लभायै ॥ १४ ॥

नमोऽस्तु कान्त्यै कमलेक्षणायै । नमोऽस्तु भूत्यै भुवन-प्रसूत्यै । नमोऽस्तु देवादिभिरर्चितायै । नमोऽस्तु नन्दात्मज वल्लभायै ॥ १५ ॥

सम्पत्कराणि सकलेन्द्रियनन्दनानि । साम्राज्यदान-निरतानि सरोरुहाक्षि । त्वद्वन्दनानि दुरिताहरणोद्यतानि । मामेव मातरनिशं कलयन्तु मान्ये ॥ १६ ॥

यत्कटाक्ष-समुपासनाविधिः । सेवकस्य सकलार्थसम्पदः । सन्तनोति वचनाङ्गमानसैः । त्वां मुरारिहृदयेश्वरीं भजे ॥ १७ ॥

सरसिजनिलये सरोजहस्ते । धवलतमांशुकगन्धमाल्य-शोभे । भगवति हरिवल्लभे मनोज्ञे । त्रिभुवनभूतिकरि प्रसीद मह्यम् ॥ १८ ॥

दिग्घस्तिभिः कनककुम्भमुखावसृष्टस्वर्वाहिनी-विमलचारुजल प्लुताङ्गीम् । प्रातर्नमामि जगतां जननीमशेषलोकादिनाथ- गृहिणी -ममृताब्धिपुत्रीम् ॥ १९ ॥

कमले कमलाक्षवल्लभे त्वं । करुणापूर तरङ्गितै-रपाङ्गैः । अवलोकय मामकिंचनानाम् । प्रथमं पात्रमकृत्रिमन्दयायाः ॥ २० ॥

स्तुवन्ति ये स्तुतिभिरमूभिरन्वहम् । त्रयीमयीं त्रिभुवनमातरं रमाम् । गुणाधिका गुरुतरभाग्यभाजिनो । भवन्ति ते भुवि बुधभाविताशयाः ॥ २१ ॥

## महालक्ष्म्यष्टकम् [40]

(पद्मपुराणम्)

नमस्तेऽस्तु महामाये श्रीपीठे सुरपूजिते ।
शङ्खचक्रगदाहस्ते महालक्ष्मि नमोऽस्तु ते ॥ १ ॥

नमस्ते गरुडारूढे कोलासुरभयङ्करि ।
सर्वपापहरे देवि महालक्ष्मि नमोऽस्तु ते ॥ २ ॥

सर्वज्ञे सर्ववरदे सर्वदुष्टभयङ्करि ।
सर्वदुःखहरे देवि महालक्ष्मि नमोऽस्तु ते ॥ ३ ॥

सिद्धिबुद्धिप्रदे देवि भुक्तिमुक्तिप्रदायिनि ।
मन्त्रमूर्ते सदा देवि महालक्ष्मि नमोऽस्तु ते ॥ ४ ॥

आद्यन्तरहिते देवि आद्यशक्तिमहेश्वरि ।
योगजे योगसम्भूते महालक्ष्मि नमोऽस्तु ते ॥ ५ ॥

स्थूलसूक्ष्ममहारौद्रे महाशक्तिमहोदरे ।
महापापहरे देवि महालक्ष्मि नमोऽस्तु ते ॥ ६ ॥

पद्मासनस्थिते देवि परब्रह्मस्वरूपिणि ।
परमेशि जगन्मातर्महालक्ष्मि नमोऽस्तु ते ॥ ७ ॥

श्वेताम्बरधरे देवि नानालङ्कारभूषिते ।
जगत्स्थिते जगन्मातर्महालक्ष्मि नमोऽस्तु ते ॥ ८ ॥
महालक्ष्म्यष्टकस्तोत्रं यः पठेद् भक्तिमान्नरः ।
सर्वसिद्धिमवाप्नोति राज्यं प्राप्नोति सर्वदा ॥ ९ ॥
एककाले पठेन्नित्यं महापापविनाशनम् ।
द्विकालं यः पठेन्नित्यं धनधान्यसमन्वितः ॥ १० ॥
त्रिकालं यः पठेन्नित्यं महाशत्रुविनाशनम् ।
महालक्ष्मीर्भवेन्नित्यं प्रसन्ना वरदा शुभा ॥ ११ ॥

## श्रीसरस्वतीस्तोत्रम् [41]

या कुन्देन्दुतुषारहारधवला या शुभ्रवस्त्रान्विता या वीणावरदण्डमण्डितकरा या श्वेतपद्मासना । या ब्रह्माच्युतशङ्करप्रभृतिभिर्देवैः सदा पूजिता । सा मां पातु सरस्वती भगवती निःशेषजाड्यापहा ॥ १ ॥

आशासु राशीभवदङ्गवल्ली भासैव दासीकृतदुग्धसिन्धुम् । मन्दस्मितैर्निन्दितशारदेन्दुं वन्देऽरविन्दासनसुन्दरि त्वाम् ॥ २ ॥

शारदा शारदाम्भोजवदना वदनाम्बुजे । सर्वदा सर्वदास्माकं सन्निधिं सन्निधिं क्रियात् ॥ ३ ॥

सरस्वतीं च तां नौमि वागधिष्ठातृदेवताम् । देवत्वं प्रतिपद्यन्ते यदनुग्रहतो जनाः ॥ ४ ॥

पातु नो निकषग्रावा मतिहेम्नः सरस्वती । प्राज्ञेतरपरिच्छेदं वचसैव करोति या ॥ ५ ॥

शुक्लां ब्रह्मविचारसारपरमामाद्यां जगद्व्यापिनीं । वीणापुस्तकधारिणीमभयदां जाड्यान्धकारापहाम् । हस्ते स्फाटिकमालिकां च दधतीं पद्मासने संस्थितां — वन्दे तां परमेश्वरीं भगवतीं बुद्धिप्रदां शारदाम् ॥ ६ ॥

वीणाधरे विपुलमङ्गलदानशीले भक्तार्तिनाशिनि विरिञ्चिहरीशवन्द्ये । कीर्तिप्रदेऽखिलमनोरथदे महार्हे — विद्याप्रदायिनि सरस्वति नौमि नित्यम् ॥ ७ ॥

श्वेताब्जपूर्णविमलासनसंस्थिते हे — श्वेताम्बरावृतमनोहरमञ्जुगात्रे । उद्यन्मनोज्ञसितपङ्कजमञ्जुलास्ये विद्याप्रदायिनि सरस्वति नौमि नित्यम् ॥ ८ ॥

मातस्त्वदीयपदपङ्कजभक्तियुक्ता — ये त्वां भजन्ति निखिलानपरान्विहाय । ते निर्जरत्वमिह यान्ति कलेवरेणभूवह्निवायुगगनाम्बुविनिर्मितेन ॥ ९ ॥

मोहान्धकारभरिते हृदये मदीये — मातः सदैव कुरु वासमुदारभावे । स्वीयाखिलावयवनिर्मलसुप्रभाभिः — शीघ्रं विनाशय मनोगतमन्धकारम् ॥ १० ॥

ब्रह्मा जगत् सृजति पालयतीन्दिरेशः — शम्भुर्विनाशयति देवि

तव प्रभावैः । न स्यात्कृपा यदि तव प्रकटप्रभावे – न स्युः कथञ्चिदपि ते निजकार्यदक्षाः ॥ ११ ॥

लक्ष्मीर्मेधा धरा पुष्टिर्गौरी तुष्टिः प्रभा धृतिः । एताभिः पाहि तनुभिरष्टाभिर्मां सरस्वति ॥ १२ ॥

सरस्वत्यै नमो नित्यं भद्रकाल्यै नमो नमः । वेदवेदान्त-वेदाङ्गविद्यास्थानेभ्य एव च ॥ १३ ॥

सरस्वति महाभागे विद्ये कमललोचने । विद्यारूपे विशालाक्षि विद्यां देहि नमोऽस्तु ते ॥ १४ ॥

यदक्षरं पदं भ्रष्टं मात्राहीनं च यद्भवेत् । तत्सर्वं क्षम्यतां देवि प्रसीद परमेश्वरि ॥ १५ ॥

## श्रीगङ्गास्तोत्रम् [42]

( श्री शङ्कराचार्य कृतम् )

देवि सुरेश्वरि भगवति गङ्गे त्रिभुवनतारिणि तरलतरङ्गे ।
शङ्करमौलिविहारिणि विमले मम मतिरास्तां तव पदकमले ॥ १ ॥

भागीरथि सुखदायिनि मातस्तव जलमहिमा निगमे ख्यातः ।
नाहं जाने तव महिमानं पाहि कृपामयि मामज्ञानम् ॥ २ ॥

हरिपदपाद्यतरङ्गिणि गङ्गे हिमविधुमुक्ताधवलतरङ्गे ।
दूरीकुरु मम दुष्कृतिभारं कुरु कृपया भवसागरपारम् ॥ ३ ॥

तव जलममलं येन निपीतं परमपदं खलु तेन गृहीतम् ।

मातर्गङ्गे त्वयि यो भक्तः किल तं द्रष्टुं न यमः शक्तः ॥ ४ ॥

पतितोद्धारिणि जाह्नवि गङ्गे खण्डितगिरिवरमण्डितभङ्गे ।
भीष्मजननि हे मुनिवरकन्ये पतितनिवारिणि त्रिभुवनधन्ये ॥ ५ ॥

कल्पलतामिव फलदां लोके प्रणमति यस्त्वां न पतति शोके ।
पारावारविहारिणि गङ्गे विमुखयुवतिकृततरलापाङ्गे ॥ ६ ॥

तव चेन्मातः स्रोतः स्नातः पुनरपि जठरे सोऽपि न जातः ।
नरकनिवारिणि जाह्नवि गङ्गे कलुषविनाशिनि महिमोत्तुङ्गे ॥ ७ ॥

पुनरसदङ्गे पुण्यतरङ्गे जय जय जाह्नवि करुणापाङ्गे ।
इन्द्रमुकुटमणिराजितचरणे सुखदे शुभदे भृत्यशरण्ये ॥ ८ ॥

रोगं शोकं तापं पापं हर मे भगवति कुमतिकलापम् ।
त्रिभुवनसारे वसुधाहारे त्वमसि गतिर्मम खलु संसारे ॥ ९ ॥

अलकानन्दे परमानन्दे कुरु करुणामयि कातरवन्द्ये ।
तव तटनिकटे यस्य निवासः खलु वैकुण्ठे तस्य निवासः ॥ १० ॥

वरमिह नीरे कमठो मीनः किं वा तीरे शरटः क्षीणः ।
अथवा श्वपचो मलिनो दीनस्तव न हि दूरे नृपतिकुलीनः ॥ ११ ॥

भो भुवनेश्वरि पुण्ये धन्ये देवि द्रवमयि मुनिवरकन्ये ।
गङ्गास्तवमिममलं नित्यं पठति नरो यः स जयति सत्यम् ॥ १२ ॥

येषां हृदये गङ्गाभक्तिस्तेषां भवति सदा सुखमुक्तिः ।
मधुराकान्तापज्झटिकाभिः परमानन्दकलित-ललिताभिः ॥ १३ ॥

गङ्गास्तोत्रमिदं भवसारं वाञ्छितफलदं विमलं सारम् ।
शङ्करसेवक शङ्कररचितं पठति सुखी स्तव इति च समाप्तम् ॥ १४ ॥

## यमुनाष्टकम् [43]

(श्री शङ्कराचार्य कृतम्)

मुरारिकायकालिमाललामवारिधारिणी
तृणीकृतत्रिविष्टपा त्रिलोकशोकहारिणी ।
मनोऽनुकूलकूलकुञ्जपुञ्जधूतदुर्मदा
धुनोतु नो मनोमलं कलिन्दनन्दिनी सदा ॥ १ ॥
मलापहारिवारिपूरभूरिमण्डितामृता
भृशं प्रपातकप्रभञ्जनातिपण्डितानिशम् ।
सुनन्दनन्दनाङ्गसङ्गरागरञ्जिता हिता
धुनोतु नो मनोमलं कलिन्दनन्दिनी सदा ॥ २ ॥
लसत्तरङ्गसङ्गधूतभूतजातपातका
नवीनमाधुरीधुरीणभक्तजातचातका ।
तटान्तवासदासहंससंवृताह्नि कामदा
धुनोतु नो मनोमलं कलिन्दनन्दिनी सदा ॥ ३ ॥
विहाररासखेदभेदधीरतीरमारुता
गता गिरामगोचरे यदीयनीरचारुता ।

प्रवाहसाहचर्यपूतमेदिनीनदीनदा
धुनोतु नो मनोमलं कलिन्दनन्दिनी सदा ॥ ४ ॥
तरङ्गसङ्गसैकतान्तराञ्चिता सदाऽसिता
शरन्निशाकरांशुमञ्जुमञ्जरीसभाजिता ।
भवार्चनाप्रचारणाम्बुनाधुना विशारदा
धुनोतु नो मनोमलं कलिन्दनन्दिनी सदा ॥ ५ ॥
जलान्तकेलिकारिचारुराधिकाङ्गरागिणी
स्वभर्तुरन्यदुर्लभाङ्गताङ्गतांशभागिनी ।
स्वदत्तसुप्तसप्तसिन्धुभेदनातिकोविदा
धुनोतु नो मनोमलं कलिन्दनन्दिनी सदा ॥ ६ ॥
जलच्युताच्युताङ्गरागलम्पटालिशालिनी
विलोलराधिकाकचान्तचम्पकालिमालिनी ।
सदावगाहनावतीर्णभर्तृभृत्यनारदा
धुनोतु नो मनोमलं कलिन्दनन्दिनी सदा ॥ ७ ॥
सदैव नन्दनन्दकेलिशालिकुञ्जमञ्जुला
तटोत्थफुल्लमल्लिकाकदम्बरेणुसूज्ज्वला ।
जलावगाहिनां नृणां भवाब्धिसिन्धुपारदा
धुनोतु नो मनोमलं कलिन्दनन्दिनी सदा ॥ ८ ॥



## नर्मदाष्टकम् [44]

(श्री शङ्कराचार्य कृतम्)

सबिन्दुसिन्धुसुस्खलत्तरङ्गभङ्गरञ्जितं
द्विषत्सु पापजातजातकारिवारिसंयुतम् ।
कृतान्तदूतकालभूतभीतिहारिवर्मदे
त्वदीयपादपङ्कजं नमामि देवि नर्मदे ॥ १ ॥

त्वदम्बुलीनदीनमीनदिव्यसम्प्रदायकं
कलौ मलौघभारहारि सर्वतीर्थनायकम् ।
सुमच्छकच्छनक्रचक्रवाकचक्रशर्मदे
त्वदीयपादपङ्कजं नमामि देवि नर्मदे ॥ २ ॥

महागभीरनीरपूरपातधूतभूतलं
नमत्समस्तपातकारि दारितापदाचलम् ।
जगल्लये महाभये मृकण्डुसूनुहर्म्यदे
त्वदीयपादपङ्कजं नमामि देवि नर्मदे ॥ ३ ॥

गतं तदैव मे भयं त्वदम्बु वीक्षितं यदा
मृकण्डुसूनुशौनकासुरारिसेवितं सदा ।
पुनर्भवाब्धिजन्मसंभवाब्धिदुःखवर्मदे
त्वदीयपादपङ्कजं नमामि देवि नर्मदे ॥ ४ ॥

अलक्ष्यलक्षकिन्नरामरासुरादिपूजितं

सुलक्ष्यनीरतीरधीरपक्षिलक्षकूजितम् ।
वसिष्ठशिष्टपिप्पलादिकर्दमादिशर्मदे
त्वदीयपादपङ्कजं नमामि देवि नर्मदे ॥ ५ ॥

सनत्कुमारनाचिकेतकश्यपात्रिषट्पदै-
र्धृतं स्वकीयमानसेषु नारदादिषट्पदैः ।
रवीन्दुरन्तिदेवदेवराजकर्मशर्मदे
त्वदीयपादपङ्कजं नमामि देवि नर्मदे ॥ ६ ॥

अलक्ष-लक्ष-लक्ष-पापलक्षसारसायुधं
ततस्तु जीवजन्तुतन्तुभुक्तिमुक्तिदायकम् ।
विरिञ्चिविष्णुशङ्करस्वकीयधामवर्मदे
त्वदीयपादपङ्कजं नमामि देवि नर्मदे ॥ ७ ॥

अहो धृतं स्वनं श्रुतं महेशकेशजातटे
किरातसूतवाडवेषु पण्डिते शठे नटे ।
दुरन्तपापतापहारि सर्वजन्तुशर्मदे
त्वदीयपादपङ्कजं नमामि देवि नर्मदे ॥ ८ ॥

इदं तु नर्मदाष्टकं त्रिकालमेव ये सदा
पठन्ति ते निरन्तरं न यान्ति दुर्गतिं कदा ।
सुलभ्य देहदुर्लभं महेशधामगौरवं
पुनर्भवा नरा न वै विलोकयन्ति रौरवम् ॥ ९ ॥

## श्रीरामकृष्णस्तोत्रम् [45]

(स्वामी विवेकानन्दः)

**ॐ** ह्रीं ऋतं त्वमचलो गुणजिद् गुणेड्यः
**न**क्तन्दिवं सकरुणं तव पादपद्मम् ।
**मो**हङ्कषं बहुकृतं न भजे यतोऽहं
तस्मात्त्वमेव शरणं मम दीनबन्धो ॥ १ ॥

**भ**क्तिर्भगश्च भजनं भवभेदकारि
**ग**च्छन्त्यलं सुविपुलं गमनाय तत्त्वम् ।
**व**क्त्रोद्धृतोऽपि हृदये न मे भाति किञ्चित् *
तस्मात्त्वमेव शरणं मम दीनबन्धो ॥ २ ॥

**ते**जस्तरन्ति तरसा त्वयि तृप्ततृष्णाः
**रा**गे कृते ऋतपथे त्वयि रामकृष्णे ।
**म**र्त्यामृतं तव पदं मरणोर्मिनाशं
तस्मात्त्वमेव शरणं मम दीनबन्धो ॥ ३ ॥

**कृ**त्यं करोति कलुषं कुहकान्तकारि
**ष्णा**न्तं शिवं सुविमलं तव नाम नाथ ।
**य**स्मादहं त्वशरणो जगदेकगम्य
तस्मात्त्वमेव शरणं मम दीनबन्धो ॥ ४ ॥

## श्रीरामकृष्णप्रणामः

(स्वामी विवेकानन्दः)

स्थापकाय च धर्मस्य सर्वधर्मस्वरूपिणे ।
अवतारवरिष्ठाय रामकृष्णाय ते नमः ॥

( * वक्त्रोद्धृतं तु हृदि मे न च भाति किञ्चित् )

## श्रीरामकृष्णध्यानस्तोत्रम् [46]

(स्वामी अभेदानन्दः)

हृदयकमलमध्ये राजितं निर्विकल्पं
सदसदखिलभेदातीतमेकस्वरूपम् ।
प्रकृतिविकृतिशून्यं नित्यमानन्दमूर्तिं
विमलपरमहंसं रामकृष्णं भजामः ॥ १ ॥

निरुपममतिसूक्ष्मं निष्प्रपञ्चं निरीहं
गगनसदृशमीशं सर्वभूताधिवासम् ।
त्रिगुणरहितसच्चिद्ब्रह्मरूपं वरेण्यं
विमलपरमहंसं रामकृष्णं भजामः ॥ २ ॥

वितरितुमवतीर्णं ज्ञानभक्तिप्रशान्तीः
प्रणयगलितचित्तं जीवदुःखासहिष्णुम् ।
धृतसहजसमाधिं चिन्मयं कोमलाङ्गं
विमलपरमहंसं रामकृष्णं भजामः ॥ ३ ॥

## श्रीरामकृष्णप्रणाममन्त्रः [47]

(स्वामी शारदानन्दः)

सर्वधर्मस्थापकस्त्वं सर्वधर्मस्वरूपकः । आचार्याणां महाचार्यो रामकृष्णाय ते नमः ॥ यथाग्नेर्दाहिकाशक्ती रामकृष्णे स्थिता हि या । सर्वविद्यास्वरूपां तां शारदां प्रणमाम्यहम् ॥ परतत्त्वे सदा लीनो रामकृष्णसमाज्ञया । यो धर्मस्थापनरतो वीरेशं तं नमाम्यहम् ॥ कालिन्दी-फुल्ल-कमले माधवेन क्रीडारत । ब्रह्मानन्द नमस्तुभ्यं सद्गुरो लोकनायक ॥ योगानन्दः प्रेमानन्दश्चान्ये वै ये च पार्षदाः । रामकृष्णगतप्राणाः सर्वांस्तान् प्रणमाम्यहम् ॥

## श्रीशारदादेवीध्यानस्तोत्रम् [48]

(स्वामी अभेदानन्दः)

ध्यायेच्चित्तसरोजस्थां सुखासीनां कृपामयीम् ।
प्रसन्नवदनां देवीं द्विभुजां स्थिरलोचनाम् ॥ १ ॥
आलुलायितकेशार्धवक्षःस्थलविमण्डिताम् ।
श्वेतवस्त्रावृतार्धाङ्गां हेमालङ्कारभूषिताम् ॥ २ ॥
स्वक्रोडन्यस्तहस्तां च ज्ञानभक्तिप्रदायिनीम् ।
शुभ्रां ज्योतिर्मयीं जीवपापसन्तापहारिणीम् ॥ ३ ॥
रामकृष्णगतप्राणां तन्नामश्रवणप्रियाम् ।
तद्भावरञ्जिताकारां जगन्मातृस्वरूपिणीम् ॥ ४ ॥
जानकीराधिकारूपधारिणीं सर्वमङ्गलाम् ।
चिन्मयीं वरदां नित्यां शारदां मोक्षदायिनीम् ॥ ५ ॥

यथाग्नेर्दाहिकाशक्ती रामकृष्णे स्थिता हि या ।
सर्वविद्यास्वरूपां तां शारदां प्रणमाम्यहम् ॥

## श्रीशारदादेवीस्तोत्रम् [49]

(स्वामी अभेदानन्दः)

प्रकृतिं परमामभयां वरदां नररूपधरां जनतापहराम् ।
शरणागतसेवकतोषकरीं प्रणमामि परां जननीं जगताम् ॥ १ ॥
गुणहीनसुतानपराधयुतान् कृपयाद्य समुद्धर मोहगतान् ।

तरणीं भवसागरपारकरीं प्रणमामि परां जननीं जगताम् ॥ २ ॥

विषयं कुसुमं परिहृत्य सदा चरणाम्बुरुहामृतशान्तिसुधाम् ।
पिब भृङ्गमनो भवरोगहरां प्रणमामि परां जननीं जगताम् ॥ ३ ॥

कृपां कुरु महादेवि सुतेषु प्रणतेषु च ।
चरणाश्रयदानेन कृपामयि नमोऽस्तु ते ॥ ४ ॥

लज्जापटावृते नित्यं शारदे ज्ञानदायिके ।
पापेभ्यो नः सदा रक्ष कृपामयि नमोऽस्तु ते ॥ ५ ॥

रामकृष्णगतप्राणां तन्नामश्रवणप्रियाम् ।
तद्भावरञ्जिताकारां प्रणमामि मुहुर्मुहुः ॥ ६ ॥

पवित्रं चरितं यस्याः पवित्रं जीवनं तथा ।
पवित्रतास्वरूपिण्यै तस्यै कुर्मो नमो नमः ॥ ७ ॥

देवीं प्रसन्नां प्रणतार्तिहन्त्रीं योगीन्द्रपूज्यां युगधर्मपात्रीम् ।
तां शारदां भक्तिविज्ञानदात्रीं दयास्वरूपां प्रणमामि नित्यम् ॥ ८ ॥

स्नेहेन बध्नासि मनोऽस्मदीयं दोषानशेषान् सगुणी करोषि ।
अहेतुना नो दयसे सदोषान् स्वाङ्के गृहीत्वा यदिदं विचित्रम् ॥ ९ ॥

प्रसीद मातर्विनयेन याचे नित्यं भव स्नेहवती सुतेषु ।
प्रेमैकबिन्दुं चिरदग्धचित्ते विषिञ्च चित्तं कुरु नः सुशान्तम् ॥ १० ॥

जननीं शारदां देवीं रामकृष्णं जगद्गुरुम् ।
पादपद्मे तयोः श्रित्वा प्रणमामि मुहुर्मुहुः ॥ ११ ॥

## श्रीविवेकानन्दध्यानम् [50]

विश्वाचार्यं जगद्वन्द्यं विवेकानन्दरूपिणम् ।
वीरेश्वरात्समुत्पन्नं सप्तर्षिमण्डलागतम् ॥
ज्ञानभक्तिप्रदातारं पद्माक्षगौरविग्रहम् ।
ध्यायेद्देवं ज्योतिःपुञ्जं लोककल्याणकारिणम् ॥
परतत्त्वे सदा लीनो रामकृष्णसमाज्ञया ।
यो धर्मस्थापनरतो वीरेशं तं नमाम्यहम् ॥

## श्रीविवेकानन्दपञ्चकम् [51]

(स्वामी रामकृष्णानन्दः)

अनित्यदृश्येषु विविच्य नित्यं तस्मिन् समाधत्त इह स्म लीलया ।
विवेकवैराग्यविशुद्धचित्तं योऽसौ विवेकी तमहं नमामि ॥ १ ॥
विवेकजानन्दनिमग्नचित्तं विवेकदानैकविनोदशीलम् ।
विवेकभासा कमनीयकान्तिं विवेकिनं तं सततं नमामि ॥ २ ॥
ऋतं च विज्ञानमधिश्रयद्यन्निरन्तरं चादिमध्यान्तहीनम् ।
सुखं सुरूपं प्रकरोति यस्य आनन्दमूर्तिं तमहं नमामि ॥ ३ ॥
सूर्यो यथान्धं हि तमो निहन्ति विष्णुर्यथा दुष्टजनांश्छिनत्ति ।
तथैव यस्याखिलनेत्रलोभं रूपं त्रितापं विमुखीकरोति ॥ ४ ॥
तं देशिकेन्द्रं परमं पवित्रं विश्वस्य पालं मधुरं यतीन्द्रम् ।
हिताय नृणां नरमूर्तिमन्तं विवेक आनन्दमहं नमामि ॥ ५ ॥
नमः श्रीयतिराजाय विवेकानन्दसूरये ।
सच्चित्सुखस्वरूपाय स्वामिने तापहारिणे ॥ ६ ॥

॥ श्रीः ॥

॥ ॐ ह्रीं श्रीदुर्गायै देवतायै नमः ॥

## ॥ श्री दुर्गादेवीध्यानम् ॥ [52]

( दुर्गापूजा )

ॐ जटाजूटसमायुक्तामर्धेन्दुकृत-शेखराम् ।
लोचनत्रय-संयुक्तां पूर्णेन्दुसदृशाननाम् ॥
अतसीपुष्पवर्णाभां सुप्रतिष्ठां सुलोचनाम् ।
नवयौवनसम्पन्नां सर्वाभरणभूषिताम् ॥
सुचारुदशनां तद्वत् पीनोन्नत-पयोधराम् ।
त्रिभङ्गस्थानसंस्थानां महिषासुरमर्दिनीम् ॥
मृणालायतसंस्पर्श-दशबाहु-समन्विताम् ।
त्रिशूलं दक्षिणे ध्येयं खड्गं चक्रं क्रमादधः ॥
तीक्ष्णबाणं तता शक्तिं दक्षिणेन विचिन्तयेत् ।
खेटकं पूर्णचापञ्च पाशमङ्कुशमेव च ॥
घण्टां वा परशुं वाऽपि वामतः सन्निवेशयेत् ।
अधस्तान्महिषं तद्वद्-विशिरस्कं प्रदर्शयेत् ॥
शिरच्छेदोद्भवं तद्वद्दानवं खड्गपाणिनम् ।
हृदिशूलेन निर्भिन्नं निर्यदन्त्रविभूषितम् ॥
रक्तारक्तीकृताङ्गञ्च रक्तविस्फुरितेक्षणम् ।
वेष्टितं नागपाशेन भ्रुकुटीभीषणाननाम् ॥
सपाशवाम हस्तेन-धृतकेशञ्च दुर्गया ।

वमद्रुधिरवक्त्रञ्च देव्याः सिंहं प्रदर्शयेत् ॥
देव्यास्तु दक्षिणं पादं समं सिंहोपरिस्थितम् ।
किञ्चिदूर्ध्वं तथा वाममङ्गुष्ठं महिषोपरि ॥
(प्रसन्नवदनां देवीं सर्वकामफलप्रदाम् ।
शत्रुक्षयकरीं देवीं दैत्यदानवदर्पहाम् ॥)
स्तूयमानञ्च तद्रूपममरैः सन्निवेशयेत् ।
उग्रचण्डा प्रचण्डा च चण्डोग्रा चण्डनायिका ।
चण्डा चण्डवती चैव चण्डरूपाति चण्डिका ॥
आभिः शक्तिभिरष्टाभिः सततं परिवेष्टिताम् ।
चिन्तयेज्जगतां धात्रीं धर्मकामार्थ-मोक्षदाम् ॥

बृहन्नन्दिकेश्वर पुराणम्

## ॥ देवीप्रणामः ॥ [53]

ॐ सर्व-मङ्गल-माङ्गल्ये शिवे सर्वार्थसाधिके ।
शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तु ते ॥
सृष्टि-स्थिति-विनाशानां शक्तिभूते सनातनि ।
गुणाश्रये गुणमये नारायणि नमोऽस्तु ते ॥
शरणागत-दीनार्त-परित्राण-परायणे ।
सर्वस्यार्ति-हरे देवि नारायणि नमोऽस्तु ते ॥
जय नारायणि नमोऽस्तु ते ।
जय नारायणि नमोऽस्तु ते ।
जय नारायणि नमोऽस्तु ते ॥

देवीमाहात्म्यम्

॥ श्रीः ॥

॥ श्री दुर्गायै नमः ॥

# ॥ श्री दुर्गासहस्रनामस्तोत्रम् ॥ [54]

नारद उवाच –

कुमार गुणगम्भीर देवसेनापते प्रभो ।
सर्वाभीष्टप्रदं पुंसां सर्वपापप्रणाशनम् ॥ १ ॥
गुह्याद्गुह्यतरं स्तोत्रं भक्तिवर्धकमञ्जसा ।
मङ्गलं ग्रहपीडादिशान्तिदं वक्तुमर्हसि ॥ २ ॥

स्कन्द उवाच –

शृणु नारद देवर्षे लोकानुग्रहकाम्यया ।
यत्पृच्छसि परं पुण्यं तत्ते वक्ष्यामि कौतुकात् ॥ ३ ॥
माता मे लोकजननी हिमवन्नगसत्तमात् ।
मेनायां ब्रह्मवादिन्यां प्रादुर्भूता हरप्रिया ॥ ४ ॥
महता तपसाऽऽराध्य शङ्करं लोकशङ्करम् ।
स्वमेव वल्लभं भेजे कलेव हि कलानिधिम् ॥ ५ ॥
नगानामधिराजस्तु हिमवान् विरहातुरः ।
स्वसुतायाः परिक्षीणे वसिष्ठेन प्रबोधितः ॥ ६ ॥
त्रिलोकजननी सेयं प्रसन्ना त्वयि पुण्यतः ।
प्रादुर्भूता सुतात्वेन तद्वियोगं शुभं त्यज ॥ ७ ॥
बहुरूपा च दुर्गेयं बहुनाम्नी सनातनी ।
सनातनस्य जाया सा पुत्रीमोहं त्यजाधुना ॥ ८ ॥

इति प्रबोधितः शैलः तां तुष्टाव परां शिवाम् ।
तदा प्रसन्ना सा दुर्गा पितरं प्राह नन्दिनी ॥ ९ ॥
मत्प्रसादात्परं स्तोत्रं हृदये प्रतिभासताम् ।
तेन नाम्नां सहस्रेण पूजयन् काममाप्नुहि ॥ १० ॥
इत्युक्त्वान्तर्हितायां तु हृदये स्फुरितं तदा ।
नाम्नां सहस्रं दुर्गायाः पृच्छते मे यदुक्तवान् ॥ ११ ॥
मङ्गलानां मङ्गलं तद् दुर्गानाम सहस्रकम् ।
सर्वाभीष्टप्रदं पुंसां ब्रवीम्यखिलकामदम् ॥ १२ ॥
दुर्गादेवी समाख्याता हिमवानृषिरुच्यते ।
छन्दोनुष्टुप् जपो देव्याः प्रीतये क्रियते सदा ॥ १३ ॥

ऋषिच्छन्दांसि –

अस्य श्रीदुर्गास्तोत्रमहामन्त्रस्य । हिमवान् ऋषिः । अनुष्टुप् छन्दः । दुर्गाभगवती देवता । श्रीदुर्गाप्रसादसिद्ध्यर्थे जपे विनियोगः । श्रीभगवत्यै दुर्गायै नमः ।



## देवीध्यानम्

ॐ ह्रीं कालाभ्राभां कटाक्षैररिकुलभयदां मौलिबद्धेन्दुरेखां
शङ्खं चक्रं कृपाणं त्रिशिखमपि करैरुद्वहन्तीं त्रिनेत्राम् ।
सिंहस्कन्धाधिरूढां त्रिभुवनमखिलं तेजसा पूरयन्तीं
ध्यायेद् दुर्गां जयाख्यां त्रिदशपरिवृतां सेवितां सिद्धिकामैः ॥

श्री जयदुर्गायै नमः ।



ॐ शिवाऽथोमा रमा शक्तिरनन्ता निष्कलाऽमला ।
शान्ता माहेश्वरी नित्या शाश्वता परमा क्षमा ॥ १ ॥
अचिन्त्या केवलानन्ता शिवात्मा परमात्मिका ।
अनादिरव्यया शुद्धा सर्वज्ञा सर्वगाऽचला ॥ २ ॥
एकानेकविभागस्था मायातीता सुनिर्मला ।
महामाहेश्वरी सत्या महादेवी निरञ्जना ॥ ३ ॥
काष्ठा सर्वान्तरस्थाऽपि चिच्छक्तिश्चात्रिलालिता ।
सर्वा सर्वात्मिका विश्वा ज्योतीरूपाऽक्षराऽमृता ॥ ४ ॥
शान्ता प्रतिष्ठा सर्वेशा निवृत्तिरमृतप्रदा ।
व्योममूर्तिर्व्योमसंस्था व्योमधाराऽच्युताऽतुला ॥ ५ ॥
अनादिनिधनाऽमोघा कारणात्मकलाकुला ।
ऋतुप्रथमजाऽनाभिरमृतात्मसमाश्रया ॥ ६ ॥
प्राणेश्वरप्रिया नम्या महामहिषघातिनी ।
प्राणेश्वरी प्राणरूपा प्रधानपुरुषेश्वरी ॥ ७ ॥
सर्वशक्तिकलाऽकामा महिषेष्टविनाशिनी ।
सर्वकार्यनियन्त्री च सर्वभूतेश्वरेश्वरी ॥ ८ ॥
अङ्गदादिधरा चैव तथा मुकुटधारिणी ।
सनातनी महानन्दाऽऽकाशयोनिस्तथोच्यते ॥ ९ ॥
चित्प्रकाशस्वरूपा च महायोगेश्वरेश्वरी ।
महामाया सदुष्पारा मूलप्रकृतिरीशिका ॥ १० ॥

संसारयोनिः सकला सर्वशक्तिसमुद्भवा ।
संसारपारा दुर्वारा दुर्निरीक्षा दुरासदा ॥ ११ ॥
प्राणशक्तिश्च सेव्या च योगिनी परमाकला ।
महाविभूतिर्दुर्दर्शा मूलप्रकृतिसम्भवा ॥ १२ ॥
अनाद्यनन्तविभवा परार्था पुरुषारणिः ।
सर्गस्थित्यन्तकृच्चैव सुदुर्वाच्या दुरत्यया ॥ १३ ॥
शब्दगम्या शब्दमाया शब्दाख्यानन्दविग्रहा ।
प्रधानपुरुषातीता प्रधानपुरुषात्मिका ॥ १४ ॥
पुराणी चिन्मया पुंसामिष्टदा पुष्टिरूपिणी ।
पूतान्तरस्था कूटस्था महापुरुषसंज्ञिता ॥ १५ ॥
जन्ममृत्युजरातीता सर्वशक्तिस्वरूपिणी ।
वाञ्छाप्रदाऽनवच्छिन्नप्रधानानुप्रवेशिनी ॥ १६ ॥
क्षेत्रज्ञाऽचिन्त्यशक्तिस्तु प्रोच्यतेऽव्यक्तलक्षणा ।
मलापवर्जिताऽऽनादिमाया त्रितयतत्त्विका ॥ १७ ॥
प्रीतिश्च प्रकृतिश्चैव गुहावासा तथोच्यते ।
महामाया नगोत्पन्ना तामसी च ध्रुवा तथा ॥ १८ ॥
व्यक्ताऽव्यक्तात्मिका कृष्णा रक्ता शुक्ला ह्यकारणा ।
प्रोच्यते कार्यजननी नित्यप्रसवधर्मिणी ॥ १९ ॥
सर्गप्रलयमुक्ता च सृष्टिस्थित्यन्तधर्मिणी ।
ब्रह्मगर्भा चतुर्विंशस्वरूपा पद्मवासिनी ॥ २० ॥

अच्युताह्लादिका विद्युद्ब्रह्मयोनिर्महालया ।
महालक्ष्मी समुद्भावभावितात्मामहेश्वरी ॥ २१ ॥
महाविमानमध्यस्था महानिद्रा सकौतुका ।
सर्वार्थधारिणी सूक्ष्मा ह्यविद्धा परमार्थदा ॥ २२ ॥
अनन्तरूपाऽनन्तार्था तथा पुरुषमोहिनी ।
अनेकानेकहस्ता च कालत्रयविवर्जिता ॥ २३ ॥
ब्रह्मजन्मा हरप्रीता मतिर्ब्रह्मशिवात्मिका ।
ब्रह्मेशविष्णुसम्पूज्या ब्रह्माख्या ब्रह्मसंज्ञिता ॥ २४ ॥
व्यक्ता प्रथमजा ब्राह्मी महारात्रीः प्रकीर्तिता ।
ज्ञानस्वरूपा वैराग्यरूपा ह्यैश्वर्यरूपिणी ॥ २५ ॥
धर्मात्मिका ब्रह्ममूर्तिः प्रतिश्रुतपुमर्थिका ।
अपांयोनिः स्वयम्भूता मानसी तत्त्वसम्भवा ॥ २६ ॥
ईश्वरस्य प्रिया प्रोक्ता शङ्करार्धशरीरिणी ।
भवानी चैव रुद्राणी महालक्ष्मीस्तथाऽम्बिका ॥ २७ ॥
महेश्वरसमुत्पन्ना भुक्तिमुक्तिप्रदायिनी ।
सर्वेश्वरी सर्ववन्द्या नित्यमुक्ता सुमानसा ॥ २८ ॥
महेन्द्रोपेन्द्रनमिता शाङ्करीशानुवर्तिनी ।
ईश्वरार्धासनगता माहेश्वरपतिव्रता ॥ २९ ॥
संसारशोषिणी चैव पार्वती हिमवत्सुता ।
परमानन्ददात्री च गुणाग्र्या योगदा तथा ॥ ३० ॥

ज्ञानमूर्तिश्च सावित्री लक्ष्मीः श्रीः कमला तथा ।
अनन्तगुणगम्भीरा ह्युरोनीलमणिप्रभा ॥ ३१ ॥
सरोजनिलया गङ्गा योगिध्येयाऽसुरार्दिनी ।
सरस्वती सर्वविद्या जगज्ज्येष्ठा सुमङ्गला ॥ ३२ ॥
वाग्देवी वरदा वर्या कीर्तिः सर्वार्थसाधिका ।
वागीश्वरी ब्रह्मविद्या महाविद्या सुशोभना ॥ ३३ ॥
ग्राह्यविद्या वेदविद्या धर्मविद्याऽऽत्मभाविता ।
स्वाहा विश्वम्भरा सिद्धिः साध्या मेधा धृतिः कृतिः ॥ ३४ ॥
सुनीतिः संकृतिश्चैव कीर्तिता नरवाहिनी ।
पूजाविभाविनी सौम्या भोग्यभाग् भोगदायिनी ॥ ३५ ॥
शोभावती शाङ्करी च लोला मालाविभूषिता ।
परमेष्ठिप्रिया चैव त्रिलोकीसुन्दरी माता ॥ ३६ ॥
नन्दा सन्ध्या कामधात्री महादेवी सुसात्त्विका ।
महामहिषदर्पघ्नी पद्ममालाऽघहारिणी ॥ ३७ ॥
विचित्रमुकुटा रामा कामदाता प्रकीर्तिता ।
पीताम्बरधरा दिव्यविभूषणविभूषिता ॥ ३८ ॥
दिव्याख्या सोमवदना जगत्संसृष्टिवर्जिता ।
निर्यन्त्रा यन्त्रवाहस्था नन्दिनी रुद्रकालिका ॥ ३९ ॥
आदित्यवर्णा कौमारी मयूरवरवाहिनी ।
पद्मासनगता गौरी महाकाली सुरार्चिता ॥ ४० ॥

अदितिर्नियता रौद्री पद्मगर्भा विवाहना ।
विरूपाक्षा केशिवाहा गुहापुरनिवासिनी ॥ ४१ ॥
महाफलाऽनवद्याङ्गी कामरूपा सरिद्वरा ।
भास्वद्रूपा मुक्तिदात्री प्रणतक्लेशभञ्जना ॥ ४२ ॥
कौशिकी गोमिनी रात्रिस्त्रिदशारिविनाशिनी ।
बहुरूपा सुरूपा च विरूपा रूपवर्जिता ॥ ४३ ॥
भक्तार्तिशमना भव्या भवभावविनाशिनी ।
सर्वज्ञानपरीताङ्गी सर्वासुरविमर्दिका ॥ ४४ ॥
पिकस्वनी सामगीता भवाङ्कनिलया प्रिया ।
दीक्षा विद्याधरी दीप्ता महेन्द्राहितपातिनी ॥ ४५ ॥
सर्वदेवमया दक्षा समुद्रान्तरवासिनी ।
अकलङ्का निराधारा नित्यसिद्धा निरामया ॥ ४६ ॥
कामधेनुबृहद्गर्भा धीमती मौननाशिनी ।
निःसङ्कल्पा निरातङ्का विनया विनयप्रदा ॥ ४७ ॥
ज्वालामाला सहस्राढ्या देवदेवी मनोमया ।
सुभगा सुविशुद्धा च वसुदेवसमुद्भवा ॥ ४८ ॥
महेन्द्रोपेन्द्रभगिनी भक्तिगम्या परावरा ।
ज्ञानज्ञेया परातीता वेदान्तविषया मतिः ॥ ४९ ॥
दक्षिणा दाहिका दह्या सर्वभूतहृदिस्थिता ।
योगमाया विभागज्ञा महामोहा गरीयसी ॥ ५० ॥

सन्ध्या सर्वसमुद्भूता ब्रह्मवृक्षाश्रियाऽदितिः ।
बीजाङ्कुरसमुद्भूता महाशक्तिर्महामतिः ॥ ५१ ॥

ख्यातिः प्रज्ञावती संज्ञा महाभोगीन्द्रशायिनी ।
ह्रींकृतिः शङ्करी शान्तिर्गन्धर्वगणसेविता ॥ ५२ ॥

वैश्वानरी महाशूला देवसेना भवप्रिया ।
महारात्री परानन्दा शची दुःस्वप्ननाशिनी ॥ ५३ ॥

ईड्या जया जगद्धात्री दुर्विज्ञेया सुरूपिणी ।
गुहाम्बिका गणोत्पन्ना महापीठा मरुत्सुता ॥ ५४ ॥

हव्यवाहा भवानन्दा जगद्योनिः प्रकीर्तिता ।
जगन्माता जगन्मृत्युजरातीता च बुद्धिदा ॥ ५५ ॥

सिद्धिदात्री रत्नगर्भा रत्नगर्भाश्रया परा ।
दैत्यहन्त्री स्वेष्टदात्री मङ्गलैकसुविग्रहा ॥ ५६ ॥

पुरुषान्तर्गता चैव समाधिस्था तपस्विनी ।
दिविस्थिता त्रिणेत्रा च सर्वेन्द्रियमनोधृतिः ॥ ५७ ॥

सर्वभूतहृदिस्था च तथा संसारतारिणी ।
वेद्या ब्रह्मविवेद्या च महालीला प्रकीर्तिता ॥ ५८ ॥

ब्राह्मणिबृहती ब्राह्मी ब्रह्मभूताऽघहारिणी ।
हिरण्मयी महादात्री संसारपरिवर्तिका ॥ ५९ ॥

सुमालिनी सुरूपा च भास्विनी धारिणी तथा ।
उन्मूलिनी सर्वसभा सर्वप्रत्ययसाक्षिणी ॥ ६० ॥

सुसौम्या चन्द्रवदना ताण्डवासक्तमानसा ।
सत्त्वशुद्धिकरी शुद्धा मलत्रयविनाशिनी ॥ ६१ ॥
जगत्त्रयी जगन्मूर्तिस्त्रिमूर्तिरमृताश्रया ।
विमानस्था विशोका च शोकनाशिन्यनाहता ॥ ६२ ॥
हेमकुण्डलिनी काली पद्मवासा सनातनी ।
सदाकीर्तिः सर्वभूतशया देवी सतांप्रिया ॥ ६३ ॥
ब्रह्ममूर्तिकला चैव कृत्तिका कञ्जमालिनी ।
व्योमकेशा क्रियाशक्तिरिच्छाशक्तिः परागतिः ॥ ६४ ॥
क्षोभिका खण्डिकाभेद्या भेदाभेदविवर्जिता ।
अभिन्ना भिन्नसंस्थाना वशिनी वंशधारिणी ॥ ६५ ॥
गुह्यशक्तिर्गुह्यतत्त्वा सर्वदा सर्वतोमुखी ।
भगिनी च निराधारा निराहारा प्रकीर्तिता ॥ ६६ ॥
निरङ्कुशपदोद्भूता चक्रहस्ता विशोधिका ।
स्रग्विणी पद्मसम्भेदकारिणी परिकीर्तिता ॥ ६७ ॥
परावरविधानज्ञा महापुरुषपूर्वजा ।
परावरज्ञा विद्या च विद्युज्जिह्वा जिताश्रया ॥ ६८ ॥
विद्यामयी सहस्राक्षी सहस्रवदनात्मजा ।
सहस्ररश्मिःसत्त्वस्था महेश्वरपदाश्रया ॥ ६९ ॥
ज्वालिनी सन्मया व्याप्ता चिन्मया पद्मभेदिका ।
महाश्रया महामन्त्रा महादेवमनोरमा ॥ ७० ॥

व्योमलक्ष्मीः सिंहरथा चेकितानाऽमितप्रभा ।
विश्वेश्वरी भगवती सकला कालहारिणी ॥ ७१ ॥
सर्ववेद्या सर्वभद्रा गुह्या गूढा गुहारणी ।
प्रलया योगधात्री च गङ्गा विश्वेश्वरी तथा ॥ ७२ ॥
कामदा कनका कान्ता कञ्जगर्भप्रभा तथा ।
पुण्यदा कालकेशा च भोक्त्री पुष्करिणी तथा ॥ ७३ ॥
सुरेश्वरी भूतिदात्री भूतिभूषा प्रकीर्तिता ।
पञ्चब्रह्मसमुत्पन्ना परमार्थाऽर्थविग्रहा ॥ ७४ ॥
वर्णोदया भानुमूर्तिर्वाग्विज्ञेया मनोजवा ।
मनोहरा महोरस्का तामसी वेदरूपिणी ॥ ७५ ॥
वेदशक्तिर्वेदमाता वेदविद्याप्रकाशिनी ।
योगेश्वरेश्वरी माया महाशक्तिर्महामयी ॥ ७६ ॥
विश्वान्तःस्था वियन्मूर्तिर्भार्गवी सुरसुन्दरी ।
सुरभिर्नन्दिनी विद्या नन्दगोपतनूद्भवा ॥ ७७ ॥
भारती परमानन्दा परावरविभेदिका ।
सर्वप्रहरणोपेता काम्या कामेश्वरेश्वरी ॥ ७८ ॥
अनन्तानन्दविभवा हृल्लेखा कनकप्रभा ।
कूष्माण्डा धनरत्नाढ्या सुगन्धा गन्धदायिनी ॥ ७९ ॥
त्रिविक्रमपदोद्भूता चतुरास्या शिवोदया ।
सुदुर्लभा धनाध्यक्षा धन्या पिङ्गललोचना ॥ ८० ॥

शान्ता प्रभास्वरूपा च पङ्कजायतलोचना ।
इन्द्राक्षी हृदयान्तःस्था शिवा माता च सत्क्रिया ॥ ८१ ॥
गिरिजा च सुगूढा च नित्यपुष्टा निरन्तरा ।
दुर्गा कात्यायनी चण्डी चन्द्रिका कान्तविग्रहा ॥ ८२ ॥
हिरण्यवर्णा जगती जगद्यन्त्रप्रवर्तिका ।
मन्दराद्रिनिवासा च शारदा स्वर्णमालिनी ॥ ८३ ॥
रत्नमाला रत्नगर्भा व्युष्टिर्विश्वप्रमाथिनी ।
पद्मानन्दा पद्मनिभा नित्यपुष्टा कृतोद्भवा ॥ ८४ ॥
नारायणी दुष्टशिक्षा सूर्यमाता वृषप्रिया ।
महेन्द्रभगिनी सत्या सत्यभाषा सुकोमला ॥ ८५ ॥
वामा च पञ्चतपसां वरदात्री प्रकीर्तिता ।
वाच्यवर्णेश्वरी विद्या दुर्जया दुरतिक्रमा ॥ ८६ ॥
कालरात्रिर्महावेगा वीरभद्रप्रिया हिता ।
भद्रकाली जगन्माता भक्तानां भद्रदायिनी ॥ ८७ ॥
कराला पिङ्गलाकारा कामभेत्त्री महामनाः ।
यशस्विनी यशोदा च षडध्वपरिवर्तिका ॥ ८८ ॥
शङ्खिनी पद्मिनी संख्या सांख्ययोगप्रवर्तिका ।
चैत्रादिवत्सरारूढा जगत्सम्पूरणीन्द्रजा ॥ ८९ ॥
शुम्भघ्नी खेचराराध्या कम्बुग्रीवा बलीडिता ।
खगारूढा महैश्वर्या सुपद्मनिलया तथा ॥ ९० ॥

विरक्ता गरुडस्था च जगतीहृद्गुहाश्रया ।
शुम्भादिमथना भक्तहृद्गह्वरनिवासिनी ॥ ९१ ॥
जगत्त्रयारणी सिद्धसङ्कल्पा कामदा तथा ।
सर्वविज्ञानदात्री चानल्पकल्मषहारिणी ॥ ९२ ॥
सकलोपनिषद्गम्या दुष्टदुष्प्रेक्ष्यसत्तमा ।
सद्वृता लोकसंव्याप्ता तुष्टिः पुष्टिः क्रियावती ॥ ९३ ॥
विश्वामरेश्वरी चैव भुक्तिमुक्तिप्रदायिनी ।
शिवाधृता लोहिताक्षी सर्पमालाविभूषणा ॥ ९४ ॥
निरानन्दा त्रिशूलासिधनुर्बाणादिधारिणी ।
अशेषध्येयमूर्तिश्च देवतानां च देवता ॥ ९५ ॥
वराम्बिका गिरेः पुत्री निशुम्भविनिपातिनी ।
सुवर्णा स्वर्णलसिताऽनन्तवर्णा सदाधृता ॥ ९६ ॥
शाङ्करी शान्तहृदया अहोरात्रविधायिका ।
विश्वगोप्त्री गूढरूपा गुणपूर्णा च गार्ग्यजा ॥ ९७ ॥
गौरी शाकम्भरी सत्यसन्धा सन्ध्यात्रयीधृता ।
सर्वपापविनिर्मुक्ता सर्वबन्धविवर्जिता ॥ ९८ ॥
सांख्ययोगसमाख्याता अप्रमेया मुनीडिता ।
विशुद्धसुकुलोद्भूता बिन्दुनादसमादृता ॥ ९९ ॥
शम्भुवामाङ्कगा चैव शशितुल्यनिभानना ।
वनमालाविराजन्ती अनन्तशयनादृता ॥ १०० ॥

नरनारायणोद्भूता नारसिंही प्रकीर्तिता ।
दैत्यप्रमाथिनी शङ्खचक्रपद्मगदाधरा ॥ १०१ ॥
सङ्कर्षणसमुत्पन्ना अम्बिका सज्जनाश्रया ।
सुवृता सुन्दरी चैव धर्मकामार्थदायिनी ॥ १०२ ॥
मोक्षदा भक्तिनिलया पुराणपुरुषादृता ।
महाविभूतिदाऽऽराध्या सरोजनिलयाऽसमा ॥ १०३ ॥
अष्टादशभुजाऽनादिर्नीलोत्पलदलाक्षिणी ।
सर्वशक्तिसमारूढा धर्माधर्मविवर्जिता ॥ १०४ ॥
वैराग्यज्ञाननिरता निरालोका निरिन्द्रिया ।
विचित्रगहनाधारा शाश्वतस्थानवासिनी ॥ १०५ ॥
ज्ञानेश्वरी पीतचेला वेदवेदाङ्गपारगा ।
मनस्विनी मन्युमाता महामन्युसमुद्भवा ॥ १०६ ॥
अमन्युरमृतास्वादा पुरन्दरपरिष्टुता ।
अशोच्या भिन्नविषया हिरण्यरजतप्रिया ॥ १०७ ॥
हिरण्यजननी भीमा हेमाभरणभूषिता ।
विभ्राजमाना दुर्ज्ञेया ज्योतिष्टोमफलप्रदा ॥ १०८ ॥
महानिद्रासमुत्पत्तिरनिद्रा सत्यदेवता ।
दीर्घा ककुद्मिनी पिङ्गजटाधारा मनोज्ञधीः ॥ १०९ ॥
महाश्रया रमोत्पन्ना तमःपारे प्रतिष्ठिता ।
त्रितत्त्वमाता त्रिविधा सुसूक्ष्मा पद्मसंश्रया ॥ ११० ॥

शान्त्यतीतकलाऽतीतविकारा श्वेतचेलिका ।
चित्रमाया शिवज्ञानस्वरूपा दैत्यमाथिनी ॥ १११ ॥
काश्यपी कालसर्पाभवेणिका शास्त्रयोनिका ।
त्रयीमूर्तिः क्रियामूर्तिश्चतुर्वर्गा च दर्शिनी ॥ ११२ ॥
नारायणी नरोत्पन्ना कौमुदी कान्तिधारिणी ।
कौशिकी ललिता लीला परावरविभाविनी ॥ ११३ ॥
वरेण्याऽद्भुतमाहात्म्या वडवा वामलोचना ।
सुभद्रा चेतनाराध्या शान्तिदा शान्तिवर्धिनी ॥ ११४ ॥
जयादिशक्तिजननी शक्तिचक्रप्रवर्तिका ।
त्रिशक्तिजननी जन्या षट्सूत्रपरिवर्णिता ॥ ११५ ॥
सुधौतकर्मणाऽऽराध्या युगान्तदहनात्मिका ।
सङ्कर्षिणी जगद्धात्री कामयोनिः किरीटिनी ॥ ११६ ॥
ऐन्द्री त्रैलोक्यनमिता वैष्णवी परमेश्वरी ।
प्रद्युम्नजननी बिम्बसमोष्ठी पद्मलोचना ॥ ११७ ॥
मदोत्कटा हंसगतिः प्रचण्डा चण्डविक्रमा ।
वृषाधीशा परात्मा च विन्ध्या पर्वतवासिनी ॥ ११८ ॥
हिमवन्मेरुनिलया कैलासपुरवासिनी ।
चाणूरहन्त्री नीतिज्ञा कामरूपा त्रयीतनुः ॥ ११९ ॥
व्रतस्नाता धर्मशीला सिंहासननिवासिनी ।
वीरभद्रादृता वीरा महाकालसमुद्भवा ॥ १२० ॥

विद्याधरार्चिता सिद्धसाध्याराधितपादुका ।
श्रद्धात्मिका पावनी च मोहिनी अचलात्मिका ॥ १२१ ॥
महाद्भुता वारिजाक्षी सिंहवाहनगामिनी ।
मनीषिणी सुधावाणी वीणावादनतत्परा ॥ १२२ ॥
श्वेतवाहनिषेव्या च लसन्मतिररुन्धती ।
हिरण्याक्षी तथा चैव महानन्दप्रदायिनी ॥ १२३ ॥
वसुप्रभा सुमाल्याप्तकन्धरा पङ्कजानना ।
परावरा वरारोहा सहस्रनयनार्चिता ॥ १२४ ॥
श्रीरूपा श्रीमती श्रेष्ठा शिवनाम्नी शिवप्रिया ।
श्रीप्रदा श्रितकल्याणा श्रीधरार्धशरीरिणी ॥ १२५ ॥
श्रीकलाऽनन्तदृष्टिश्च ह्यक्षुद्राऽऽरातिसूदनी ।
रक्तबीजनिहन्त्री च दैत्यसङ्घविमर्दिनी ॥ १२६ ॥
सिंहारूढा सिंहिकास्या दैत्यशोणितपायिनी ।
सुकीर्तिसहिताच्छिन्नसंशया रसवेदिनी ॥ १२७ ॥
गुणाभिरामा नागारिवाहना निर्जरार्चिता ।
नित्योदिता स्वयंज्योतिः स्वर्णकाया प्रकीर्तिता ॥ १२८ ॥
वज्रदण्डाङ्किता चैव तथाऽमृतसञ्जीविनी ।
वज्रच्छन्ना देवदेवी वरवज्रस्वविग्रहा ॥ १२९ ॥
माङ्गल्या मङ्गलात्मा च मालिनी माल्यधारिणी ।
गन्धर्वी तरुणी चान्द्री खड्गायुधधरा तथा ॥ १३० ॥

सौदामिनी प्रजानन्दा तथा प्रोक्ता भृगूद्भवा ।
एकानङ्गा च शास्त्रार्थकुशला धर्मचारिणी ॥ १३१ ॥
धर्मसर्वस्ववाहा च धर्माधर्मविनिश्चया ।
धर्मशक्तिर्धर्ममया धार्मिकानां शिवप्रदा ॥ १३२ ॥
विधर्मा विश्वधर्मज्ञा धर्मार्थान्तरविग्रहा ।
धर्मवर्ष्मा धर्मपूर्वा धर्मपारङ्गतान्तरा ॥ १३३ ॥
धर्मोपदेष्ट्री धर्मात्मा धर्मगम्या धराधरा ।
कपालिनी शाकलिनी कलाकलितविग्रहा ॥ १३४ ॥
सर्वशक्तिविमुक्ता च कर्णिकारधराऽक्षरा ।
कंसप्राणहरा चैव युगधर्मधरा तथा ॥ १३५ ॥
युगप्रवर्तिका प्रोक्ता त्रिसन्ध्या ध्येयविग्रहा ।
स्वर्गापवर्गदात्री च तथा प्रत्यक्षदेवता ॥ १३६ ॥
आदित्या दिव्यगन्धा च दिवाकरनिभप्रभा ।
पद्मासनगता प्रोक्ता खड्गबाणशरासना ॥ १३७ ॥
शिष्टा विशिष्टा शिष्टेष्टा शिष्टश्रेष्ठप्रपूजिता ।
शतरूपा शतावर्ता वितता रासमोदिनी ॥ १३८ ॥
सूर्येन्दुनेत्रा प्रद्युम्नजननी सुष्ठुमायिनी ।
सूर्यान्तरस्थिता चैव सत्प्रतिष्ठितविग्रहा ॥ १३९ ॥
निवृत्ता प्रोच्यते ज्ञानपारगा पर्वतात्मजा ।
कात्यायनी चण्डिका च चण्डी हैमवती तथा ॥ १४० ॥

दाक्षायणी सती चैव भवानी सर्वमङ्गला ।
धूम्रलोचनहन्त्री च चण्डमुण्डविनाशिनी ॥ १४१ ॥
योगनिद्रा योगभद्रा समुद्रतनया तथा ।
देवप्रियङ्करी शुद्धा भक्तभक्तिप्रवर्धिनी ॥ १४२ ॥
त्रिणेत्रा चन्द्रमुकुटा प्रमथार्चितपादुका ।
अर्जुनाभीष्टदात्री च पाण्डवप्रियकारिणी ॥ १४३ ॥
कुमारलालनासक्ता हरबाहूपधानिका ।
विघ्नेशजननी भक्तविघ्नस्तोमप्रहारिणी ॥ १४४ ॥
सुस्मितेन्दुमुखी नम्या जयाप्रियसखी तथा ।
अनादिनिधना प्रेष्ठा चित्रमाल्यानुलेपना ॥ १४५ ॥
कोटिचन्द्रप्रतीकाशा कूटजालप्रमाथिनी ।
कृत्याप्रहारिणी चैव मारणोच्चाटनी तथा ॥ १४६ ॥
सुरासुरप्रवन्द्याङ्घ्रिर्मोहघ्नी ज्ञानदायिनी ।
षड्वैरिनिग्रहकरी वैरिविद्राविणी तथा ॥ १४७ ॥
भूतसेव्या भूतदात्री भूतपीडाविमर्दिका ।
नारदस्तुतचारित्रा वरदेशा वरप्रदा ॥ १४८ ॥
वामदेवस्तुता चैव कामदा सोमशेखरा ।
दिक्पालसेविता भव्या भामिनी भावदायिनी ॥ १४९ ॥
स्त्रीसौभाग्यप्रदात्री च भोगदा रोगनाशिनी ।
व्योमगा भूमिगा चैव मुनिपूज्यपदाम्बुजा ।
वनदुर्गा च दुर्बोधा महादुर्गा प्रकीर्तिता ॥ १५० ॥

## फलश्रुतिः

इतीदं कीर्तिदं भद्र दुर्गानामसहस्रकम् ।
त्रिसन्ध्यं यः पठेन्नित्यं तस्य लक्ष्मीः स्थिरा भवेत् ॥ १ ॥
ग्रहभूतपिशाचादिपीडा नश्यत्यसंशयम् ।
बालग्रहादिपीडायाः शान्तिर्भवति कीर्तनात् ॥ २ ॥
मारिकादिमहारोगे पठतां सौख्यदं नृणाम् ।
व्यवहारे च जयदं शत्रुबाधानिवारकम् ॥ ३ ॥
दम्पत्योः कलहे प्राप्ते मिथः प्रेमाभिवर्धकम् ।
आयुरारोग्यदं पुंसां सर्वसम्पत्प्रदायकम् ॥ ४ ॥
विद्याभिवर्धकं नित्यं पठतामर्थसाधकम् ।
शुभदं शुभकार्येषु पठतां शृणुतामपि ॥ ५ ॥
यः पूजयति दुर्गां तां दुर्गानामसहस्रकैः ।
पुष्पैः कुङ्कुमसम्मिश्रैः स तु यत्काङ्क्षते हृदि ॥ ६ ॥
तत्सर्वं समवाप्नोति नास्ति नास्त्यत्र संशयः ।
यन्मुखे ध्रियते नित्यं दुर्गानामसहस्रकम् ॥ ७ ॥
किं तस्येतरमन्त्रौघैः कार्यं धन्यतमस्य हि ।
दुर्गानामसहस्रस्य पुस्तकं यद्गृहे भवेत् ॥ ८ ॥
न तत्र ग्रहभूतादिबाधा स्यान्मङ्गलास्पदे ।
तद्गृहं पुण्यदं क्षेत्रं देवीसान्निध्यकारकम् ॥ ९ ॥

एतस्य स्तोत्रमुख्यस्य पाठकः श्रेष्ठमन्त्रवित् ।
देवतायाः प्रसादेन सर्वपूज्यः सुखी भवेत् ॥ १० ॥

इत्येतन्नगराजेन कीर्तितं मुनिसत्तम ।
गुह्याद्गुह्यतरं स्तोत्रं त्वयि स्नेहात् प्रकीर्तितम् ॥ ११ ॥

भक्ताय श्रद्धधानाय केवलं कीर्त्यतामिदम् ।
हृदि धारय नित्यं त्वं देव्यनुग्रहसाधकम् ॥ १२ ॥

**इति श्रीस्कान्दपुराणे स्कन्दनारदसंवादे दुर्गासहस्रनामस्तोत्रं सम्पूर्णम् ॥**



॥ श्रीः ॥

## श्री ललितासहस्रनामस्तोत्रप्रारम्भः [55]

**॥ पूर्वभागः ॥**

॥ श्री ललितामहात्रिपुरसुन्दर्यै नमः ॥

**श्री विद्यां जगतां धात्रीं सर्गस्स्थि लयेश्वरीम् ।**
**नमामि ललितां नित्यां महात्रिपुरसुन्दरीम् ॥**

अगस्त्य उवाच –

अश्वानन महाबुद्धे सर्वशास्त्रविशारद ।
कथितं ललितादेव्याश्चरितं परमाद्भुतम् ॥ १ ॥

पूर्वं प्रादुर्भवो मातुस्ततः पट्टाभिषेचनम् ।
भण्डासुरवधश्चैव विस्तरेण त्वयोदितः ॥ २ ॥

वर्णितं श्रीपुरं चापि महाविभवविस्तरम् ।
श्रीमत्पञ्चदशाक्षर्याः महिमा वर्णितस्तथा ॥ ३ ॥

षोढान्यासादयो न्यासा न्यासखण्डे समीरिताः ।
अन्तर्यागक्रमश्चैव बहिर्यागक्रमस्तथा ॥ ४ ॥
महायागक्रमश्चैव पूजाखण्डे प्रकीर्तितः ।
पुरश्चरणखण्डे तु जपलक्षणमीरितम् ॥ ५ ॥
होमखण्डे त्वया प्रोक्तो होमद्रव्यविधिक्रमः ।
चक्रराजस्य विद्यायाः श्रीदेव्या देशिकात्मनोः ॥ ६ ॥
रहस्यखण्डे तादात्म्यं परस्परमुदीरितम् ।
स्तोत्रखण्डे बहुविधाः स्तुतयः परिकीर्तिताः ॥ ७ ॥
मन्त्रिणीदण्डिनीदेव्योः प्रोक्ते नामसहस्रके ।
न तु श्री ललितादेव्याः प्रोक्तं नामसहस्रकम् ॥ ८ ॥
तत्र मे संशयो जातो हयग्रीव दयानिधे ।
किं वा त्वया विस्मृतं तज्ज्ञात्त्वा वा समुपेक्षितम् ॥ ९ ॥
मम वा योग्यता नास्ति श्रोतुं नामसहस्रकम् ।
किमर्थं भवता नोक्तं तत्र मे कारणं वद ॥ १० ॥

सूत उवाच –

इति पृष्टो हयग्रीवो मुनिना कुम्भजन्मना ।
प्रहृष्टो वचनं प्राह तापसं कुम्भसंभवम् ॥ ११ ॥

श्री हयग्रीव उवाच –

लोपामुद्रापतेऽगस्त्य सावधानमनाः शृणु ।
नाम्नां सहस्रं यन्नोक्तं कारणं तद्वदामि ते ॥ १२ ॥

रहस्यमिति मत्वाऽहं नोक्तवांस्ते न चान्यथा ।
पुनश्च पृच्छते भक्त्या तस्मात्तत्ते वदाम्यहम् ॥ १३ ॥
ब्रूयाच्छिष्याय भक्ताय रहस्यमपि देशिकः ।
भवता न प्रदेयं स्यादभक्ताय कदाचन ॥ १४ ॥
न शठाय न दुष्टाय नाविश्वासाय कर्हिचित् ।
श्रीमातृभक्तियुक्ताय श्रीविद्याराजवेदिने ॥ १५ ॥
उपासकाय शुद्धाय देयं नामसहस्रकम् ।
यानि नामसहस्राणि सद्यः सिद्धिप्रदानि वै ॥ १६ ॥
तन्त्रेषु ललितादेव्यास्तेषु मुख्यमिदं मुने ।
श्रीविद्यैव तु मन्त्राणां तत्र कादिर्यथा परा ॥ १७ ॥
पुराणां श्रीपुरमिव शक्तीनां ललिता यथा ।
श्रीविद्योपासकानां च यथा देवो परः शिवः ॥ १८ ॥
तथा नामसहस्रेषु वरमेतत् प्रकीर्तितम् ।
यथाऽस्य पठनाद्देवी प्रीयते ललिताम्बिका ॥ १९ ॥
अन्यनामसहस्रस्य पाठान्न प्रीयते तथा ।
श्रीमातुः प्रीतये तस्मादनिशं कीर्तयेदिदम् ॥ २० ॥
बिल्वपत्रैश्चक्रराजे योऽर्चयेल्ललिताम्बिकाम् ।
पद्मैर्वा तुलसीपुष्पैरेभिर्नामसहस्रकैः ॥ २१ ॥
सद्यः प्रसादं कुरुते तस्य सिंहासनेश्वरी ।
चक्राधिराजमभ्यर्च्य जप्त्वा पञ्चदशाक्षरीम् ॥ २२ ॥

जपान्ते कीर्तयेन्नित्यमिदं नामसहस्रकम् ।
जपपूजाद्यशक्तश्चेत् पठेन्नामसहस्रकम् ॥ २३ ॥
साङ्गार्चने साङ्गजपे यत्फलं तदवाप्नुयात् ।
उपासने स्तुतीरन्याः पठेदभ्युदयो हि सः ॥ २४ ॥
इदं नामसहस्रं तु कीर्तयेन्नित्यकर्मवत् ।
चक्रराजार्चनं देव्या जपो नाम्नां च कीर्तनम् ॥ २५ ॥
भक्तस्य कृत्यमेतावदन्यदभ्युदयं विदुः ।
भक्तस्यावश्यकमिदं नामसाहस्रकीर्तनम् ॥ २६ ॥
तत्र हेतुं प्रवक्ष्यामि शृणु त्वं कुम्भसम्भव ।
पुरा श्रीललितादेवी भक्तानां हितकाम्यया ॥ २७ ॥
वाग्देवीर्वशिनीमुख्याः समाहूयेदमब्रवीत् ।
वाग्देवता वशिन्याद्याः शृणुध्वं वचनं मम ॥ २८ ॥
भवत्यो मत्प्रसादेन प्रोल्लसद्वाग्विभूतयः ।
मद्भक्तानां वाग्विभूतिप्रदाने विनियोजिताः ॥ २९ ॥
मच्चक्रस्य रहस्यज्ञा मम नामपरायणाः ।
मम स्तोत्रविधानाय तस्मादाज्ञापयामि वः ॥ ३० ॥
कुरुध्वमङ्कितं स्तोत्रं मम नामसहस्रकैः ।
येन भक्तैः स्तुताया मे सद्यः प्रीतिः पराभवेत् ॥ ३१ ॥

हयग्रीव उवाच –

इत्याज्ञप्ता वचोदेव्यो देव्या श्रीललिताम्बया ।
रहस्यैर्नामभिर्दिव्यैश्चक्रुः स्तोत्रमनुत्तमम् ॥ ३२ ॥

रहस्यनामसाहस्रमिति तद्विश्रुतं परम् ।
ततः कदाचित् सदसि स्थित्वा सिंहासनेऽम्बिका ॥ ३३ ॥
स्वसेवावसरं प्रादात् सर्वेषां कुम्भसम्भव ।
सेवार्थमागतास्तत्र ब्रह्माणी ब्रह्मकोटयः ॥ ३४ ॥
लक्ष्मीनारायणानां च कोटयः समुपागताः ।
गौरीकोटिसमेतानां रुद्राणामपि कोटयः ॥ ३५ ॥
मन्त्रिणीदण्डिनीमुख्याः सेवार्थं याः समागताः ।
शक्तयो विविधाकारास्तासां संख्या न विद्यते ॥ ३६ ॥
दिव्यौघा मानवौघाश्च सिद्धौघाश्च समागताः ।
तत्र श्रीललितादेवी सर्वेषां दर्शनं ददौ ॥ ३७ ॥
तेषु दृष्टोपविष्टेषु स्वे स्वे स्थाने यथाक्रमम् ।
ततः श्रीललितादेवीकटाक्षाक्षेपचोदिताः ॥ ३८ ॥
उत्थाय वशिनीमुख्या बद्धाञ्जलिपुटास्तदा ।
अस्तुवन्नामसाहस्रैः स्वकृतैर्ललिताम्बिकाम् ॥ ३९ ॥
श्रुत्वा स्तवं प्रसन्नाभूल्ललिता परमेश्वरी ।
ते सर्वे विस्मयं जग्मुर्ये तत्र सदसि स्थिताः ॥ ४० ॥
ततः प्रोवाच ललिता सदस्यान् देवतागणान् ।
ममाज्ञयैव वाग्देव्यश्चक्रुः स्तोत्रमनुत्तमम् ॥ ४१ ॥
अङ्कितं नामभिर्दिव्यैर्मम प्रीतिविधायकैः ।
तत्पठध्वं सदा यूयं स्तोत्रं मत्प्रीतिवृद्धये ॥ ४२ ॥

प्रवर्तयध्वं भक्तेषु मम नामसहस्रकम् ।
इदं नामसहस्रं मे यो भक्तः पठते सकृत् ॥ ४३ ॥
स मे प्रियतमो ज्ञेयस्तस्मै कामान् ददाम्यहम् ।
श्रीचक्रे मां समभ्यर्च्य जप्त्वा पञ्चदशाक्षरीम् ॥ ४४ ॥
पश्चान्नामसहस्रं मे कीर्तयेन्मम तुष्टये ।
मामर्चयतु वा मा वा विद्यां जपतु वा न वा ॥ ४५ ॥
कीर्तयेन्नामसाहस्रमिदं मत्प्रीतये सदा ।
मत्प्रीत्या सकलान् कामांल्लभते नात्र संशयः ॥ ४६ ॥
तस्मान्नामसहस्रं मे कीर्तयध्वं सदाऽऽदरात् ।

हयग्रीव उवाच –

इति श्रीललितेशानी शास्ति देवान् सहानुगान् ॥ ४७ ॥
तदाज्ञया तदारभ्य ब्रह्मविष्णुमहेश्वराः ।
शक्तयो मन्त्रिणीमुख्या इदं नामसहस्रकम् ॥ ४८ ॥
पठन्ति भक्त्या सततं ललितापरितुष्टये ।
तस्मादवश्यं भक्तेन कीर्तनीयमिदं मुने ॥ ४९ ॥
आवश्यकत्वे हेतुस्ते मया प्रोक्तो मुनीश्वर ।
इदानीं नामसाहस्रं वक्ष्यामि श्रद्धया शृणु ॥ ५० ॥

॥ न्यासः ॥

अस्य श्रीललितासहस्रनामस्तोत्रमाला मन्त्रस्य वशिन्यादि वाग्देवता ऋषयः । अनुष्टुप् छन्दः । श्रीललितापरमेश्वरी देवता ।

श्रीमद्वाग्भवकूटेति बीजम् । मध्यकूटेति शक्तिः । शक्तिकूटेति कीलकम् । श्रीललितामहात्रिपुरसुन्दरी-प्रसादसिद्धिद्वारा चिन्तित-फलावाप्त्यर्थे जपे विनियोगः । लमित्यादिपञ्चपूजां कुर्यात् ।

## ध्यानम्

सिन्दूरारुणविग्रहां त्रिनयनां माणिक्यमौलिस्फुरत्
तारानायकशेखरां स्मितमुखीमापीनवक्षोरुहाम् ।
पाणिभ्यामलिपूर्णरत्नचषकं रक्तोत्पलं बिभ्रतीं
सौम्यां रत्नघटस्थरक्तचरणां ध्यायेत्परामम्बिकाम् ॥



## ॥ श्री ललिता-सहस्रनाम-स्तोत्रम् ॥

ॐ श्रीमाता श्रीमहाराज्ञी श्रीमत्सिंहासनेश्वरी ।
चिदग्नि-कुण्ड-सम्भूता देवकार्य-समुद्यता ॥ १ ॥
उद्यद्भानु-सहस्राभा चतुर्बाहु-समन्विता ।
रागस्वरूप-पाशाढ्या क्रोधाकाराङ्कुशोज्ज्वला ॥ २ ॥
मनोरूपेक्षु-कोदण्डा पञ्चतन्मात्र-सायका ।
निजारुण-प्रभापूर-मज्जद्ब्रह्माण्ड-मण्डला ॥ ३ ॥
चम्पकाशोक-पुन्नाग-सौगन्धिक-लसत्कचा ।
कुरुविन्दमणि-श्रेणी-कनत्कोटीर-मण्डिता ॥ ४ ॥
अष्टमीचन्द्र-विभ्राज-दलिकस्थल-शोभिता ।
मुखचन्द्र-कलङ्काभ-मृगनाभि-विशेषका ॥ ५ ॥

वदनस्मर-माङ्गल्य-गृहतोरण-चिल्लिका ।
वक्त्रलक्ष्मी-परीवाह-चलन्मीनाभ-लोचना ॥ ६ ॥
नवचम्पक-पुष्पाभ-नासादण्ड-विराजिता ।
ताराकान्ति-तिरस्कारि-नासाभरण-भासुरा ॥ ७ ॥
कदम्बमञ्जरी-क्लृप्त-कर्णपूर-मनोहरा ।
ताटङ्क-युगली-भूत-तपनोडुप-मण्डला ॥ ८ ॥
पद्मरागशिलादर्श-परिभावि-कपोलभूः ।
नवविद्रुम-बिम्बश्री-न्यक्कारि-रदनच्छदा ॥ ९ ॥
शुद्धविद्यांकुराकार-द्विजपंक्ति-द्वयोज्ज्वला ।
कर्पूरवीटिकामोद-समाकर्ष-द्दिगन्तरा ॥ १० ॥
निज-सल्लाप-माधुर्य-विनिर्भर्त्सित-कच्छपी ।
मन्दस्मित-प्रभापूर-मज्जत्कामेश-मानसा ॥ ११ ॥
अनाकलित-सादृश्य-चुबुकश्री-विराजिता ।
कामेश-बद्ध-माङ्गल्य-सूत्र-शोभित-कन्धरा ॥ १२ ॥
कनकाङ्गद-केयूर-कमनीय-भुजान्विता ।
रत्नग्रैवेय-चिन्ताक-लोल-मुक्ता-फलान्विता ॥ १३ ॥
कामेश्वर-प्रेमरत्न-मणि-प्रतिपण-स्तनी ।
नाभ्यालवाल-रोमालि-लता-फल-कुचद्वयी ॥ १४ ॥
लक्ष्यरोम-लताधारता-समुन्नेय-मध्यमा ।
स्तनभार-दलन्मध्य-पट्टबन्ध-वलित्रया ॥ १५ ॥

अरुणारुणकौसुम्भ-वस्त्र-भास्वत्-कटीतटी ।
रत्न-किङ्किणिका-रम्य-रशना-दाम-भूषिता ॥ १६ ॥
कामेश-ज्ञात-सौभाग्य-मार्दवोरु-द्वयान्विता ।
माणिक्य-मुकुटाकार-जानुद्वय-विराजिता ॥ १७ ॥
इन्द्रगोप-परिक्षिप्तस्मरतूणाभ-जंघिका ।
गूढगुल्फा कूर्मपृष्ठ-जयिष्णु-प्रपदान्विता ॥ १८ ॥
नख-दीधिति-संछन्न-नमज्जन-तमोगुणा ।
पदद्वय-प्रभाजाल-पराकृत-सरोरुहा ॥ १९ ॥
सिञ्जान-मणिमञ्जीर मण्डित-श्री-पदाम्बुजा ।
मराली-मन्दगमना महालावण्य-शेवधिः ॥ २० ॥
सर्वारुणाऽनवद्याङ्गी सर्वाभरण-भूषिता ।
शिव-कामेश्वराङ्कस्था शिवा स्वाधीन-वल्लभा ॥ २१ ॥
सुमेरु-मध्य-शृङ्गस्था श्रीमन्नगर-नायिका ।
चिन्तामणि गृहान्तस्था पञ्च-ब्रह्मासन-स्थिता ॥ २२ ॥
महापद्माटवी-संस्था कदम्बवन-वासिनी ।
सुधासागर-मध्यस्था कामाक्षी कामदायिनी ॥ २३ ॥
देवर्षि-गण-संघात-स्तूयमानात्म-वैभवा ।
भण्डासुर-वधोद्युक्त-शक्तिसेना-समन्विता ॥ २४ ॥
सम्पत्करी-समारूढ-सिन्धुर-व्रज-सेविता ।
अश्वारूढाधिष्ठिताश्व-कोटि-कोटिभि-रावृता ॥ २५ ॥

चक्रराज-रथारूढ-सर्वायुध-परिष्कृता ।
गेयचक्र-रथारूढ-मन्त्रिणी-परिसेविता ॥ २६ ॥
किरिचक्र-रथारूढ-दण्डनाथा-पुरस्कृता ।
ज्वालामालिनिकाक्षिप्त-वह्निप्राकार-मध्यगा ॥ २७ ॥
भण्डसैन्य-वधोद्युक्त-शक्ति-विक्रम-हर्षिता ।
नित्या-पराक्रमाटोप-निरीक्षण-समुत्सुका ॥ २८ ॥
भण्डपुत्र-वधोद्युक्त-बाला-विक्रम-नन्दिता ।
मन्त्रिण्यम्बा-विरचित-विषङ्ग-वध-तोषिता ॥ २९ ॥
विशुक्र-प्राणहरण-वाराही-वीर्य-नन्दिता ।
कामेश्वर-मुखालोक-कल्पित-श्रीगणेश्वरा ॥ ३० ॥
महागणेश-निर्भिन्न-विघ्नयन्त्र-प्रहर्षिता ।
भण्डासुरेन्द्र-निर्मुक्त-शस्त्र-प्रत्यस्त्र-वर्षिणी ॥ ३१ ॥
कराङ्गुलि-नखोत्पन्न-नारायण-दशाकृतिः ।
महा-पाशुपतास्त्राग्नि-निर्दग्धासुर-सैनिका ॥ ३२ ॥
कामेश्वरास्त्र-निर्दग्ध-सभण्डासुर-शून्यका ।
ब्रह्मोपेन्द्र-महेन्द्रादि-देव-संस्तुत-वैभवा ॥ ३३ ॥
हर-नेत्राग्नि-संदग्ध-काम-सञ्जीवनौषधिः ।
श्रीमद्वाग्भव-कूटैक-स्वरूप-मुख-पङ्कजा ॥ ३४ ॥
कण्ठाधः-कटि-पर्यन्त-मध्यकूट-स्वरूपिणी ।
शक्तिकूटैकतापन्न-कट्यधोभाग-धारिणी ॥ ३५ ॥

मूलमन्त्रात्मिका मूलकूटत्रय-कलेवरा ।
कुलामृतैक-रसिका-कुलसंकेत-पालिनी ॥ ३६ ॥
कुलाङ्गना कुलान्तस्था कौलिनी कुलयोगिनी ।
अकुला समयान्तस्था समयाचार-तत्परा ॥ ३७ ॥
मूलाधारैक-निलया ब्रह्मग्रन्थि-विभेदिनी ।
मणिपूरान्तरुदिता विष्णुग्रन्थि-विभेदिनी ॥ ३८ ॥
आज्ञाचक्रान्तरालस्था रुद्रग्रन्थि-विभेदिनी ।
सहस्राराम्बुजारूढा सुधासाराभिवर्षिणी ॥ ३९ ॥
तडिल्लता समरुचिः षट्चक्रोपरि-संस्थिता ।
महासक्तिः कुण्डलिनी बिसतन्तु-तनीयसी ॥ ४० ॥
भवानी भावनागम्या भवारण्य-कुठारिका ।
भद्रप्रिया भद्रमूर्ति-र्भक्त-सौभाग्यदायिनी ॥ ४१ ॥
भक्तिप्रिया भक्तिगम्या भक्तिवश्या भयापहा ।
शाम्भवी शारदाराध्या शर्वाणी शर्मदायिनी ॥ ४२ ॥
शाङ्करी श्रीकरी साध्वी शरच्चन्द्र-निभानना ।
शातोदरी शान्तिमती निराधारा निरञ्जना ॥ ४३ ॥
निर्लेपा निर्मला नित्या निराकारा निराकुला ।
निर्गुणा निष्कला शान्ता निष्कामा निरुपप्लवा ॥ ४४ ॥
नित्यमुक्ता निर्विकारा निष्प्रपञ्चा निराश्रया ।
नित्यशुद्धा नित्यबुद्धा निरवद्या निरन्तरा ॥ ४५ ॥

निष्कारणा निष्कलङ्का निरुपाधि-र्निरीश्वरा ।
नीरागा रागमथनी निर्मदा मदनाशिनी ॥ ४६ ॥
निश्चिन्ता निरहङ्कारा निर्मोहा मोहनाशिनी ।
निर्ममा ममताहन्त्री निष्पापा पापनाशिनी ॥ ४७ ॥
निष्क्रोधा क्रोधशमनी निर्लोभा लोभनाशिनी ।
निःसंशया संशयघ्नी निर्भवा भवनाशिनी ॥ ४८ ॥
निर्विकल्पा निराबाधा निर्भेदा भेदनाशिनी ।
निर्नाशा मृत्युमथनी निष्क्रिया निष्परिग्रहा ॥ ४९ ॥
निस्तुला नीलचिकुरा निरपाया निरत्यया ।
दुर्लभा दुर्गमा दुर्गा दुःखहन्त्री सुखप्रदा ॥ ५० ॥
दुष्टदूरा दुराचारशमनी दोष-वर्जिता ।
सर्वज्ञा सान्द्रकरुणा समानाधिक-वर्जिता ॥ ५१ ॥
सर्वशक्तिमयी सर्वमङ्गला सद्गति-प्रदा ।
सर्वेश्वरी सर्वमयी सर्वमन्त्र-स्वरूपिणी ॥ ५२ ॥
सर्व-यन्त्रात्मिका सर्व-तन्त्ररूपा मनोन्मनी ।
माहेश्वरी महादेवी महालक्ष्मी-र्मृडप्रिया ॥ ५३ ॥
महारूपा महापूज्या महा-पातक-नाशिनी ।
महामाया महासत्त्वा महाशक्ति-र्महारतिः ॥ ५४ ॥
महाभोगा महैश्वर्या महावीर्या महाबला ।
महाबुद्धि-र्महासिद्धि-र्महायोगेश्वरेश्वरी ॥ ५५ ॥

महातन्त्रा महामन्त्रा महायन्त्रा महासना ।
महायाग-क्रमाराध्या महाभैरव-पूजिता ॥ ५६ ॥
महेश्वर-महाकल्प-महाताण्डव-साक्षिणी ।
महाकामेश-महिषी महात्रिपुरसुन्दरी ॥ ५७ ॥
चतुष्षष्ट्युपचाराढ्या चतुष्षष्टिकलामयी ।
महाचतुः-षष्टिकोटि-योगिनी-गणसेविता ॥ ५८ ॥
मनुविद्या चन्द्रविद्या चन्द्रमण्डल-मध्यगा ।
चारुरूपा चारुहासा चारुचन्द्र-कलाधरा ॥ ५९ ॥
चराचर-जगन्नाथा चक्रराज-निकेतना ।
पार्वती पद्मनयना पद्मराग-समप्रभा ॥ ६० ॥
पञ्चप्रेतासनासीना पञ्चब्रह्मस्वरूपिणी ।
चिन्मयी परमानन्दा विज्ञानघनरूपिणी ॥ ६१ ॥
ध्यान-ध्यातृ-ध्येयरूपा धर्माधर्म-विवर्जिता ।
विश्वरूपा जागरिणी स्वपन्ती तैजसात्मिका ॥ ६२ ॥
सुप्ता प्राज्ञात्मिका तुर्या सर्वावस्था-विवर्जिता ।
सृष्टिकर्त्री ब्रह्मरूपा गोप्त्री गोविन्दरूपिणी ॥ ६३ ॥
संहारिणी रुद्ररूपा तिरोधानकरीश्वरी ।
सदाशिवाऽनुग्रहदा पञ्चकृत्यपरायणा ॥ ६४ ॥
भानुमण्डल-मध्यस्था भैरवी भगमालिनी ।
पद्मासना भगवती पद्मनाभ-सहोदरी ॥ ६५ ॥

उन्मेष-निमिषोत्पन्न-विपन्न-भुवनावलिः ।
सहस्रशीर्षवदना सहस्राक्षी सहस्रपात् ॥ ६६ ॥
आब्रह्म-कीट-जननी वर्णाश्रम-विधायिनी ।
निजाज्ञारूप-निगमा पुण्यापुण्य-फलप्रदा ॥ ६७ ॥
श्रुति-सीमन्त-सिन्दूरी-कृत-पादाब्जधूलिका ।
सकलागम-सन्दोह-शुक्ति-सम्पुट-मौक्तिका ॥ ६८ ॥
पुरुषार्थ-प्रदा पूर्णा भोगिनी भुवनेश्वरी ।
अम्बिकाऽनादि-निधना हरिब्रह्मेन्द्र-सेविता ॥ ६९ ॥
नारायणी नादरूपा नामरूप-विवर्जिता ।
ह्रीं कारी ह्रीमती हृद्या हेयोपादेय-वर्जिता ॥ ७० ॥
राजराजार्चिता राज्ञी रम्या राजीव-लोचना ।
रञ्जनी रमणी रस्या रणत्किङ्किणि-मेखला ॥ ७१ ॥
रमा राकेन्दु-वदना रतिरूपा रतिप्रिया ।
रक्षाकरी राक्षसघ्नी रामा रमणलम्पटा ॥ ७२ ॥
काम्या कामकलारूपा कदम्ब-कुसुम-प्रिया ।
कल्याणी जगती-कन्दा करुणा-रस-सागरा ॥ ७३ ॥
कलावती कलालापा कान्ता कादम्बरी-प्रिया ।
वरदा वामनयना वारुणी-मद-विह्वला ॥ ७४ ॥
विश्वाधिका वेदवेद्या विन्ध्याचल-निवासिनी ।
विधात्री वेदजननी विष्णुमाया विलासिनी ॥ ७५ ॥

क्षेत्रस्वरूपा क्षेत्रेशी क्षेत्र-क्षेत्रज्ञ-पालिनी ।
क्षयवृद्धि-विनिर्मुक्ता क्षेत्रपाल-समर्चिता ॥ ७६ ॥
विजया विमला वन्द्या वन्दारु-जन-वत्सला ।
वाग्वादिनी वामकेशी वह्निमण्डल-वासिनी ॥ ७७ ॥
भक्तिमत्-कल्पलतिका पशुपाश-विमोचिनी ।
संहृताशेष-पाषण्डा सदाचार-प्रवर्तिका ॥ ७८ ॥
तापत्रयाग्नि-सन्तप्त-समाह्लादन-चन्द्रिका ।
तरुणी तापसाराध्या तनुमध्या तमोऽपहा ॥ ७९ ॥
चिति-स्तत्पद-लक्ष्यार्था चिदेकरस-रूपिणी ।
स्वात्मानन्द-लवीभूत-ब्रह्माद्यानन्द-सन्ततिः ॥ ८० ॥
परा प्रत्यक्-चितीरूपा पश्यन्ती परदेवता ।
मध्यमा वैखरी-रूपा भक्त-मानस-हंसिका ॥ ८१ ॥
कामेश्वर-प्राणनाडी कृतज्ञा कामपूजिता ।
शृङ्गार-रस-सम्पूर्णा जया जालन्धर-स्थिता ॥ ८२ ॥
ओड्याण-पीठ-निलया बिन्दु-मण्डलवासिनी ।
रहोयाग-क्रमाराध्या रहस्तर्पण-तर्पिता ॥ ८३ ॥
सद्यःप्रसादिनी विश्वसाक्षिणी साक्षिवर्जिता ।
षडङ्गदेवता-युक्ता षाड्गुण्य-परिपूरिता ॥ ८४ ॥
नित्य-क्लिन्ना निरुपमा निर्वाण-सुख-दायिनी ।
नित्याषोडशिका-रूपा श्रीकण्ठार्ध-शरीरिणी ॥ ८५ ॥

प्रभावती प्रभारूपा प्रसिद्धा परमेश्वरी ।
मूलप्रकृति-रव्यक्ता व्यक्ताव्यक्त-स्वरूपिणी ॥ ८६ ॥
व्यापिनी विविधाकारा विद्याऽविद्या-स्वरूपिणी ।
महाकामेश-नयन-कुमुदाह्लाद-कौमुदी ॥ ८७ ॥
भक्त-हार्द-तमो-भेद-भानुमद्भानु-सन्ततिः ।
शिवदूती शिवाराध्या शिवमूर्तिः शिवङ्करी ॥ ८८ ॥
शिवप्रिया शिवपरा शिष्टेष्टा शिष्टपूजिता ।
अप्रमेया स्वप्रकाशा मनो-वाचामगोचरा ॥ ८९ ॥
चिच्छक्ति-श्चेतना-रूपा जडशक्ति-र्जडात्मिका ।
गायत्री व्याहृतिः सन्ध्या द्विजबृन्द-निषेविता ॥ ९० ॥
तत्त्वासना तत्त्वमयी पञ्चकोशान्तर-स्थिता ।
निःसीम-महिमा नित्य-यौवना मदशालिनी ॥ ९१ ॥
मदघूर्णित-रक्ताक्षी मदपाटल-गण्डभूः ।
चन्दन-द्रव-दिग्धाङ्गी चाम्पेय-कुसुम-प्रिया ॥ ९२ ॥
कुशला कोमलाकारा कुरुकुल्ला कुलेश्वरी ।
कुलकुण्डालया कौलमार्ग-तत्पर-सेविता ॥ ९३ ॥
कुमार-गणनाथाम्बा तुष्टिः पुष्टि-र्मति-र्धृतिः ।
शान्तिः स्वस्तिमती कान्ति-र्नन्दिनी विघ्ननाशिनी ॥ ९४ ॥
तेजोवती त्रिनयना लोलाक्षी-कामरूपिणी ।
मालिनी हंसिनी माता मलयाचल-वासिनी ॥ ९५ ॥

सुमुखी नलिनी सुभ्रूः शोभना सुरनायिका ।
कालकण्ठी कान्तिमती क्षोभिणी सूक्ष्मरूपिणी ॥ ९६ ॥
वज्रेश्वरी वामदेवी वयोऽवस्थाविवर्जिता ।
सिद्धेश्वरी सिद्धविद्या सिद्धमाता यशस्विनी ॥ ९७ ॥
विशुद्धिचक्र-निलया-ऽऽरक्तवर्णा त्रिलोचना ।
खट्वाङ्गादि-प्रहरणा वदनैक-समन्विता ॥ ९८ ॥
पायसान्न-प्रिया त्वक्स्था पशुलोक-भयङ्करी ।
अमृतादि-महाशक्ति-संवृता डाकिनीश्वरी ॥ ९९ ॥
अनाहताब्ज-निलया श्यामाभा वदनद्वया ।
दंष्ट्रोज्ज्वलाऽक्षमालादिधरा रुधिरसंस्थिता ॥ १०० ॥
कालरात्र्यादि-शक्त्यौघ-वृता स्निग्धौदन-प्रिया ।
महावीरेन्द्र-वरदा राकिण्यम्बा-स्वरूपिणी ॥ १०१ ॥
मणिपूराब्ज-निलया वदनत्रय-संयुता ।
वज्रादिकायुधोपेता डामर्यादिभि-रावृता ॥ १०२ ॥
रक्तवर्णा मांसनिष्ठा गुडान्न-प्रीत-मानसा ।
समस्तभक्त-सुखदा लाकिन्यम्बा-स्वरूपिणी ॥ १०३ ॥
स्वाधिष्ठानाम्बुजगता चतुर्वक्त्र-मनोहरा ।
शूलाद्यायुध-सम्पन्ना पीतवर्णाऽतिगर्विता ॥ १०४ ॥
मेदो-निष्ठा मधुप्रीता बन्धिन्यादि-समन्विता ।
दध्यन्नासक्त-हृदया काकिनी-रूप-धारिणी ॥ १०५ ॥

मूलाधाराम्बुजारूढा पञ्चवक्त्राऽस्थिसंस्थिता ।
अङ्कुशादि-प्रहरणा वरदादि-निषेविता ॥ १०६ ॥

मुद्गौदनासक्त-चित्ता साकिन्यम्बा-स्वरूपिणी ।
आज्ञा-चक्राब्ज-निलया शुक्लवर्णा षडानना ॥ १०७ ॥

मज्जा-संस्था हंसवती-मुख्य-शक्ति-समन्विता ।
हरिद्रान्नैक-रसिका हाकिनी-रूप-धारिणी ॥ १०८ ॥

सहस्रदल-पद्मस्था सर्व-वर्णोप-शोभिता ।
सर्वायुध-धरा शुक्ल-संस्थिता सर्वतोमुखी ॥ १०९ ॥

सर्वौदन-प्रीतचित्ता याकिन्यम्बा-स्वरूपिणी ।
स्वाहा स्वधामतिर्मेधा श्रुति-स्मृति-रनुत्तमा ॥ ११० ॥

पुण्यकीर्तिः पुण्यलभ्या पुण्यश्रवण-कीर्तना ।
पुलोमजार्चिता बन्धमोचनी बन्धुरालका ॥ १११ ॥

विमर्शरूपिणी विद्या वियदादि-जगत्प्रसूः ।
सर्वव्याधि-प्रशमनी सर्वमृत्यु-निवारिणी ॥ ११२ ॥

अग्रगण्या-ऽचिन्त्यरूपा कलिकल्मष-नाशिनी ।
कात्यायनी कालहन्त्री कमलाक्ष-निषेविता ॥ ११३ ॥

ताम्बूल-पूरित-मुखी दाडिमी-कुसुम-प्रभा ।
मृगाक्षी मोहिनी मुख्या मृडानी मित्ररूपिणी ॥ ११४ ॥

नित्य-तृप्ता भक्तिनिधि-र्नियन्त्री निखिलेश्वरी ।
मैत्र्यादि-वासनालभ्या महा-प्रलय-साक्षिणी ॥ ११५ ॥

पराशक्तिः परानिष्ठा प्रज्ञानघन-रूपिणी ।
माध्वीपानालसा मत्ता मातृका-वर्ण-रूपिणी ॥ ११६ ॥
महाकैलास-निलया मृणाल-मृदु-दोर्लता ।
महनीया दयामूर्ति-र्महासाम्राज्य-शालिनी ॥ ११७ ॥
आत्मविद्या महाविद्या श्रीविद्या कामसेविता ।
श्रीषोडशाक्षरीविद्या त्रिकूटा कामकोटिका ॥ ११८ ॥
कटाक्ष-किङ्करी-भूत-कमला-कोटि-सेविता ।
शिरःस्थिता चन्द्रनिभा भालस्थेन्द्र-धनुः-प्रभा ॥ ११९ ॥
हृदयस्था रविप्रख्या त्रिकोणान्तर-दीपिका ।
दाक्षायणी दैत्यहन्त्री दक्षयज्ञविनाशिनी ॥ १२० ॥
दरान्दोलित-दीर्घाक्षी दरहासोज्ज्वलन्मुखी ।
गुरु-मूर्ति-र्गुणनिधि-र्गोमाता गुहजन्म-भूः ॥ १२१ ॥
देवेशी दण्डनीतिस्था दहराकाश-रूपिणी ।
प्रतिपन्मुख्य-राकान्त-तिथि-मण्डल-पूजिता ॥ १२२ ॥
कलात्मिका कलानाथा काव्यालाप-विनोदिनी ।
सचामर-रमा-वाणी-सव्य-दक्षिण-सेविता ॥ १२३ ॥
आदिशक्ति-रमेयाऽऽत्मा परमा पावनाकृतिः ।
अनेक-कोटि-ब्रह्माण्ड-जननी दिव्य-विग्रहा ॥ १२४ ॥
क्लीं कारी केवला गुह्या कैवल्य-पद-दायिनी ।
त्रिपुरा त्रिजगद्वन्द्या त्रिमूर्ति-स्त्रिदशेश्वरी ॥ १२५ ॥

त्र्यक्षरी दिव्य-गन्धाढ्या सिन्दूर-तिलकाञ्चिता ।
उमा शैलेन्द्रतनया गौरी गन्धर्व-सेविता ॥ १२६ ॥
विश्वगर्भा स्वर्णगर्भा-ऽवरदा वागधीश्वरी ।
ध्यानगम्या-ऽपरिच्छेद्या ज्ञानदा ज्ञानविग्रहा ॥ १२७ ॥
सर्व-वेदान्त-सम्वेद्या सत्यानन्द-स्वरूपिणी ।
लोपामुद्रार्चिता लीलाक्लृप्त-ब्रह्माण्ड-मण्डला ॥ १२८ ॥
अदृश्या दृश्यरहिता विज्ञात्री वेद्य-वर्जिता ।
योगिनी योगदा योग्या योगानन्दा युगन्धरा ॥ १२९ ॥
इच्छाशक्ति-ज्ञानशक्ति-क्रियाशक्ति-स्वरूपिणी ।
सर्वाधारा सुप्रतिष्ठा सदसद्रूप-धारिणी ॥ १३० ॥
अष्टमूर्ति-रजाजैत्री लोकयात्रा-विधायिनी ।
एकाकिनी भूमरूपा निर्द्वैता द्वैतवर्जिता ॥ १३१ ॥
अन्नदा वसुदा वृद्धा ब्रह्मात्मैक्य-स्वरूपिणी ।
बृहती ब्राह्मणी ब्राह्मी ब्रह्मानन्दा बलिप्रिया ॥ १३२ ॥
भाषारूपा बृहत्सेना भावाभाव-विवर्जिता ।
सुखाराध्या शुभकरी शोभनासुलभागतिः ॥ १३३ ॥
राजराजेश्वरी राज्यदायिनी राज्यवल्लभा ।
राजत्कृपा राजपीठ-निवेशित-निजाश्रिता ॥ १३४ ॥
राज्यलक्ष्मीः कोशनाथा चतुरङ्ग-बलेश्वरी ।
साम्राज्य-दायिनी सत्यसन्धा सागरमेखला ॥ १३५ ॥

दीक्षिता दैत्यशमनी सर्वलोकवशङ्करी ।
सर्वार्थदात्री सावित्री सच्चिदानन्द-रूपिणी ॥ १३६ ॥
देशकालापरिच्छिन्ना सर्वगा सर्वमोहिनी ।
सरस्वती शास्त्रमयी गुहाम्बा गुह्यरूपिणी ॥ १३७ ॥
सर्वोपाधि-विनिर्मुक्ता सदाशिव-पतिव्रता ।
सम्प्रदायेश्वरी साध्वी गुरुमण्डल-रूपिणी ॥ १३८ ॥
कुलोत्तीर्णा भगाराध्या माया मधुमती मही ।
गणाम्बा गुह्यकाराध्या कोमलाङ्गी गुरुप्रिया ॥ १३९ ॥
स्वतन्त्रा सर्वतन्त्रेशी दक्षिणामूर्ति-रूपिणी ।
सनकादि-समाराध्या शिवज्ञान-प्रदायिनी ॥ १४० ॥
चित्कलाऽऽनन्द-कलिका प्रेमरूपा प्रियङ्करी ।
नामपारायण-प्रीता नन्दिविद्या नटेश्वरी ॥ १४१ ॥
मिथ्या-जगदधिष्ठाना मुक्तिदा मुक्तिरूपिणी ।
लास्यप्रिया लयकरी लज्जा रम्भादिवन्दिता ॥ १४२ ॥
भवदाव-सुधावृष्टिः पापारण्य-दवानला ।
दौर्भाग्य-तूलवातूला जराध्वान्तरविप्रभा ॥ १४३ ॥
भाग्याब्धि-चन्द्रिका भक्त-चित्त-केकि-घनाघना ।
रोगपर्वत-दम्भोलि-मृत्युदारु-कुठारिका ॥ १४४ ॥
महेश्वरी महाकाली महाग्रासा महाशना ।
अपर्णा चण्डिका चण्डमुण्डासुर-निषूदिनी ॥ १४५ ॥

क्षराक्षरात्मिका सर्वलोकेशी विश्वधारिणी ।
त्रिवर्गदात्री सुभगा त्र्यम्बका त्रिगुणात्मिका ॥ १४६ ॥
स्वर्गापवर्गदा शुद्धा जपापुष्प-निभाकृतिः ।
ओजोवती द्युतिधरा यज्ञरूपा प्रियव्रता ॥ १४७ ॥
दुराराध्या दुराधर्षा पाटली-कुसुम-प्रिया ।
महती मेरुनिलया मन्दार-कुसुम-प्रिया ॥ १४८ ॥
वीराराध्या विराड्रूपा विरजा विश्वतोमुखी ।
प्रत्यग्-रूपा पराकाशा प्राणदा प्राणरूपिणी ॥ १४९ ॥
मार्ताण्ड-भैरवाराध्या मन्त्रिणी-न्यस्त-राज्यधूः ।
त्रिपुरेशी जयत्सेना निस्त्रैगुण्या परापरा ॥ १५० ॥
सत्यज्ञानानन्द-रूपा सामरस्य-परायणा ।
कपर्दिनी कलामाला कामधुक्काम-रूपिणी ॥ १५१ ॥
कलानिधिः काव्यकला रसज्ञा रसशेवधिः ।
पुष्टा पुरातना पूज्या पुष्करा पुष्करेक्षणा ॥ १५२ ॥
परञ्ज्योतिः परन्धाम परमाणुः परात्परा ।
पाशहस्ता पाशहन्त्री परमन्त्र-विभेदिनी ॥ १५३ ॥
मूर्ताऽमूर्ताऽनित्यतृप्ता मुनिमानस-हंसिका ।
सत्यव्रता सत्यरूपा सर्वान्तर्यामिनी सती ॥ १५४ ॥
ब्रह्माणी ब्रह्मजननी बहुरूपा बुधार्चिता ।
प्रसवित्री प्रचण्डाऽऽज्ञा प्रतिष्ठा प्रकटाकृतिः ॥ १५५ ॥

प्राणेश्वरी प्राणदात्री पञ्चाशत्पीठ-रूपिणी ।
विशृंखला विविक्तस्था वीरमाता वियत्प्रसूः ॥ १५६ ॥
मुकुन्दा मुक्तिनिलया मूलविग्रह-रूपिणी ।
भावज्ञा भवरोगघ्नी भवचक्र-प्रवर्तिनी ॥ १५७ ॥
छन्दः सारा शास्त्रसारा मन्त्रसारा तलोदरी ।
उदारकीर्ति-रुद्दामवैभवा वर्णरूपिणी ॥ १५८ ॥
जन्ममृत्यु-जरातप्त-जन-विश्रान्ति-दायिनी ।
सर्वोपनिष-दुद्घुष्टा शान्त्यतीत-कलात्मिका ॥ १५९ ॥
गम्भीरा गगनान्तस्था गर्विता गानलोलुपा ।
कल्पना-रहिता काष्ठाऽकान्ता कान्तार्ध-विग्रहा ॥ १६० ॥
कार्यकारण-निर्मुक्ता कामकेलि-तरङ्गिता ।
कनत्कनक-ताटङ्का लीला-विग्रह-धारिणी ॥ १६१ ॥
अजा क्षयविनिर्मुक्ता मुग्धा क्षिप्र-प्रसादिनी ।
अन्तर्मुख-समाराध्या बहिर्मुख-सुदुर्लभा ॥ १६२ ॥
त्रयी त्रिवर्ग-निलया त्रिस्था त्रिपुर-मालिनी ।
निरामया निरालम्बा स्वात्मारामा सुधासृतिः ॥ १६३ ॥
संसारपङ्क-निर्मग्न-समुद्धरण-पण्डिता ।
यज्ञप्रिया यज्ञकर्त्री यजमान-स्वरूपिणी ॥ १६४ ॥
धर्माधारा धनाध्यक्षा धनधान्य-विवर्धिनी ।
विप्रप्रिया विप्ररूपा विश्वभ्रमण-कारिणी ॥ १६५ ॥

विश्वग्रासा विद्रुमाभा वैष्णवी विष्णुरूपिणी ।
अयोनि-र्योनि-निलया कूटस्था कुलरूपिणी ॥ १६६ ॥
वीरगोष्ठी-प्रिया वीरा नैष्कर्म्या नादरूपिणी ।
विज्ञानकलना कल्या विदग्धा बैन्दवासना ॥ १६७ ॥
तत्त्वाधिका तत्त्वमयी तत्त्वमर्थ-स्वरूपिणी ।
सामगान-प्रिया सोम्या सदाशिव-कुटुम्बिनी ॥ १६८ ॥
सव्यापसव्य-मार्गस्था सर्वापद्विनिवारिणी ।
स्वस्था स्वभावमधुरा धीरा धीरसमर्चिता ॥ १६९ ॥
चैतन्यार्घ्य-समाराध्या चैतन्य-कुसुम-प्रिया ।
सदोदिता सदातुष्टा तरुणादित्य-पाटला ॥ १७० ॥
दक्षिणा-दक्षिणाराध्या दरस्मेर-मुखाम्बुजा ।
कौलिनी-केवलाऽनर्घ्य-कैवल्य-पद-दायिनी ॥ १७१ ॥
स्तोत्र-प्रिया स्तुतिमती श्रुति-संस्तुत-वैभवा ।
मनस्विनी मानवती महेशी मङ्गलाकृतिः ॥ १७२ ॥
विश्वमाता जगद्धात्री विशालाक्षी विरागिणी ।
प्रगल्भा परमोदारा परामोदा मनोमयी ॥ १७३ ॥
व्योमकेशी विमानस्था वज्रिणी वामकेश्वरी ।
पञ्चयज्ञ-प्रिया पञ्चप्रेत-मञ्चाधिशायिनी ॥ १७४ ॥
पञ्चमी पञ्चभूतेशी पञ्चसंख्योपचारिणी ।
शाश्वती शाश्वतैश्वर्या शर्मदा शम्भुमोहिनी ॥ १७५ ॥

धरा धरसुता धन्या धर्मिणी धर्मवर्धिनी ।
लोकातीता गुणातीता सर्वातीता शमात्मिका ॥ १७६ ॥
बन्धूक-कुसुम-प्रख्या बाला लीला-विनोदिनी ।
सुमङ्गली सुखकरी सुवेषाढ्या सुवासिनी ॥ १७७ ॥
सुवासिन्यर्चन-प्रीताऽऽशोभना शुद्ध-मानसा ।
बिन्दु-तर्पण-सन्तुष्टा पूर्वजा त्रिपुराम्बिका ॥ १७८ ॥
दशमुद्रा-समाराध्या त्रिपुराश्रीवशङ्करी
ज्ञानमुद्रा ज्ञानगम्या ज्ञान-ज्ञेय-स्वरूपिणी ॥ १७९ ॥
योनिमुद्रा त्रिखण्डेशी त्रिगुणाम्बा त्रिकोणगा ।
अनघाऽद्भुत-चारित्रा वाञ्छितार्थ-प्रदायिनी ॥ १८० ॥
अभ्यासातिशय-ज्ञाता षडध्वातीत-रूपिणी ।
अव्याज-करुणा-मूर्ति-रज्ञान-ध्वान्त-दीपिका ॥ १८१ ॥
आबाल-गोप-विदिता सर्वानुल्लंघ्य-शासना ।
श्रीचक्रराज-निलया श्रीमत्-त्रिपुरसुन्दरी ॥ १८२ ॥
श्रीशिवा शिव-शक्त्यैक्य-रूपिणी ललिताम्बिका ।
एवं श्रीललितादेव्या नाम्नां साहस्रकं जगुः ॥

**इति श्रीब्रह्माण्डपुराणे उत्तरखण्डे श्रीहयग्रीवागस्त्य-संवादे**
**श्रीललितासहस्रनाम-स्तोत्रं सम्पूर्णम् ॥**



॥ उत्तरभागः ॥

## फलश्रुतिः

इत्येतन्नामसाहस्रं कथितं ते घटोद्भव ।
रहस्यानां रहस्यं च ललिताप्रीतिदायकम् ॥ १ ॥
अनेन सदृशं स्तोत्रं न भूतं न भविष्यति ।
सर्वरोगप्रशमनं सर्वसम्पत्प्रवर्धनम् ॥ २ ॥
सर्वापमृत्युशमनं कालमृत्युनिवारणम् ।
सर्वज्वरार्तिशमनं दीर्घायुष्यप्रदायकम् ॥ ३ ॥
पुत्रप्रदमपुत्राणां पुरुषार्थप्रदायकम् ।
इदं विशेषाच्छ्रीदेव्याः स्तोत्रं प्रीतिविधायकम् ॥ ४ ॥
जपेन्नित्यं प्रयत्नेन ललितोपास्ति तत्परः ।
प्रातः स्नात्वा विधानेन सन्ध्याकर्म समाप्य च ॥ ५ ॥
पूजागृहं ततो गत्वा चक्रराजं समर्चयेत् ।
विद्यां जपेत्सहस्रं वा त्रिशतं शतमेव वा ॥ ६ ॥
रहस्यनामसाहस्रमिदं पश्चात्पठेन्नरः ।
जन्ममध्ये सकृच्चापि य एतत्पठते सुधीः ॥ ७ ॥
तस्य पुण्यफलं वक्ष्ये शृणु त्वं कुम्भसम्भव ।
गङ्गादिसर्वतीर्थेषु यः स्नायात् कोटिजन्मसु ॥ ८ ॥
कोटिलिङ्गप्रतिष्ठां च यः कुर्यादविमुक्तके ।
कुरुक्षेत्रे तु यो दद्यात् कोटिवारं रविग्रहे ॥ ९ ॥
कोटिं सुवर्णभाराणां श्रोत्रियेषु द्विजन्मसु ।
यः कोटिं हयमेधानामाहरेद्गाङ्गरोधसि ॥ १० ॥

आचरेत् कूपकोटीर्यो निर्जले मरुभूतले ।
दुर्भिक्षे यः प्रतिदिनं कोटिब्राह्मणभोजनम् ॥ ११ ॥
श्रद्धया परया कुर्यात् सहस्रपरिवत्सरान् ।
तत्पुण्यकोटिगुणितं भवेत् पुण्यमनुत्तमम् ॥ १२ ॥
रहस्यनामसाहस्रे नाम्नोऽप्येकस्य कीर्तनात् ।
रहस्यनामसाहस्रे नामैकमपि यः पठेत् ॥ १३ ॥
तस्य पापानि नश्यन्ति महान्त्यपि न संशयः ।
नित्यकर्माननुष्ठानान्निषिद्धकरणादपि ॥ १४ ॥
यत्पापं जायते पुंसां तत्सर्वं नश्यति ध्रुवम् ।
बहुनाऽत्र किमुक्तेन शृणु त्वं कलशीसुत ॥ १५ ॥
अत्रैकनाम्नो या शक्तिः पातकानां निवर्तने ।
तन्निवर्त्यमघं कर्तुं नालं लोकाश्चतुर्दश ॥ १६ ॥
यस्त्यक्त्वा नामसाहस्रं पापहानिमभीप्सति ।
स हि शीतनिवृत्त्यर्थं हिमशैलं निषेवते ॥ १७ ॥
भक्तो यः कीर्तयेन्नित्यमिदं नामसहस्रकम् ।
तस्मै श्रीललितादेवी प्रीताऽभीष्टं प्रयच्छति ॥ १८ ॥
अकीर्तयन्निदं स्तोत्रं कथं भक्तो भविष्यति ।
नित्यं सङ्कीर्तनाशक्तः कीर्तयेत् पुण्यवासरे ॥ १९ ॥
संक्रान्तौ विषुवे चैव स्वजन्मत्रितयेऽयने ।
नवम्यां वा चतुर्दश्यां सितायां शुक्रवासरे ॥ २० ॥

कीर्तयेन्नामसाहस्रं पौर्णमास्यां विशेषतः ।
पौर्णमास्यां चन्द्रबिम्बे ध्यात्वा श्रीललिताम्बिकाम् ॥ २१ ॥
पञ्चोपचारैः सम्पूज्य पठेन्नामसहस्रकम् ।
सर्वे-रोगाः प्रणश्यन्ति दीर्घायुष्यं च विन्दति ॥ २२ ॥
अयमायुष्करो नाम प्रयोगः कल्पचोदितः ।
ज्वरार्तं शिरसि स्पृष्ट्वा पठेन्नामसहस्रकम् ॥ २३ ॥
तत्क्षणात्प्रशमं याति शिरस्तोदो ज्वरोऽपि च ।
सर्वव्याधिनिवृत्त्यर्थं स्पृष्ट्वा भस्म जपेदिदम् ॥ २४ ॥
तद्भस्मधारणादेव नश्यन्ति व्याधयः क्षणात् ।
जलं संमन्त्र्य कुम्भस्थं नामसाहस्रतो मुने ॥ २५ ॥
अभिषिञ्चेद्ग्रहग्रस्तान् ग्रहा नश्यन्ति तत्क्षणात् ।
सुधासागरमध्यस्थां ध्यात्वा श्रीललिताम्बिकाम् ॥ २६ ॥
यः पठेन्नामसाहस्रं विषं तस्य विनश्यति ।
वन्ध्यानां पुत्रलाभाय नामसाहस्रमन्त्रितम् ॥ २७ ॥
नवनीतं प्रदद्यात्तु पुत्रलाभो भवेद्ध्रुवम् ।
देव्याः पाशेन सम्बद्धामाकृष्टामङ्कुशेन च ॥ २८ ॥
ध्यात्वाऽभीष्टां स्त्रियं रात्रौ जपेन्नामसहस्रकम् ।
आयाति स्वसमीपं सा यद्यप्यन्तः पुरं गता ॥ २९ ॥
राजाकर्षणकामश्चेद्राजावसथदिङ्मुखः ।
त्रिरात्रं यः पठेदेतच्छ्रीदेवीध्यानतत्परः ॥ ३० ॥

स राजा पारवश्येन तुरङ्गं वा मतङ्गजम् ।
आरुह्यायाति निकटं दासवत्प्रणिपत्य च ॥ ३१ ॥
तस्मै राज्यं च कोशं च ददात्येव वशं गतः ।
रहस्यनामसाहस्रं यः कीर्तयति नित्यशः ॥ ३२ ॥
तन्मुखालोकमात्रेण मुह्येल्लोकत्रयं मुने ।
यस्त्विदं नामसाहस्रं सकृत्पठति भक्तिमान् ॥ ३३ ॥
तस्य ये शत्रवस्तेषां निहन्ता शरभेश्वरः ।
यो वाऽभिचारं कुरुते नामसाहस्रपाठके ॥ ३४ ॥
निवर्त्य तत्क्रियां हन्यात्तं वै प्रत्यङ्गिरा स्वयम् ।
ये क्रूरदृष्ट्या वीक्षन्ते नामसाहस्रपाठकम् ॥ ३५ ॥
तानन्धान् कुरुते क्षिप्रं स्वयं मार्ताण्डभैरवः ।
धनं यो हरते चोरैर्नामसाहस्रजापिनः ॥ ३६ ॥
यत्र कुत्र स्थितं वाऽपि क्षेत्रपालो निहन्ति तम् ।
विद्यासु कुरुते वादं यो विद्वान्नामजापिना ॥ ३७ ॥
तस्य वाक्स्तम्भनं सद्यः करोति नकुलेश्वरी ।
यो राजा कुरुते वैरं नामसाहस्रजापिना ॥ ३८ ॥
चतुरङ्गबलं तस्य दण्डिनी संहरेत् स्वयम् ।
यः पठेन्नामसाहस्रं षण्मासं भक्तिसंयुतः ॥ ३९ ॥
लक्ष्मीश्चाञ्चल्यरहिता सदा तिष्ठति तद्गृहे ।
मासमेकं प्रतिदिनं त्रिवारं यः पठेन्नरः ॥ ४० ॥

भारती तस्य जिह्वाग्रे रङ्गे नृत्यति नित्यशः ।
यस्त्वेकवारं पठति पक्षमात्रमतन्द्रितः ॥ ४१ ॥
मुह्यन्ति कामवशगा मृगाक्ष्यस्तस्य वीक्षणात् ।
यः पठेन्नामसाहस्रं जन्ममध्ये सकृन्नरः ॥ ४२ ॥
तद्दृष्टिगोचराः सर्वे मुच्यन्ते सर्वकिल्बिषैः ।
यो वेत्ति नामसाहस्रं तस्मै देयं द्विजन्मने ॥ ४३ ॥
अन्नं वस्त्रं धनं धान्यं नान्येभ्यस्तु कदाचन ।
श्रीमन्त्रराजं यो वेत्ति श्रीचक्रं यः समर्चति ॥ ४४ ॥
यः कीर्तयति नामानि तं सत्पात्रं विदुर्बुधाः ।
तस्मै देयं प्रयत्नेन श्रीदेवीप्रीतिमिच्छता ॥ ४५ ॥
न कीर्तयति नामानि मन्त्रराजं न वेत्ति यः ।
पशुतुल्यः स विज्ञेयस्तस्मै दत्तं निरर्थकम् ॥ ४६ ॥
परीक्ष्य विद्याविदुषस्तेभ्यो दद्याद्विचक्षणः ।
श्रीमन्त्रराजसदृशो यथा मन्त्रो न विद्यते ॥ ४७ ॥
देवता ललितातुल्या यथा नास्ति घटोद्भव ।
रहस्यनामसाहस्रतुल्या नास्ति तथा स्तुतिः ॥ ४८ ॥
लिखित्वा पुस्तके यस्तु नामसाहस्रमुत्तमम् ।
समर्चयेत् सदा भक्त्या तस्य तुष्यति सुन्दरी ॥ ४९ ॥
बहुनाऽत्र किमुक्तेन शृणु त्वं कुम्भसम्भव ।
नानेन सदृशं स्तोत्रं सर्वतन्त्रेषु विद्यते ॥ ५० ॥

तस्मादुपासको नित्यं कीर्तयेदिदमादरात् ।
एभिर्नामसहस्रैस्तु श्रीचक्रं योऽर्चयेत् सकृत् ॥ ५१ ॥
पद्मैर्वा तुलसीपुष्पैः कल्हारैर्वा कदम्बकैः ।
चम्पकैर्जातिकुसुमैर्मल्लिकाकरवीरकैः ॥ ५२ ॥
उत्पलैर्बिल्वपत्रैर्वा कुन्दकेसरपाटलैः ।
अन्यैः सुगन्धिकुसुमैः केतकीमाधवीमुखैः ॥ ५३ ॥
तस्य पुण्यफलं वक्तुं न शक्नोति महेश्वरः ।
सा वेत्ति ललितादेवी स्वचक्रार्चनजं फलम् ॥ ५४ ॥
अन्ये कथं विजानीयुर्ब्रह्माद्याः स्वल्पमेधसः ।
प्रतिमासं पौर्णमास्यामेभिर्नामसहस्रकैः ॥ ५५ ॥
रात्रौ यश्चक्रराजस्थामर्चयेत् परदेवताम् ।
स एव ललितारूपस्तद्रूपा ललिता स्वयम् ॥ ५६ ॥
न तयोर्विद्यते भेदो भेदकृत् पापकृद्भवेत् ।
महानवम्यां यो भक्तः श्रीदेवीं चक्रमध्यगाम् ॥ ५७ ॥
अर्चयेन्नामसाहस्रैस्तस्य मुक्तिः करे स्थिता ।
यस्तु नामसहस्रेण शुक्रवारे समर्चयेत् ॥ ५८ ॥
चक्रराजे महादेवीं तस्य पुण्यफलं शृणु ।
सर्वान् कामानवाप्येह सर्वसौभाग्यसंयुतः ॥ ५९ ॥
पुत्रपौत्रादिसंयुक्तो भुक्त्वा भोगान् यथेप्सितान् ।
अन्ते श्रीललितादेव्याः सायुज्यमतिदुर्लभम् ॥ ६० ॥

प्रार्थनीयं शिवाद्यैश्च प्राप्नोत्येव न संशयः ।
यः सहस्रं ब्राह्मणानामेभिर्नामसहस्रकैः ॥ ६१ ॥
समर्च्य भोजयेद्भक्त्या पायसापूपषड्रसैः ।
तस्मै प्रीणाति ललिता स्वसाम्राज्यं प्रयच्छति ॥ ६२ ॥
न तस्य दुर्लभं वस्तु त्रिषु लोकेषु विद्यते ।
निष्कामः कीर्तयेद्यस्तु नामसाहस्रमुत्तमम् ॥ ६३ ॥
ब्रह्मज्ञानमवाप्नोति येन मुच्येत बन्धनात् ।
धनार्थी धनमाप्नोति यशोऽर्थी चाप्नुयाद्यशः ॥ ६४ ॥
विद्यार्थी चाप्नुयाद्विद्यां नामसाहस्रकीर्तनात् ।
नानेन सदृशं स्तोत्रं भोगमोक्षप्रदं मुने ॥ ६५ ॥
कीर्तनीयमिदं तस्माद्भोगमोक्षार्थिभिर्नरैः ।
चतुराश्रमनिष्ठैश्च कीर्तनीयमिदं सदा ॥ ६६ ॥
स्वधर्मसमनुष्ठानवैकल्यपरिपूर्तये ।
कलौ पापैकबहुले धर्मानुष्ठानवर्जिते ॥ ६७ ॥
नामसङ्कीर्तनं मुक्त्वा नृणां नान्यत् परायणम् ।
लौकिकाद्वचनान्मुख्यं विष्णुनामानुकीर्तनम् ॥ ६८ ॥
विष्णुनामसहस्राच्च शिवनामैकमुत्तमम् ।
शिवनामसहस्राच्च देव्या नामैकमुत्तमम् ॥ ६९ ॥
देवीनामसहस्राणि कोटिशः सन्ति कुम्भज ।
तेषु मुख्यं दशविधं नामसाहस्रमुच्यते ॥ ७० ।

रहस्यनामसाहस्रमिदं शस्तं दशस्वपि ।
तस्मात् सङ्कीर्तयेन्नित्यं कलिदोषनिवृत्तये ॥ ७१ ॥
मुख्यं श्रीमातृनामेति न जानन्ति विमोहिताः ।
विष्णुनामपराः केचिच्छिवनामपराः परे ॥ ७२ ॥
न कश्चिदपि लोकेषु ललितानामतत्परः ।
येनान्यदेवतानाम कीर्तितं जन्मकोटिषु ॥ ७३ ॥
तस्यैव भवति श्रद्धा श्रीदेवीनामकीर्तने ।
चरमे जन्मनि यथा श्रीविद्योपासको भवेत् ॥ ७४ ॥
नामसाहस्रपाठश्च तथा चरमजन्मनि ।
यथैव विरला लोके श्रीविद्याचारवेदिनः ॥ ७५ ॥
तथैव विरला गुह्यनामसाहस्रपाठकाः ।
मन्त्रराजजपश्चैव ञ्चक्रराजार्चनं तथा ॥ ७६ ॥
रहस्यनामपाठश्च नाल्पस्य तपसः फलम् ।
अपठन्नामसाहस्रं प्रीणयेद्यो महेश्वरीम् ॥ ७७ ॥
स चक्षुषा विना रूपं पश्येदेव विमूढधीः ।
रहस्यनामसाहस्रं त्यक्त्वा यः सिद्धिकामुकः ॥ ७८ ॥
स भोजनं विना नूनं क्षुन्निवृत्तिमभीप्सति ।
यो भक्तो ललितादेव्याः स नित्यं कीर्तयेदिदम् ॥ ७९ ॥
नान्यथा प्रीयते देवी कल्पकोटिशतैरपि ।
तस्माद्रहस्यनामानि श्रीमातुः प्रयतः पठेत् ॥ ८० ॥

इति ते कथितं स्तोत्रं रहस्यं कुम्भसम्भव ।
नाविद्यावेदिने ब्रूयान्नाभक्ताय कदाचन ॥ ८१ ॥
यथैव गोप्या श्रीविद्या तथा गोप्यमिदं मुने ।
पशुतुल्येषु न ब्रूयाज्जनेषु स्तोत्रमुत्तमम् ॥ ८२ ॥
यो ददाति विमूढात्मा श्रीविद्यारहिताय च ।
तस्मै कुप्यन्ति योगिन्यः सोऽनर्थः सुमहान् स्मृतः ॥ ८३ ॥
रहस्यनामसाहस्रं तस्मात् सङ्गोपयेदिदम् ।
स्वतन्त्रेण मया नोक्तं तवापि कलशीसुत ॥ ८४ ॥
ललिताप्रेरणेनैव मयोक्तं स्तोत्रमुत्तमम् ।
कीर्तनीयमिदं भक्त्या कुम्भयोने निरन्तरम् ॥ ८५ ॥
तेन तुष्टा महादेवी तवाभीष्टं प्रदास्यति ।

श्रीसूत उवाच –

इत्युक्त्वा श्रीहयग्रीवो ध्यात्वा श्रीललिताम्बिकाम् ।
आनन्दमग्नहृदयः सद्यः पुलकितोऽभवत् ॥ ८६ ॥

इति श्रीब्रह्माण्डपुराणे उत्तरखण्डे श्रीहयग्रीवागस्त्य संवादे
श्रीललितानामसहस्रफलनिरूपणं सम्पूर्णम् ॥



## ॥ उपदेशपञ्चकम् ॥ [56]

श्री शङ्कराचार्यकृतम्



वेदो नित्यमधीयतां तदुदितं कर्म स्वनुष्ठीयतां
तेनेशस्य विधीयतामपचितिः काम्ये मतिस्त्यज्यताम्।
पापौघः परिधूयतां भवसुखे दोषोऽनुसन्धीयताम्
आत्मेच्छा व्यवसीयतां निजगृहात्तूर्णं विनिर्गम्यताम्॥ १ ॥

सङ्गः सत्सु विधीयतां भगवतो भक्तिर्दृढाऽऽधीयतां
शान्त्यादिः परिचीयतां दृढतरं कर्माशु सन्त्यज्यताम्।
सद्विद्वानुपसर्प्यतां प्रतिदिनं तत्पादुका सेव्यतां
ब्रह्मैकाक्षरमर्थ्यतां श्रुतिशिरोवाक्यं समाकर्ण्यताम् ॥ २ ॥

वाक्यार्थश्च विचार्यतां श्रुतिशिरःपक्षः समाश्रीयतां
दुस्तर्कात्सुविरम्यतां श्रुतिमतस्तर्कोऽनुसन्धीयताम्।
ब्रह्मास्मीति विभाव्यतामहरहर्गर्वः परित्यज्यतां
देहेऽहम्मतिरुज्झ्यतां बुधजनैर्वादः परित्यज्यताम् ॥ ३ ॥

क्षुद्व्याधिश्च चिकित्स्यतां प्रतिदिनं भिक्षौषधं भुज्यतां
स्वाद्वन्नं न तु याच्यतां विधिवशात्प्राप्तेन सन्तुष्यताम्।
शीतोष्णादि विषह्यतां न तु वृथा वाक्यं समुच्चार्यतां
औदासीन्यमभीप्स्यतां जनकृपानैष्ठुर्यमुत्सृज्यताम् ॥ ४ ॥

एकान्ते सुखमास्यतां परतरे चेतः समाधीयतां
पूर्णात्मा सुसमीक्ष्यतां जगदिदं तद्बाधितं दृश्यताम्।
प्राक्कर्म प्रविलाप्यतां चितिबलान्नाप्युत्तरैः श्लिष्यतां
प्रारब्धं त्विह भुज्यतामथ परब्रह्मात्मना स्थीयताम् ॥ ५ ॥

यः श्लोकपञ्चकमिदं पठते मनुष्यः
सञ्चिन्तयत्यनुदिनं स्थिरतामुपेत्य।
तस्याशु संसृतिदवानलतीव्रघोरतापः
प्रशान्तिमुपयाति चितिप्रसादात् ॥ ६ ॥

---

## आदिदेव नमस्तुभ्यम् [57]

आदिदेव नमस्तुभ्यं प्रसीद मम भास्कर ।
दिवाकर नमस्तुभ्यं प्रभाकर नमोऽस्तु ते ॥

शिव : सूर्याष्टकम्

O Thou premeval Being, Salutations to Thee. O Thou Being resplendent, be gracious unto me. O Thou Creator of day, I bow to Thee. O Thou divine illuminator, salutation to Thee.

## ॥ षट्पदीस्तोत्रम् ॥ [58]

श्री शङ्कराचार्यकृतम्

अविनयमपनय विष्णो दमय मनः शमय विषयमृगतृष्णाम्।
भूतदयां विस्तारय तारय संसारसागरतः ॥ १ ॥

दिव्यधुनीमकरन्दे परिमलपरिभोगसच्चिदानन्दे।
श्रीपतिपदारविन्दे भवभयखेदच्छिदे वन्दे ॥ २ ॥

सत्यपि भेदापगमे नाथ तवाहं न मामकीनस्त्वम्।
सामुद्रो हि तरङ्गः क्वचन समुद्रो न तारङ्गः ॥ ३ ॥

उद्धृतनग नगभिदनुज दनुजकुलामित्र मित्रशशिदृष्टे।
दृष्टे भवति प्रभवति न भवति किं भवतिरस्कारः ॥ ४ ॥

मत्स्यादिभिरवतारै रवतारवतावता सदा वसुधाम्।
परमेश्वर परिपाल्यो भवता भवतापभीतोऽहम् ॥ ५ ॥

दामोदर गुणमन्दिर सुन्दरवदनारविन्द गोविन्द।
भवजलधिमथनमन्दर परमं दरमपनय त्वं मे ॥ ६ ॥

नारायण करुणामय शरणं करवाणि तावकौ चरणौ।
इति षट्पदी मदीये वदनसरोजे सदा वसतु ॥ ७ ॥

* * *

# ॥ पातञ्जल-योगसूत्रपाठः ॥ *

## ॥ प्रथमोऽध्यायः ॥

## समाधि-पादः

अथ योगानुशासनम् ॥१॥ योगश्चित्तवृत्तिनिरोधः ॥२॥ तदा द्रष्टुः स्वरूपेऽवस्थानम् ॥३॥ वृत्तिसारूप्यमितरत्र ॥४॥ वृत्तयः पंचतय्यः क्लिष्टा अक्लिष्टाः ॥५॥ प्रमाण-विपर्यय-विकल्प-निद्रा-स्मृतयः ॥६॥ प्रत्यक्षानुमानागमाः प्रमाणानि ॥७॥ विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम् ॥८॥ शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः ॥९॥

अभाव-प्रत्ययालम्बना-वृत्तिर्निद्रा ॥१०॥ अनुभूतविषया-सम्प्रमोषः स्मृतिः ॥११॥ अभ्यासवैराग्याभ्यां तन्निरोधः ॥१२॥ तत्र स्थितौ यत्नोऽभ्यासः ॥१३॥ स तु दीर्घकाल नैरन्तर्य-सत्कारासेवितो दृढभूमिः ॥१४॥ दृष्टानुश्रविक-विषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम् ॥१५॥ तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यम् ॥१६॥

वितर्कविचारानन्दास्मितानुगमात् सम्प्रज्ञातः ॥१७॥ विरामप्रत्ययाभ्यासपूर्वः संस्कार-शेषोऽन्यः ॥१८॥ भव-प्रत्ययो विदेह-प्रकृतिलयानाम् ॥१९॥ श्रद्धा-वीर्य-स्मृति-समाधि-प्रज्ञापूर्वक इतरेषाम् ॥२०॥ तीव्रसंवेगानामासन्नः ॥२१॥ मृदुमध्याधिमात्रत्वात्ततोऽपि विशेषः ॥२२॥ ईश्वरप्रणिधानाद्वा ॥२३॥

क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुष-विशेष ईश्वरः ॥२४॥ तत्र निरतिशयं सर्वज्ञत्व-बीजम् ॥२५॥ स पूर्वेषामपि गुरुः कालेनानवच्छेदात् ॥२६॥ तस्य वाचकः प्रणवः ॥२७॥ तज्जपस्तदर्थभावनम् ॥२८॥

ततः प्रत्यक्-चेतनाधिगमोऽप्यन्तरायाभावश्च ॥२९॥ व्याधि-स्त्यान-संशय-प्रमादालस्याविरति-भ्रान्तिदर्शनालब्ध-भूमिकत्वानवस्थितत्वानि चित्त-विक्षेपास्तेऽन्तरायाः ॥३०॥

दुःख-दौर्मनस्याङ्गमेजयत्व-श्वासप्रश्वासा विक्षेपसहभुवः ॥३१॥ तत्प्रतिषेधार्थमेकतत्त्वाभ्यासः ॥३२॥ मैत्री करुणा-मुदितोपेक्षाणां सुख-दुःखपुण्यापुण्य-विषयाणां भावनातश्चित्तप्रसादनम् ॥३३॥ प्रच्छर्दन-विधारणाभ्यां वा प्राणस्य ॥३४॥ विषयवती वा प्रवृत्तिरुत्पन्ना मनसः स्थिति-निबन्धिनी ॥३५॥ विशोका वा ज्योतिष्मती ॥३६॥ वीतरागविषयं वा चित्तम् ॥३७॥

स्वप्ननिद्राज्ञानालम्बनं वा ॥३८॥ यथाऽभिमतध्यानाद्वा ॥३९॥ परमाणु परममहत्त्वान्तोऽस्य वशीकारः ॥४०॥ क्षीणवृत्तेरभिजातस्येव मणेर्ग्रहीतृ-ग्रहण-ग्राह्येषु तत्स्थ-तदञ्जनता समापत्तिः ॥४१॥ तत्र शब्दार्थज्ञानविकल्पैः सङ्कीर्णा सवितर्का समापत्तिः ॥४२॥ स्मृतिपरिशुद्धौ स्वरूपशून्येवार्थमात्रनिर्भासा निर्वितर्का ॥४३॥ एतयैव सविचारा निर्विचारा च सूक्ष्मविषया व्याख्याता ॥४४॥

सूक्ष्मविषयत्वञ्चालिङ्ग-पर्यवसानम् ।।४५।। ता एवा सबीजः समाधिः ।।४६।। निर्विचार-वैशारद्येऽध्यात्म-प्रसादः ।।४७।। ऋतम्भरा तत्र प्रज्ञा ।।४८।। श्रुतानुमानप्रज्ञाभ्यामन्यविषया विशेषार्थत्वात् ।।४९।। तज्जः संस्कारोऽन्यसंस्कारप्रतिबन्धी ।।५०।। तस्यापि निरोधे सर्वनिरोधान्निर्बीजः समाधिः ।।५१।।

## ।। द्वितीयोऽध्यायः ।।
## साधन-पादः

तपः-स्वाध्यायेश्वरप्रणिधानानि क्रियायोगः ।।१।। समाधि-भावनार्थः क्लेश-तनूकरणार्थश्च ।।२।। अविद्याऽ-स्मिता-राग-द्वेषाभिनिवेशाः पञ्चक्लेशाः ।।३।। अविद्या क्षेत्रमुत्तरेषां प्रसुप्त-तनु-विच्छिन्नोदाराणाम् ।।४।। अनित्याशुचि-दुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या ।।५।। दृग्दर्शनशक्त्योरेकात्मतेवास्मिता ।।६।।

सुखानुशयी रागः ।।७।। दुःखानुशयी द्वेषः ।।८।। स्वर-सवाही विदुषोऽपि तथारूढोऽभिनिवेशः ।।९।। ते प्रति प्रसवहेयाः सूक्ष्माः ।।१०।। ध्यानहेयास्तद्वृत्तयः ।।११।। क्लेशमूलः कर्माशयो दृष्टादृष्टजन्मवेदनीयः ।।१२।। सति मूले तद्विपाको जात्यायुर्भोगाः ।।१३।। ते ह्लादपरितापफलाः पुण्यापुण्यहेतुत्वात् ।।१४।। परिणामताप-संस्कारदुःखैर्गुण वृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः ।।१५।।

हेयं दुःखमनागतम् ॥१६॥ द्रष्टृदृश्ययोः संयोगो हेयहेतु ॥१७॥ प्रकाश-क्रिया-स्थितिशीलं-भूतेन्द्रियात्मकं भोगापवर्गार्थं दृश्यम् ॥१८॥ विशेषाविशेष-लिङ्गमात्रा-लिङ्गानि गुणपर्वाणि ॥१९॥ द्रष्टा दृशिमात्रः शुद्धोऽपि प्रत्ययानुपश्यः ॥२०॥ तदर्थ एव दृश्यस्यात्मा ॥२१॥ कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारणत्वात् ॥२२॥ स्वस्वामिशक्त्योः स्वरूपोपलब्धिहेतुः संयोगः ॥२३॥

तस्य हेतुरविद्या ॥२४॥ तदभावात् संयोगाभावो हानं तद्दृशेः कैवल्यम् ॥२५॥ विवेकख्यातिरविप्लवा हानोपायः ॥२६॥ तस्य सप्तधा प्रान्तभूमिः प्रज्ञा ॥२७॥ योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानदीप्तिराविवेक-ख्यातेः ॥२८॥ यमनियमासनप्राणायाम-प्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि ॥२९॥ अहिंसा-सत्यास्तेय-ब्रह्मचर्या-परिग्रहा यमाः ॥३०॥

एते जाति-देश-काल-समयानवच्छिन्नाः सार्वभौमा महाव्रतम् ॥३१॥ शौच-सन्तोष-तपः-स्वाध्यायेश्वर-प्रणिधानानि नियमाः ॥३२॥ वितर्कबाधने प्रतिपक्षभावनम् ॥३३॥ वितर्का हिंसादयः कृतकारितानुमोदिता लोभक्रोध-मोहपूर्वका मृदुमध्याधि-मात्रा दुःखाज्ञानानन्तफला इति प्रतिपक्षभावनम् ॥३४॥ अहिंसाप्रतिष्ठायां तत्सन्निधौ वैरत्यागः ॥३५॥

सत्यप्रतिष्ठायां क्रियाफलाश्रयत्वम् ॥३६॥ अस्तेयप्रतिष्ठायां सर्वरत्नोपस्थानम् ॥३७॥ ब्रह्मचर्यप्रतिष्ठायां वीर्यलाभः ॥३८॥ अपरिग्रहस्थैर्ये जन्मकथन्तासंबोधः ॥३९॥ शौचात्स्वाङ्गजुगुप्सा परैरसंसर्गः ॥४०॥

सत्त्वशुद्धिसौमनस्यैकाग्र्येन्द्रिय-जयात्मदर्शन-योग्यत्वानि च ॥४१॥ सन्तोषादनुत्तमः सुखलाभः ॥४२॥

कायेन्द्रियसिद्धिरशुद्धिक्षयात्तपसः ॥४३॥ स्वाध्यायादिष्टदेवतासम्प्रयोगः ॥४४॥ समाधिसिद्धिरीश्वरप्रणिधानात् ॥४५॥ स्थिरसुखमासनम् ॥४६॥ प्रयत्नशैथिल्यानन्तसमापत्तिभ्याम् ॥४७॥ ततो द्वन्द्वानभिघातः ॥४८॥ तस्मिन् सति श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः ॥४९॥

बाह्याभ्यन्तरस्तम्भवृत्तिः देशकालसंख्याभिः परिदृष्टो दीर्घसूक्ष्मः ॥५०॥ बाह्याभ्यन्तरविषयाक्षेपी चतुर्थः ॥५१॥ ततः क्षीयते प्रकाशावरणम् ॥५२॥ धारणासु च योग्यता मनसः ॥५३॥ स्वविषयासम्प्रयोगे चित्तस्वरूपानुकार इवेन्द्रियाणां प्रत्याहारः ॥५४॥ ततः परमा वश्यतेन्द्रियाणाम् ॥५५॥



## ॥ तृतीयोऽध्यायः ॥

## विभूति-पादः

देशबन्धश्चित्तस्य धारणा ॥१॥ तत्र प्रत्ययैकतानता ध्यानम् ॥२॥ तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः ॥३॥ त्रयमेकत्र संयमः ॥४॥ तज्जयात् प्रज्ञाऽऽ-लोकः ॥५॥ तस्य भूमिषु विनियोगः ॥६॥ त्रयमन्तरङ्गं पूर्वेभ्यः ॥७॥ तदपि बहिरङ्गं निर्बीजस्य ॥८॥ व्युत्थान-निरोध-संस्कारयोरभिभव-प्रादुर्भावौ निरोध-क्षणचित्तान्वयो निरोध-परिणामः ॥९॥ तस्य प्रशान्तवाहिता संस्कारात् ॥१०॥ सर्वार्थतैकाग्रतयोः क्षयोदयौ चित्तस्य समाधि-परिणामः ॥११॥ शान्तोदितौ तुल्यप्रत्ययौ चित्तस्यैकाग्रता-परिणामः ॥१२॥ एतेन भूतेन्द्रियेषु धर्मलक्षणावस्थापरिणामा व्याख्याताः ॥१३॥ शान्तोदिताव्यपदेश्यधर्मानुपाती धर्मी ॥१४॥ क्रमान्यत्वं परिणामान्यत्वे हेतुः ॥१५॥ परिणामत्रयसंयमादतीतानागत-ज्ञानम् ॥१६॥

शब्दार्थप्रत्ययानामितरेतराध्यासात्सङ्करस्तत्-प्रविभाग-संयमात्-सर्वभूत-रुतज्ञानम् ॥१७॥ संस्कारसाक्षात्करणात्-पूर्वजातिज्ञानाम् ॥१८॥ प्रत्ययस्य परचित्तज्ञानम् ॥१९॥ न च तत् सालम्बनं तस्याविषयीभूतत्वात् ॥२०॥ कायरूपसंयमात्-तद्ग्राह्यशक्तिस्तम्भे चक्षुःप्रकाशासंयोगेऽन्तर्धानम् ॥२१॥

एतेन शब्दाद्यन्तर्धानमुक्तम् ॥२२॥ सोपक्रमं निरुपक्रमं च कर्म तत्संयमादपरान्त ज्ञानमरिष्टेभ्यो वा ॥२३॥ मैत्र्यादिषु बलानि ॥२४॥ बलेषु हस्तिबलादीनि ॥२५॥ प्रवृत्यालोकन्यासात् सूक्ष्म-व्यवहित-विप्रकृष्टज्ञानम् ॥२६॥ भुवनज्ञानं सूर्ये संयमात् ॥२७॥ चन्द्रे ताराव्यूहज्ञानम् ॥२८॥ ध्रुवे तद्गतिज्ञानम् ॥२९॥ नाभिचक्रे कायव्यूह-ज्ञानम् ॥३०॥

कण्ठकूपे क्षुत्पिपासा-निवृत्तिः ॥३१॥ कूर्मनाड्यां स्थैर्यम् ॥३२॥ मूर्धज्योतिषि सिद्ध-दर्शनम् ॥३३॥ प्रातिभाद्वा सर्वम् ॥३४॥ हृदये चित्त-संवित् ॥३५॥ सत्त्वपुरुषयो-रत्यन्तासंकीर्णयोः प्रत्ययाविशेषाद् भोगः परार्थत्वात् स्वार्थ-संयमात् पुरुषज्ञानम् ॥३६॥ ततः प्रातिभश्रावणवेदना-दर्शास्वादवार्ता जायन्ते ॥३७॥ ते समाधावुपसर्गा व्युत्थाने सिद्धयः ॥३८॥

बन्धकारणशैथिल्यात् प्रचारसंवेदनाच्च चित्तस्य परशरीरा-वेशः ॥३९॥ उदानजयाज्जल-पङ्ककण्टकादिष्वसङ्ग उत्-क्रान्तिश्च ॥४०॥ समानजयात् प्रज्वलनम् ॥४१॥ श्रोत्राकाशयोः सम्बन्धसंयमाद्दिव्यं श्रोत्रम् ॥४२॥ कायाकाशयोः सम्बन्धसंयमाल्लघुतूल-समापत्तेश्चाकाश-गमनम् ॥४३॥ बहिरकल्पिता वृत्तिर्महाविदेहा ततः प्रकाशावरणक्षयः ॥४४॥

स्थूल-स्वरूप-सूक्ष्मान्वयार्थवत्त्वसंयमाद्भूतजयः ॥४५॥ ततोऽणिमादिप्रादुर्भावः कायसम्पत्तद्धर्मानभिघातश्च ॥४६॥ रूप-लावण्य-बल-वज्रसंहननत्वानि कायसम्पत् ॥४७॥ ग्रहण-स्वरूपास्मितान्वयार्थवत्त्वसंयमादिन्द्रियजयः ॥४८॥ ततो मनोजवित्वं विकरणभावः प्रधानजयश्च ॥४९॥ सत्त्वपुरुषान्यताख्याति-मात्रस्य सर्वभावाधिष्ठातृत्वं सर्वज्ञातृत्वञ्च ॥५०॥

तद्वैराग्यादपि दोषबीजक्षये कैवल्यम् ॥५१॥ स्थान्युप निमन्त्रणे सङ्गस्मयाकरणं पुनरनिष्टप्रसङ्गात् ॥५२॥ क्षण-तत्क्रमयोः संयमाद्विवेकजं ज्ञानम् ॥५३॥ जाति-लक्षण-देशैरन्यताऽनवच्छेदात्-तुल्ययोस्ततः प्रतिपत्तिः ॥५४॥ तारकं सर्वविषयं सर्वथाविषयमक्रमञ्चेति विवेकजं ज्ञानम् ॥५५॥ सत्त्वपुरुषयोः शुद्धिसाम्ये कैवल्यमिति ॥५६॥

## ॥ चतुर्थोऽध्यायः ॥

## कैवल्य-पादः

जन्मौषधि-मन्त्र-तपः समाधिजाः सिद्धयः ॥१॥ जात्यन्तर-परिणामः प्रकृत्यापूरात् ॥२॥ निमित्तमप्रयोजकं प्रकृतीनां वरण भेदस्तु ततः क्षेत्रिकवत् ॥३॥ निर्माणचित्तान्यस्मितामात्रात् ॥४॥ प्रवृत्तिभेदे प्रयोजकं चित्तमेकमनेकेषाम् ॥५॥ तत्र ध्यानजमनाशयम् ॥६॥

कर्माशुक्लाकृष्णं योगिनस्त्रिविधमितरेषाम् ॥७॥ ततस्तद्विपाकानुगुणानामेवाभिव्यक्तिर्वासनानाम् ॥८॥ जाति-देश-काल-व्यवहितानामप्यानन्तर्यं स्मृतिसंस्कारयोरेकरूपत्वात् ॥९॥ तासामनादित्वं चाशिषो नित्यत्वात् ॥१०॥ हेतुफलाश्रयालम्बनैः संगृहीतत्वादेषामभावे तदभावः ॥११॥ अतीतानागतं स्वरूपतोऽस्त्यध्वभेदाद्धर्माणाम् ॥१२॥

ते व्यक्त-सूक्ष्मा गुणात्मानः ॥१३॥ परिणामैकत्वाद्वस्तुतत्त्वम् ॥१४॥ वस्तुसाम्ये चित्तभेदात्तयोर्विभक्तः पन्थाः ॥१५॥ न चैकचित्ततन्त्रं वस्तु तदप्रमाणकं तदा किं स्यात् ॥१६॥ तदुपरागापेक्षित्वाच्चित्तस्य वस्तु ज्ञाताज्ञातम् ॥१७॥ सदा ज्ञाताश्चित्तवृत्तयस्तत्प्रभोः पुरुषस्यापरिणामित्वात् ॥१८॥ न तत् स्वाभासं दृश्यत्वात् ॥१९॥ एकसमये चोभयानवधारणम् ॥२०॥

चित्तान्तरदृश्ये बुद्धिबुद्धेरतिप्रसङ्गः स्मृतिसङ्करश्च ॥२१॥ चित्तेरप्रति-संक्रमायास्तदाकारापत्तौ स्वबुद्धिसंवेदनम् ॥२२॥ द्रष्टृ-दृश्योपरक्तं चित्तं सर्वार्थम् ॥२३॥ तदसंख्येयवासनाभि-श्चित्रमपि परार्थं संहत्यकारित्वात् ॥२४॥ विशेषदर्शिन आत्मभाव-भावनानिवृत्तिः ॥२५॥ तदा विवेकनिम्नं कैवल्यप्राग्भावं चित्तम् ॥२६॥ तच्छिद्रेषु प्रत्ययान्तराणि संस्कारेभ्यः ॥२७॥ हानमेषां क्लेशवदुक्तम् ॥२८॥

प्रसंख्यानेऽप्यकुसीदस्य सर्वथा विवेकख्यातेर्धर्ममेघः समाधिः ॥२९॥ ततः क्लेशकर्मनिवृत्तिः ॥३०॥ तदा सर्वावरणमलापेतस्य ज्ञानस्याऽनन्त्याज्ज्ञेयमल्पम् ॥३१॥ ततः कृतार्थानां परिणामक्रमसमाप्तिर्गुणानाम् ॥३२॥ क्षणप्रतियोगी परिणामापरान्तनिर्ग्राह्यः क्रमः ॥३३॥ पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तेरिति ॥३४॥



## ॥ त्रिवेणीस्तोत्रम् ॥ [59]

श्री शङ्कराचार्य-कृतम्

श्रीगणेशाय नमः । मुक्तामयालंकृतमुद्रवेणी भक्ताभयत्राण सुबद्धवेणी । मत्तालिगुञ्जन्मकरन्दवेणी श्रीमत्प्रयागे जयति त्रिवेणी ॥१॥

लोकत्रयैश्वर्यनिदानवेणी तापत्रयोच्चाटनबद्धवेणी ।
धर्मार्थकामाकलनैकवेणी श्रीमत्प्रयागे जयति त्रिवेणी ॥२॥

मुक्ताङ्गनामोहनसिद्धवेणी भक्तांतरानंदसुबोधवेणी ।
वृत्त्यन्तरोद्वेगविवेकवेणी श्रीमत्प्रयागे जयति त्रिवेणी ॥३॥

दुग्धोदधिस्फूर्जसुभद्रवेणी नीलाभ्रशोभाललिता च वेणी ।
स्वर्णप्रभाभासुरमध्यवेणी श्रीमत्प्रयागे जयति त्रिवेणी ॥४॥

विश्वेश्वरोत्तुङ्गकपर्दिवेणी विरिञ्चिविष्णुप्रणतैकवेणी ।
त्रयी पुराणा सुरसार्धवेणी श्रीमत्प्रयागे जयति त्रिवेणी ॥५॥

माङ्गल्य संपत्तिसमृद्धवेणी मात्रांतरन्यस्तनिदानवेणी ।
परम्परा पातकहारिवेणी श्रीमत्प्रयागे जयति त्रिवेणी ॥६॥

निमज्जदुन्मज्जमनुष्यवेणी त्रयोदयीभाग्यविवेकवेणी ।
विमुक्तजन्माविभवैकवेणी श्रीमत्प्रयागे जयति त्रिवेणी ॥७॥

सौन्दर्यवेणी सुरसार्धवेणी माधुर्यवेणी महनीयवेणी ।
रत्नैकवेणी रमणीयवेणी श्रीमत्प्रयागे जयति त्रिवेणी ॥८॥

सारस्वताकारविधातवेणी कालिन्दकन्यामयलक्ष्यवेणी ।
भागीरथीरूपमहेशवेणी श्रीमत्प्रयागे जयति त्रिवेणी ॥९॥

श्रीमद्भवानी भवनैकवेणी लक्ष्मीसरस्वत्यभिमानवेणी ।
माता त्रिवेणी त्रयीरत्नवेणी श्रीमत्प्रयागे जयति त्रिवेणी ॥१०॥

त्रिवेणीदशकं स्तोत्रं प्रातर्नित्यं पठेन्नरः ।
तस्य वेणी प्रसन्ना स्याद्विष्णुलोकं स गच्छति ॥११॥

दिव्यस्तोत्रम् ]

## ॥ स्वरूपानुसन्धानम् ॥ [60]

दयालुं गुरुं ब्रह्मनिष्ठं प्रशान्तं समाराध्य मत्या विचार्य स्वरूपम्।
यदाप्नोति तत्त्वं निदिध्यास्य विद्वान् परं ब्रह्म नित्यं तदेवाहमस्मि॥

यदानन्दरूपं प्रकाशस्वरूपं निरस्तप्रपञ्चं परिच्छेदशून्यम्।
अहं ब्रह्मवृत्त्यैकगम्यं तुरीयं परं ब्रह्म नित्यं तदेवाहमस्मि॥

यदज्ञानतो भाति विश्वं समस्तं विनष्टं च सद्यो यदात्मप्रबोधे।
मनोवागतीतं विशुद्धं विमुक्तं परं ब्रह्म नित्यं तदेवाहमस्मि॥

- स्वरूपानुसन्धानम् २, ३, ४
(श्रीशङ्कराचार्यः)

## ।। ब्रह्मकृतसरस्वतीस्तोत्रम् ।। [61]

ऐं ऐं ऐं इष्टमन्त्रे कमलभवमुखाम्भोजभूतिस्वरूपे ।
रूपारूपप्रकाशे सकलगुणमये निर्गुणे निर्विकारे ।।
न स्थूले नैव सूक्ष्मेऽप्यविदितविभवे नापि विज्ञानतत्त्वे।
विश्वे विश्वान्तरात्मे सुरवरनमिते निष्कले नित्यशुध्दे ।।

Charmed greatly with beejakshara ऐं ऐं ऐं (a mystical syllable) you are the embodiment of all prosperity and riches for Brahma's Lotus face. Thou revealest both the form and the formless. Thou art the embodiment of all attributes. Thou, again, art without attributes and change. Thou art neither gross nor subtle, and Thy glory is incomprehensible. Thou art beyond knowledge. Thou art everything, the inmost self of everything, the object of adoration even to the chief of gods. Thou art indivisible and eternally pure.

ह्रीं ह्रीं ह्रीं जापतुष्टे हिमरुचिमुकुटे वल्लकीव्यग्रहस्ते ।
मातर्मातर्नमस्ते दह दह जडतां देहि बुद्धिं प्रशान्ताम् ।।
विद्ये वेदान्तवेद्ये परिणतपठिते मोक्षदे मुक्तिमार्गे ।
मार्गातीतस्वरूपे भव मम वरदा शारदे शुभ्रहारे ।।

You rejoice with beejakshara of ह्रीं ह्रीं ह्रीं. Adorned with a crown shining like sparkling snow, you are eagerly occupied in playing veena with your hands. Thou art knowledge supreme. Thou art known through the highest revelation and Thy glory is recited by the perfect ones. Thou art the giver of salvation, Thou art the way to salvation, but yet transcend it. Be propitious unto me, O Thou Goddess of learning. Be pleased to remove my dullness, and endow me with a keen and tranquil understanding.

---

नमस्ते परमं ब्रह्म नमस्ते परमात्मने ।
निर्गुणाय नमस्तुभ्यं सद्रूपाय नमो नमः ।।

महानिर्वाणतंत्रः (III, 74)

I bow to Thee, the supreme Brahman. I bow to Thee, the supreme Self. I bow to Thee who art above all qualities. I bow to Thee, the ever-existent, again and again.

---

सर्वस्वरूपे सर्वेशे सर्वशक्तिसमन्विते ।
भयेभ्यस्त्राहि नो देवि दुर्गे देवि नमोऽस्तु ते ।।

देवीमाहात्म्यम् (XI, 23)

O Mother, Thou art in the form of all things. Thou dost control all. Thou art the embodiment of all power, do Thou protect us from all fear. O remover of all ills, salutations to Thee.

---

सत्संगत्वे निस्संगत्वं निस्संगत्वे निर्मोहत्वम् ।
निर्मोहत्वे निश्चलतत्त्वं निश्चलतत्त्वे जीवन्मुक्तिः ।।

Association of virtuous people leading pure life results in detachment; Detachment leads to freedom from delusion; Undeluded, one contacts changeless Reality; Contact with Reality bestows Liberation-while-alive.

**- Sri Sankaracharya**

# गीतागङ्गोदकम्

[ श्रीमद्भगवद्गीता ]

## अध्यायः ४

यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन ।
ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ।३७।
न हि ज्ञानेन सदृशं पवित्रमिह विद्यते ।
तत्स्वयं योगसंसिद्धः कालेनात्मनि विन्दति ।३८।
श्रद्धावाँल्लभते ज्ञानं तत्परः संयतेन्द्रियः ।
ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति ।३९।

## अध्यायः ६

उद्धरेदात्मनात्मानं नात्मानमवसादयेत् ।
आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ।५।
बन्धुरात्मात्मनस्तस्य येनात्मैवात्मना जितः ।
अनात्मनस्तु शत्रुत्वे वर्तेतात्मैव शत्रुवत् ।६।
जितात्मनः प्रशान्तस्य परमात्मा समाहितः ।
शीतोष्णसुखदुःखेषु तथा मानापमानयोः ।७।
ज्ञानविज्ञानतृप्तात्मा कूटस्थो विजितेन्द्रियः ।
युक्त इत्युच्यते योगी समलोष्टाश्मकाञ्चनः ।८।

## अध्यायः १६

अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः ।
दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ।१।
अहिंसा सत्यमक्रोधस्त्यागः शान्तिरपैशुनम् ।
दया भूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम् ।२।
तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता ।
भवन्ति सम्पदं दैवीमभिजातस्य भारत ।३।

## अध्यायः १८

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया ।६१।
तमेव शरणं गच्छ सर्वभावेन भारत ।
तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम् ।६२।

## गीतामाहात्म्यम्

मलनिर्मोचनं पुंसां जलस्नानं दिने दिने ।
सकृद्गीताम्भसि स्नानं संसारमलनाशनम् ॥
भारतामृतसर्वस्वं विष्णोर्वक्त्राद्विनिःसृतम् ।
गीतागङ्गोदकं पीत्वा पुनर्जन्म न विद्यते ॥
सर्वोपनिषदो गावो दोग्धा गोपालनन्दनः ।
पार्थो वत्सः सुधीर्भोक्ता दुग्धं गीतामृतं महत् ॥

❀ ❀ ❀

## विविध श्लोकाः







# स्वामी विवेकानन्द

नमः श्रीयतिराजाय विवेकानन्दसूरये ।
सच्चित्सुखस्वरूपाय स्वामिने तापहारिणे ।।

– स्वामी रामकृष्णानन्दः

**Salutation to that king of renouncers and controller of passions, the sage, Vivekananda who is Sachchidananda, (Existence, Knowledge and Bliss Absolute) Itself, the spiritual preceptor, the remover of distress.**



# श्री रामकृष्ण मन्दिरम् - बेलूर मठ

सर्वस्तरतु दुर्गाणि सर्वो भद्राणि पश्यतु ।
सर्वस्सद्बुद्धिमाप्नोतु सर्वः सर्वत्र नन्दतु ॥

**May all be freed from dangers. May all realise what is good. May all be actuated by noble thoughts. May all rejoice everywhere.**

